# स्वयम्भूपुराणम्।

ॐ नमः।

श्रीसम्भवे ज्योतीरूपाय[1]।

ॐ[2] नमो बुद्धाय धर्माय सङ्घरूपाय वै नमः।
[3]स्वयम्भुवे [4]वियच्क्रान्तभानवे धर्मधातवे ॥
भवार्णवसमुत्तारकारुण्यागारमूर्त्तये।
जगदाह्लादरूपाय नमस्तु[5] सम्भुवे[6] सदा ॥
अस्तिनास्तिस्वरूपाय ज्ञानरूपस्वरूपिणे।
शून्यरूपस्वरूपाय नानारूपाय[7] ते नमः ॥
ब्रह्मेन्द्रादिगणैर्देवैर्दानवैस्फणिभिस्तथा।
विद्याधरैराक्षसैश्च यक्षैः किन्नरैमानवैः[8] ॥
मुनिभिर्भिक्षुभिक्षुणीराजण्यैवैश्यजैस्तथा[9]।
शूद्रादिभिर्ज्जनैः सर्वैं वन्दिताय च सर्वदा ॥
रागद्वेषम्मोहादिनानादुःखविदारकम्।
सर्वलोकसमुत्तारं धर्मधातुं सदा भजे ॥

१ D ओं नमः श्रीस्वयम्भूज्योतीरूपबुद्धाय। २ D omits ॐ। ३ D स्वायम्भुवे। ४ B D वियच्क्रान्त०। ५ नमोऽस्तु। ६ C सम्भवे। ७ B omits नानारूपाय। ८ D यक्षकिन्नरमानवैः। ९ B has मुनिभिर्भिक्षुणीराजन्यैर्वैश्यजैस्तथा।

धर्मधातुजगन्नाथः सद्धर्मदेशको गुरुः ।
घोरसंसारउत्तारः पायाद्वः[1] पावनं पदम् ॥
श्रोतृतां परमं भक्त्या धर्मधातुसमुद्भवम्[2] ।
सर्वपापविनाशार्थं[3] सर्वकामफलार्थिभिः ॥
वक्तव्यं धार्मिकायैतच्छ्रद्दधानाय पण्डिताः ।
मुमुक्षवे हि यतये वीतरागाय धीमते ॥
वक्तव्यं पुण्यदेशे च सभायां देवतागृहे ।
पुण्यक्षेत्रे पुण्यतीर्थे न सन्ध्यासु विचक्षणाः ॥
उच्छिष्टालये[4] वक्तारः सम्वादमिदमुत्तमम् ।
पच्यते नरके घोरे यावच्चन्द्रार्कतारकम् ॥
मृषा शृणोति यो मूढो दम्भभक्तिविवर्ज्जितः
सोऽपि तस्मिन्महाघोरे नरके पच्यते क्षये ॥
नरो यः सत्कथामध्ये चान्य[5] वदति पातकी ।
स याति नरकं घोरं यावदाचन्द्रतारकम् ॥
तस्माच्छ्रोता च वक्ता च समाहितमन[6]सदा ।
श्रोतृतां परमभक्त्या धर्मधातुसमुद्भवम् ॥
सद्धर्मं श्रीमता येन त्रिषु लोकेषु देशितः ।
देवदेवाधिदेवाय[7] तस्मै नमोऽर्कबन्धवे ॥
शुद्धोदनसुपुत्राय गौतमाय च सर्वदा ।
मायादेवीसुपुत्राय शाक्यसिंहाय ते नमः ॥

---

१ B has वो । २ D धर्म्मधातुं समुद्भवम् । ३ D ०विनाशार्थं । ४ D उच्छिष्टालयवक्तारः । ५ D चान्ये । ६ D समाहितमनं
B has देवदेवावरक्ताय ।

बोधिनाथं नमस्कृत्वा शाक्यसिंहं जगद्गुरुम् ।
संसारसागरतारं बोधिमार्गोपदेशकम् ॥
अतीतानागतान्बौधान् बोधिसत्वाननावहान् ।
महासत्वांश्च यान्नाथान्सर्वज्ञज्ञानक[1]विदान् ॥
घोरसंसार उत्तारान्नारकांश्च समत्वजान् ।
संसारसागरातारान्[2] सर्वज्ञगुणसागरान् ॥
बोधिसत्वान्महासत्वान्संसारदुःखतारकान् ।
दशदिक्संस्थितान्सर्वान्सर्वयांश्च नमोनमः ॥
पायाद्वः शाक्यसिंहेन सर्वज्ञैरपि शम्भुना ।
बोधिसत्वैर्महासत्वैः भिक्षुभिक्षुण्युपाशकैः ॥
नत्वा गोशृङ्गशैलस्थं धर्मधातुं स्वयम्भुवम् ।
तदुद्देशमहं वक्षे[3] लोकानां पुण्यवृद्धये ॥
शाक्यसिंहं जगन्नाथं सर्वज्ञगुणसागरम् ।
अतीतानागतै बौद्धैः[4] पूजितं मानितं गुरुम् ॥
अर्कबन्धुं नमस्कृत्वा धर्मधातुं जगद्गुरुम् ।
दशदिक्संस्थितान्बुद्धान्[5]वक्षेऽहं तदुद्देशजम् ॥
अतीतानागतान्बुद्धान्दशदिक्संस्थितान् गुरून् ।
संसारदुःखउत्तारान् सर्वज्ञांश्च नमोनमः ॥
बुद्धं धर्मं च सङ्घञ्च सर्वज्ञञ्च नमोनमः ।

---

१ D ज्ञानकृद्विदान् ।
२ C omits तारा and D reads संसारसागरान् सर्व्वान् ।
३ वक्ष्ये । ४ D बुद्धैः । ५ B has बौधान् ।

बोधिसत्वान्महासत्वान्प्रज्ञापारमितान्गुरून् ॥
श्रद्धया यः शृणोतीमां स्वयम्भूत्पत्तिसत्कथाम् ।
परिशुद्धत्रिकायस्स बोधिसत्व भवे ध्रुवम् ॥
[1]यद्‌यथाभूत्पुरा विज्ञो जयश्रीः सुगतात्मजः ।
बोधिमण्डसुविहारे[2] विजहार ससाङ्घिकः ॥
तत्र जिनेश्वरिनाम बोधिसत्वमहामतिः ।
श्रद्धया शरणं गत्वा जयश्रियमुपाश्रयेत् ॥
तदा धीमान् जयश्रीः स सर्वसत्वहितार्थभृत् ।
सद्धर्मं समुपादेष्टुं सभासनं समाश्रयेत् ॥
तत्र सर्वे महासत्वा बोधिसत्वा जिनात्मजाः ।
[अर्हन्तः भिक्षव ब्रह्मचारिणः श्रावकापि च ॥
भिक्षुण्य ब्रह्मचारिण्य ब्रतिनश्चाप्युपासकाः ।
उपासिका तथान्योऽपि गृहस्थाश्च महाजनाः[3] ॥
ब्राह्मणा तिर्थिकाश्चापि यतयश्च तपस्विनः ।
राजानमन्त्रिणोऽमात्याः सैन्याधिपाश्च पौरिकाः ॥
ग्राम्या जानपदाश्चापि तथान्यवासिन जनाः[4] ।
तत्सद्धर्मामृतं पातुं श्रद्धया समुपागताः ॥
तत्र सभासनासिनं[5] तमर्हन्तं जयश्रियम् ।
समभ्यर्च्यादरं नत्वा तत्पादाम्बुजे[6] यथाक्रमम् ॥

१ D तद्‌यथा ।   २ D बोधिमण्डपविहारेऽस्मिन् ।
३ D omits the portion bracketted.
४ D जानपदश्चापि तथान्यावासिनो जनाः ।  ५ D ०सीनं ।  ६ D पाद

कृताञ्जरि[1]पुटा सर्वे परिवृत्य समन्ततः।
पुरस्थित्य[2] समुद्वीच्य जयश्रियं समाश्रिताः॥
तान्सर्वान्समुपाश्रितान्सद्धर्मश्रवणोत्सुकान्।
दृष्ट्वा [3]जिनेश्वरिधीमान्बोधिसत्वः समुत्थितः॥
उद्वहनुत्तरासङ्ग[4] साञ्जलि समुपाश्रितः।
जानूभ्यां भूतले धृत्वा सम्पश्यनेवमब्रवीत्॥
भदन्ताहं समिच्छामि चरितुं बोधिसम्बरम्।
तदादौ किं व्रतं धृत्वा सञ्चरेयं समाहितः॥
तद्भवान्समुपादिश्य सर्वानस्मान्प्रबोधयन्।
बोधिमार्गे समायुज्य चारयितुं[5] शुभेऽर्हति॥
इति संप्रार्थिते तेन श्रुत्वा स सुगतात्मजः।
जयश्रीस्तन्महासत्वं समामन्त्र्यैवमादिशत्॥
शृणुवत्सास्ति ते[6] वाञ्छा संबोधिसम्बरे यदि।
यथाक्रमं प्रवक्ष्यामि संबोधिव्रतसाधनम्॥
यो वा ब्रूतेऽत्र संसारे[7] चरितुं बोधिसम्बरम्।
स आदौ शरणं गत्वा सद्गुरुं समुपाश्रयेत्॥
तदुपदेशमासाद्य[8] यथाविधिं समाहितः।
तीर्थे स्नात्वा विशुद्धात्मा [9]त्रिरत्नशरणं गताः॥
यथाविधिं समभ्यर्च्य संबोधिनिहिताश्रयन्।

१ D कृताञ्जलि०। २ D०स्थित्वा। ३ D जिनेश्वरी। ४ D ०सङ्गं।
५ D चारितुं च। ६ C मे। ७ C यो वाञ्छतेऽत्र संसारे
८ C तदुद्देसमासाद्य, D तदुदेशं समासाद्य। ९ D त्रिरत्नम्

[1]पोषधव्रतमाधाय समाचरेज्जगद्धिते ॥
एवं यश्चरते नित्यं संबोधिमानसः सुधीः।
परिशुद्धस्त्रिकायः[2] स बोधिसत्वभवे ध्रुवम् ॥
बोधिसत्वा महासत्वाः सर्वसत्वहितार्थभृत्।
क्रमात्संबोधिसभारं पूरयन् सुसमाहितः ॥
एतत्पुण्याभियुक्तात्मा चतुर्ब्रह्मविहारभृत्।
निःक्लेशो निर्ज्जयन्मारान्संबोधिं समवाप्नुयात् ॥
एवं सर्वत्र लोकेषु सद्धर्मं संप्रकाशयन्।
समाप्य [3]सौगतकार्य्यं सुनिर्वृत्तिमवाप्नुयात् ॥
एवं सर्व्वेऽपि संबुद्धा येऽतीताश्चाप्यनागताः।
वर्त्तमानाश्च मे[4] सर्वे ह्यभिपुण्यविपाकतः ॥
बोधिं प्राप्य जिनात्मजाः द्रुततले भवन्ति हि[5]।
एवं सर्वे महासत्वा बोधिसत्वा जिनात्मजाः ॥
अर्हन्तोऽपि तथा सर्वे परिशुद्धत्रिमण्डलाः।
बोधिं प्राप्य सुनिर्वाणं शीघ्रं यास्यन्ति याप्यतः ॥
एवं यूयं परिज्ञाय यदीच्छथ सुनिर्वृतिं।
त्रिरत्नशरणं गत्वा [6]सचरध्वमिदं व्रतम् ॥
इति तेन समादिष्टं श्रुत्वा स सुगतात्मजः।
जिनेश्वरीस्तमर्हन्तं[7] संपश्यन्नेवमब्रवीत् ॥
भदन्त श्रोतुमिच्छामि तत्तद्व्रतस्थानमुत्तमम्।

---

१ D पोषधं। २ D परिशुद्धत्रिकायस्य। ३ D सौगतं। ४ B and D ते।
५ C and D जिनात्मा सः द्रुतमेषो हि लभ्यते। ६ D सं। ७ D तमर्हन्तं।

एतद्व्रतं चरे[1] कुत्र तद्देशं समुपादिशत् ॥
इति संप्रार्थितं तेन जयश्रीः स महामतिः ।
जिनेश्वरिम्महासत्वं संपश्यन्नेवमादिशत् ॥
शृणु वत्स समाधाय व्रतस्थानसमुत्तमम् ।
मुनीश्वरैः यथाख्यातं तथा वक्ष्यामि तेऽधुना ॥
पुण्यक्षेत्रेषु तीर्थेषु विहारे सौगतालये ।
संबुद्धानां च सर्वेषां चैत्येसु प्रतिमासु च ॥
बुद्धक्षेत्रेषु सर्वेषु तद्व्रतस्थानमुत्तमम् ॥
तदुत्तमं समाख्यातं स्वयम्भूक्षेत्रमुत्तमम् ।
एवं विज्ञाय यो धीमान् व्रतं चरितुं समिच्छति[2] ॥
स स्वयम्भूजिनक्षेत्रमाश्रित्य चरतां व्रतम् ।
स्वयम्भूक्षेत्रमाश्रित्य यश्चरति[3] व्रतं मुदा ॥
स लभ्यते महत्पुण्यं अक्षयं बोधिसाधनम् ।
एतत्पुण्यविशुद्धात्मा भद्रश्री सद्गुणाश्रयः[4] ॥
बोधिसत्वोमहासत्व भवेज्जिनात्मजध्रुवम् ।
दुर्गतिं न व्रजेत्क्वापि संसारेषु कदाचन[5] ॥
सदा सद्गतिसंजाता बोधिचर्य्याव्रतं चरन् ।
संबोधिप्रणिधिं धृत्वा सञ्चरित्वा जगद्धिते ॥
एवञ्च [6][सं]बोधिसम्भारं पूरयित्वा यथाक्रमम् ।
त्रिविधां बोधिमासाद्य निर्वृतिं पदमाप्नुयुः[7] ॥

---

१ D चरेत् । २ D चरितुमिच्छति । ३ D ये चरन्ति ।
४ D सद्गुणाश्रयः । ५ D कदाचनः । ६ D omits सं । ७ D आप्नुयात् ।

एवं यूयं परिज्ञाय स्वयम्भूस्थानमाश्रिताः ।
त्रिरत्नशरणं गत्वा सञ्चरध्वं व्रतोत्तमम् ॥
एवं जयश्रियादिष्टं श्रुत्वा स सुगतात्मजः ।
जयश्रियं प्रणत्वापि सम्पश्यन्नेवमब्रवीत् ॥
भदन्तभवतादिष्टं श्रुत्वा मे रोचते मनः ।
स्वयम्भुवः समाराध्य चरिष्यामि व्रतं मुदा ॥
स्वयम्भूचैत्यराजः श्रीधर्मधातुजिनालयः ।
कुत्र प्रवर्त्तते लोके भवतादेष्टुमर्हति ॥
एवं संप्रार्थिते तेन श्रुत्वा सोऽर्हंयतिः सुधी ।
जयश्रीस्तं महासत्वं समालोक्यैवमादिशत् ॥
अस्ति नैपार[१]प्रख्याते धर्मधातुजगत्प्रभुः ।
अनेकैर्देवनागैश्च पूजितं मानितं सदा ॥
अस्ति [२]नेपारप्रख्याते गोशृङ्गनामपर्वतः ।
भेदोऽस्ति[३] युगे तस्य नामयुगरद्वयम्[४] ॥
[५]युगे सत्ये पद्मगिरिः त्रेतायां वज्रकूटकः ।
गोशृङ्ग द्वापरे ख्यातः कलौ गोपुच्छपर्वतः ॥
नानारत्नमयैः खस्ति नानाधातुभिः संयुतः ।
नानागुणैः समायुक्तः त्रैलोकेऽपि सुदुलभः[६] ।
वैजयन्तसदृशो स्यात् सोऽयं गोपुच्छपर्वतः[७] ।

१ B has नेयार and D नैपाल । २ D नेपालं । ३ B भेदोऽस्ति नामस्य । ४ D युगलद्वयं । ५ D सत्ययुगे । ६ D त्रैलोक्येऽपि सुदुर्लभः । ७ D वैजयन्तोऽपि सदृशो स्यात् सोऽयं गोपुच्छपर्व्वतः ।

मंजुश्रियप्रभावाच्च मेरोरधिकगौरवः ॥
पञ्चरत्नमयं सत्ये युगे तं जायतेकजम् ।
गिर्य्युपरि[1] सुसंस्थित्वा ख्यातः पद्मगिरिरिति ॥
पावनेन च तेजसा[2] त्रेतायान्तु अयं गिरिः ।
श्रिया लक्ष्म्या सुसंयुक्त[3] वज्रकूट इति स्मृतः ॥
गिरिराज इत्याख्यातो[4] अयं पर्वत द्वापरे ।
[5][गोवत्सस्य इव शृङ्ग गोशृङ्ग इति ख्यातवान् ॥
गोपुच्छपर्वतो नाम कलौ युगे सुसंस्थितः ।
गोवत्सपुच्छवद्दीर्घः पावनेन च तेजसा ॥
भूतकाले भविष्ये च वर्त्तमाने प्रवर्त्तते ।]
इति तद्देशवासियै[6] नाम साङ्ग[7] गुरूच्यते ॥
नानाधातुमयैः स्वस्ति नानावृचैरलङ्कृतः ।
नानालताभिः सङ्कीर्ण नानातृणविशेषकैः ॥
नानावृक्षफलोपेत नानानिर्झरनादितः ।
नानामृगकुलैः कीर्ण[8] नानापक्षिनिकूजित ॥
कोकिलशुकशारीकैर्मयूरगणपक्षिभिः ।
हृष्टैः सङ्कूजितैस्तैस्तैः पद्मकैश्च[9] मुहुर्मुहुः ॥
[10]नागकेशलैश्चाम्पेयैर्वकुलैः पिप्पलैस्तथा ।
अष्टादशादिभिर्वृचैर्यज्ञवृचैः समन्ततः[11] ॥

१ D ०गिरी० । २ D तेजेन । ३ D सुसंयुक्तो । ४ D ०जेतिप्रख्या० ।
५ B omits these four lines. ६ D देशवासीयै । ७ D सांख्ये ।
८ D कीर्सः । ९ C षट्पदैश्च । १० B has नानाकेशलै० and D
नागकेशलचम्पेयै । ११ D समन्वितः ।

पञ्चवर्णादिकैः पत्रैः किशरयैः सुशोभितैः ।
शोभितः शरदिकाले नक्षत्रैरिव चन्द्रमा[1] ॥
इत्येवमादिभिर्वृक्षैः संच्छन्नः पर्वत अयम् ।
महासाहस्रके लोके नन्दनादपि सुन्दरः ॥
कोचिद्दौ[2] यत्रयत्रिणौ शीर्णपत्राणि तानि च ।
तस्मादन्यं न च्छोरन्ति यच्चिनू तद्दिने दिने ॥
पवनैश्चापि च्छोरन्ति शीर्णपत्राणि तानि च ।
तत अन्यत्र गच्छन्ति चिनूतश्च रतिदिने ॥
इत्यादिभिर्गुणैर्द्रव्यैर्युक्तश्च पर्वत अयम्[3] ।
महासाहस्रके लोके नास्ति अन्यत्र कुत्रचित् ॥
मनशिरादिभिर्नानाधातुभिः प्रतिमण्डितः[4] ।
सुवर्णै रजतैर्वृक्षैर्विद्रुमैरश्म[5]गर्भकैः ॥
मुक्तिकैमर्कटैर्वज्रैः जाम्बूनदैः सुसारकैः ।
माणिक्यैः पुष्परागैश्च नानारत्नद्रुमैर्युतः ॥
इत्येवं चित्रितै[6] रत्नैः नानारत्नैः सुमण्डितैः ।
शोभित[7] रत्नवृक्षैश्च रत्नमाल्यैरलङ्कृतैः
हारार्द्धहारैर्मुकुटैः दामैः केयूरै कुण्डलैः[8] ।
चित्रैः कल्पवृक्षैरिव द्रुमैः कण्ठिभिभूषणैः[9] ॥
इत्येवं स्थावरैः[10] रत्नैः प्रच्छन्नोऽयं[11] पर्वतः ।

---

१ D सुचन्द्रमा । २ D कोचिद्दौ । ३ D चायं सुपर्व्वतः ।
४ D ०मण्डितैः । ५ D रश्म० । ६ D विचित्रैः । ७ D शोभितै ।
८ D केयूरकुण्डलैः । ९ D भूषणैः कण्ठिभिः चित्रैः कल्पवृक्षैरिव द्रुमैः
१० D स्थावरैः । ११ D च ।

[1]चिचितैर्जातिभिः पुष्पैः मेरोरधिकगौरवः ॥
पट्टदूष्यादिभिर्वृचैस्त्रिनैः[2] काशिकपावनैः ।
अग्निशौवादिकैर्नानावस्त्रवृत्तैः सुशोभितः ॥
एवं बहुगुणैर्युक्तं दृष्ट्वा स्वयंभुवं[3] गिरिम् ।
न गच्छन्ति हि ते देवास्तस्मादन्यत्र कुत्रचित् ॥
महाब्रह्मा अपि ब्रह्मकायिकैश्च परिवृतः ।
पुष्पधूपादिभिः पूज्य सेवितः सततमयम् ॥
सुरेन्द्रस्त्रिदशैः सार्द्धं सच्युपेन्द्रेण सङ्गमम् ।
पारिजातकृतमाल्यैः तत्पूज्यविविधिविधैः[4] ॥
रुद्रोऽपि च गणैः सार्कं पार्वत्या सह पुत्रतः ।
नानाविधानकैः पूज्य तस्मादन्येन इच्छति ॥
प्राच्यदिशा समायात धृतराष्ट्रा महद्युतिः ।
गन्धर्वैश्च गणैर्युक्तः स्थित्वा तत्पूजनं कृतम् ॥
विरूढकमहाराजा दक्षिणाद्दिश आगतः ।
कुम्भाण्डैश्च गणैः सार्द्धं स्थित्वा तत्सेवनं कृतम् ॥
पश्चिमाश्च विरूपाक्षनागराजैः परिवृतः ।
जलजैर्विविधैः पुष्पैः पूजितं कुमुदैरपि ॥
उत्तराच्च महाराजः वैश्रवणो धनाधिपः ।
नानारत्नैः सुसंपूज्य भ्रातरैः स्वगणैः स्थितः ॥
अग्निदिशात्समायाता वह्निदेवप्रख्यातकः[5] ।

१ D चित्रकै । २ D क्षौमैः । ३ D स्वायम्भुवं
४ D पारिजातकृतैर्माल्यैः तत्पूज्यविविधैर्विधैः ।
५ D अग्नेः दिशात् समायाता वह्निदेव महत्प्रभः ।

पत्नीभिः स्वगणैः सार्द्धं तत्पूज्य विविधैर्नयैः ॥
नैऋत्य[१] दिश आयतः राक्षसराक्षसेश्वरः ।
नानारत्नसुसंगृह्य तस्य पूजाकृतं परम् ॥
वायुव्याद्वायुदेवोऽयं स्वगणैर्युक्त आगतः ।
विविधपुष्पसंगृह्य तस्य पूजाकृतं परम् ॥
ईशानाच्च महादेवः गणैः सह समागतः ।
नानापूजाङ्गसंगृह्य पूजयामास शम्भुवे ॥
[[२]अथ दिशात्समायात श्रीलक्ष्मी सह विष्णुना ।
विविधमाल्यसंगृह्य पूजयामास शम्भुवे ॥
ऊर्द्धदिशः समायात ब्रह्माख्यातश्चतुर्मुखः ।
गरुड़ैः सार्द्धं पूजाङ्गैः पूजयामास शम्भुवे ॥]
दशदिग्भ्यः समायाताः पालाश्च विदिशा दिशा[३] ।
नानापुष्पैः सुगन्धैश्च पूजयामास[४] शम्भुवे ॥
दशभिर्लोकपालैश्च स्वस्वदिग्भ्यः समागतैः ।
पूजितं शततं[५] कालं गणैः सह परिवृतः ॥
त्रयस्त्रिंशपूर्व्वकोटि[६]देवताभिः परिजनैः ।
स्वयम्भूपूजनं कृत्य हर्षैः सह सदास्थितः ॥
सप्तर्षिभिः सशिष्यैश्च सिद्धविद्याधरादिभिः ।
पूजितं शततं[७] तत्र स्थित्वा पूजनतत्परैः ॥

---

१ D नैऋत्यात् दिशायातः ।
२ C and D omit the portion bracketted.
३ C पातालाश्च विविदिशा, D पातालाश्चागतादिशा । ४ D °मासु ।
५ D सततं । ६ A has त्रयः पूर्व्वकोटि° । ७ D सततं ।

श्रावकैर्जिनशिष्यैश्च भिक्षुभिक्षुण्युपासकैः ।
बोधिसत्त्वैः सदा पूज्य तत्र स्थित्वा स साक्षिकैः ॥
ब्रह्मविष्णुशिवशक्रैर्नानादेवादिभिर्गणैः ।
पूजितं सर्वदाकालोऽयं तस्मादन्यं न दृच्छति ॥
ब्रह्मक्षत्रियवैश्यैश्च शूद्रादिविविधगणैः[१] ।
दशदिग्भ्यः समायातैः शेवयामासुः[२] पूजनैः ॥
इत्येवं मनुजैर्देवैः गन्धर्वैर्गरुड़ैरपि ।
किन्नरैश्चासुरैराजैः पूजितश्च स सद्गुरुः ॥
नानादेशात्समायातै दिग्विदिग्भ्यः पुनस्तथा ।
चतुर्वर्णादिभिर्जातैः[३] पूजयामासुस्तत्परैः ॥
केश्चित्पूर्वदिशा चापि दक्षिणात्पश्चिमात्तथा ।
उत्तरादिविदिग्भ्यश्च दशदिग्भ्यः समागताः ॥
ब्रह्मभिः क्षत्रियैः शूद्रैरन्यैश्च विविधैर्गणैः ।
किन्नरैर्गरुड़ैर्दैत्यैर्नानादेवादिभिर्गणैः ॥
देवैर्नागैश्च मनुजैः पौरैश्च जिनशेवकैः ।
देशेभ्यश्च समायाताः शिष्यैः सह तथागताः ॥
तूर्य्यैः काहलैः[४] शङ्खैः[श्च][५] ढक्कैर्मण्डलवाद्यकैः ।
पूजनाय च शम्भोश्च आजग्मुः शम्भुमण्डिलम्[६] ॥
ब्रह्मक्षत्रियवैश्यैश्च शूद्रादिविविधजनैः[७] ।
पूज्यादिविधिहस्तैश्च तत्रागतः सह गुरुः[८]

१ D विविधैर्गणैः । २ D सेवयामासु । ३ D जातिः । ४ D काहालकैः । ५ D omit [श्च] । ६ D ॰मण्डिरं । ७ D विविधैर्जनैः । ८ D गुरुसह ।

इत्येवं मनुजैर्दैत्यै गन्धर्वैर्गरुडैरपि ।
किन्नरैश्चासुरराजै र्घुषितः सततं शुचिः[१] ॥
तत्र स्वयम्भू[२] भगवान् जगदानन्दकारकः ।
हस्तैकः स्फटिकस्यास्ति सेव्यते मोक्षकामिभिः ॥
स्वयम्भू[३] भगवान्नाथ जगदाह्लादकारणैः[४] ।
सर्वलोकानुकम्पार्थं तत्र जातः स सद्गुरुः ।
सर्वलक्षणसम्पूर्णः सर्वगुणविभूषितः ।
सर्वदेवासुरैः पुज्य स्थितस्तत्र स्वयं प्रभुः[५] ॥
देवदेवादिभिः पूज्य ब्रह्माविष्णुमहेश्वरैः[६] ।
अनेकैर्देवनागैश्च पूजितं वन्दितं सदा ॥
सर्वैर्विद्याधरैः सार्ध्धे यक्षकिन्नरगन्धर्वैः[७] ।
राक्षसेन्द्रैश्च कुम्भाण्डै ग्रहैस्तारागणैरपि[८] ॥
लक्ष्मीभिश्चाप्सरोभिश्च सर्वैश्च त्रिदशाधिपैः[९] ।
ऋषिभिर्यतिभिः सर्वै योगिभिर्ब्रह्मचारिभिः ॥
सर्वैरतिथिकैर्विज्ञैस्तापस्विभिश्च सज्जनैः ।
दिवानिशं[१०] चतुस्सन्ध्यं दृष्ट्वा मूर्ध्ना प्रवन्दितः ॥
प्रतिदिनं समागत्य समभ्यर्च्य समादरात् ।
संस्तुतिभिर्महोत्साहैः सम्मानितोऽभिवन्दितः ॥

---

१ C तं शुचि and D किन्नरैश्चासुरेन्द्रैश्च घुषितं शुचिशोभितः ।
२ D स्वायम्भू । ३ D स्वायम्भु । ४ D ०कारकः । ५ D स्वयं भुवः ।
६ B has पूज्यब्रह्माविष्णुमहेश्वरैः देवदेवादिभिः । ७ D यक्षगन्धर्वकिन्नरैः ।
८ D कुम्भाण्डैः राक्षसेन्द्रैश्च ग्रहैतारागणैरपि । ९ D दशाधिपैरपि ।
१० D ०निसं ।

एवं स त्रिजगन्नाथः स्वयम्भू धर्म्मधातुकः ।
सर्वलोकेन[१] पूजित्वा सम्भासयन्नवस्थितः ॥
इदानीं सः कलौ[२] लोके दुष्टैर्निर्धनकैः शठैः ।
तदिदं धर्म्मधातुं हि हनिष्यन्ति किलेन तु ॥
इत्यसौ शिलयाच्छाद्य गुप्तिं कृत्वा सुस्थापितः ।
तदुपरि[३] इष्टिकाभि विधाय चैत्रमुत्तमम् ॥
ध्वजच्छत्रपताकादिनानालङ्कारभूषितम् ।
सौवर्णचक्रसंयुक्तं श्वेतच्छत्रं मनोहरम् ॥
सौवर्णध्वजसंयुक्तं सौवर्णच्छत्रसंयुतम्[४] ।
विश्वमणिसुसंयुक्तं नानाम्बरसुभूषितम् ॥
छत्रध्वजवितानैश्च दिगमालैः सुपूरितम् ।
पश्चिमे लमिताभं च उत्तरे मोघसिद्धिकम्[५] ।
पूर्वे ह्यचोभ्यं[६] श्रीमन्तं दक्षिणे रत्नसम्भवम् ॥
लोचना मामकी तारा पाण्डरा सह संस्थितम् ।
चतुस्तथागतैरित्थं चतुस्ताराभिः शोभितम्[७] ॥
दिग्विदिक्षु स्थितैर्देवैर्नानारङ्कारभूषितैः ।
पट्टदूष्यादिभिर्वस्त्रैश्चीनैः काशिकैश्च[८] पावनैः ॥

१ D सर्व्वलोकैः पूजयित्वा । २ D सकलैर्लोकैः ।
३ D तदुपरि इष्टिकाभिश्च विधाय चैत्यमुत्तमं ।
४ D सौवर्णच्छत्रमुत्तमं । ५ D ०सिद्धकं ।
६ D ह्यचोभ्य श्रीमन्तं । ७ D शोभिं ।
८ D काशिकपावनैः

जाम्बूनदै रत्नयुक्तैः दामैश्चापि विभूषणैः ।
मुक्तादिरत्नजैमाल्यैः देवताभि स्सुपूरितम् ॥
नानागुणविभूषाङ्गं नानारत्नविभूषितम् ।
नानास्वर्णविभूषाङ्गं नानारङ्कारभूषितम्[१] ॥
नानावितानसंयुक्तं नानाध्वजसुभूषितम् ।
नानाचामरभूषाङ्गं नानाघण्टविभूषितम् ॥
ईदृशं रत्नजं चैत्यं त्रैलोक्येऽपि सुदुर्लभम् ।
शान्तिकरकृतं चैत्यं स्वयम्भूगुप्तजोद्भवम्[२] ॥
तत्रापि सर्वलोकैश्च सर्वलोकाधिपैरपि[३] ।
समागम्य सदाप्येवं समभ्यर्च्याभिवन्दिताः ॥
तत्र ये शरणं गत्वा भजन्ति श्रद्धया मुदा ।
दुर्गतिन्ते न गच्छन्ति संसारेषु कदाचनः ।
सद्गतावेव संजाता धर्मश्रीसद्गुणान्विताः ॥
एवं यूयमपि ज्ञात्वा श्रद्धया शरणं गताः ।
[४]स्वयम्भूचैत्यमाश्रित्य सञ्चरध्वं व्रतं सदा ॥
ततः सम्बोधिसम्भारं पूरयित्वा यथाक्रमम् ।
त्रिविधां बोधिमासाद्य सम्बुद्धपदमाप्स्यथ ॥
इति जयश्रियादिष्टं निसम्य स जिनेश्वरिः ।
शास्तारन्त समालोक्य पुनरेवमभाषत ॥
भदन्त श्रोतुमिच्छामि यः स्वयम्भू जिनालयः ।

१ D ०लङ्कारभूषितं । २ D स्वायम्भूगुप्तजोद्भवं
३ D ०कामा० । ४ D स्वायम्भू० ।

कदा स्वयं[1] समुत्पन्न भवता तदुपादिशत् ॥
इति संप्रार्थिते तेन श्रुत्वा सोऽर्हयतिः सुधी ।
जयश्रीस्तं महासत्वं संपश्यन्नेवमब्रवीत् ॥
साधु शृणु महाभाग यथाश्रुत मया गुरौ[2] ।
तथाहन्ते प्रवक्ष्यामि स्वयम्भूत्पत्तिसत्कथाम् ॥
तद्यथा पातलीपुत्रे पुरेऽशोको नराधिपः ।
सद्धर्म्मसाधनोत्साही चिरत्नसेवकः सदा ॥
स तत्र कुक्कुटारामे विहारे सुगताश्रमे ।
उपगुप्तं महाभिज्ञं वन्दितुं समुपाचरेत् ॥
तदा सोऽर्हमहाभिज्ञः सर्वसङ्घपुरस्कृता ।
सभास्थापि समालोक्य तस्थौ ध्यात्वा समाहितः ॥
तमर्हन्तं सभासिनं[3] सर्वसङ्घपुरस्कृतम् ।
दृष्ट्वाशोकः स भूमीन्द्र मुदित समुपाचरत्[4] ॥
तत्र सः सहसोपेत्य साञ्जलिना नराधिपः ।
उपगुप्तं महाभिज्ञमष्टाङ्गैः प्राणमत्मुदा[5] ॥
तदाशोकस्तमर्हन्तं महोत्साहैर्यथाविधिम् ।
समभ्यर्च्यादरं नत्वा धर्म्मश्रोतुमुपाचरत् ॥
तदा ते मन्त्रिणः सर्वे समागत्यपरिजनैः[6] ।
तमर्हन्तं यतिन्नत्वा तत्रैकान्ते उपाश्रयेत् ॥

१ D स्वायं ।　　२ D गुरो ।　　३ D सभासीनं ।
४ D मुदितः समुपाचरेत् ।　५ D प्रणामत्० ।　६ D परीजनैः

तत सोऽर्हन्महाभिज्ञो दृष्ट्वा सर्वान् सभाश्रितान् ।
आदिमध्यान्तकल्याणं सद्धर्म्मसमुपादिशत् ॥
तत्सद्धर्म्मामृतं पीत्वा सर्वे लोका[1] प्रबोधिताः ।
धर्म्मं हि श्रेष्ठमित्युक्त्वा संबोधिव्रतमिच्छिताः ॥
ततः सोऽपि महाराजा ज्ञात्वा तद्धर्म्ममुत्तमम् ।
संबोधिसाधनचर्य्यां सञ्चरितुं समिच्छति ॥
ततः स नृपति राजा साञ्जलि समुपाश्रितः ।
तमर्हन्तं महासत्वं नत्वा एवमुदावदत् ॥
भदन्त श्रोतुमिच्छामि सम्बोधिसाधनं व्रतम् ।
कुत्र पुण्योत्तमं चैत्रं विद्यतेऽत्र महीतले ॥
तद्भवान्समुपादिश्य सर्वानस्मान् प्रबोधयन् ।
बोधिमार्गे समापूर्य्य[2] सञ्चारयितुमर्हति ॥
इति संप्रार्थिते तेन श्रुत्वा सोऽर्हं[3] महामतिः ।
तमशोकं महीपालं संपश्यन्नेवमब्रवीत् ॥
साधु शृणु महाराजन् यथा मे गुरुणोदितम् ।
तथाहन्ते प्रवक्ष्यामि संबोधि यदि इच्छसि ॥
सर्वचैत्रोत्तमे राजन्नुत्तरेऽस्मिन् हिमालये ।
गोपुच्छ इति प्रख्याते नेपाले सिद्धते द्रुतम् ॥
तत्रैवातिमहत्पुण्यं चैत्रं बुद्धै[4] प्रभाषितम् ।
[5]स्वयम्भूचैत्यराजस्य धर्म्मधातोस्तमालयम्

१ D सर्व्वलोका । २ D समायुज्य । ३ D सोऽर्हन्महा०
४ D बुद्धैः । ५ D स्वायम्भू० ।

तत्र यद्यत्कृतं कर्म तदत्र सिध्यते द्रुतम्।
तस्मात् सर्वैर्महासत्वैः संसेवितं जिनैरपि॥
इति विज्ञाय राजेन्द्र संबोधिं यदि वाञ्छसि।
तदालयं समागत्य सञ्चरध्वं दृढं व्रतम्॥
एतत्पुण्यविशुद्धात्मा भद्र श्रीसद्गुणान्वितः।
बोधिसत्वो महाभिज्ञो भवेत्सत्वहितार्थभृत्॥
ततः क्रमेण संबोधिसम्भारपरिपूरयन्।
त्रिविधां बोधिमासाद्य संबुद्धपद गच्छसि॥
इति तेन समादिष्टं श्रुत्वाशोकनृपमुदा[1]।
उपगुप्तं गुरुं नत्वा प्रपच्छैवं समादरात्॥
भदन्त श्रोतुमिच्छामि [2]स्वयम्भूत्पत्तिसत्कथाम्।
कदा स्वयं समुत्पन्नस्तत्समादेष्टुमर्हति॥
इति संप्रार्थिते तेन श्रुत्वा सोऽर्हयतिः सुधीः।
अशोकन्तम्महीपालं संपश्यन्नेवमादिशत्॥
साधु राजन् यथादिष्टं गुरुणा मे श्रुतं मया।
तथाहं संप्रवक्ष्यामि शृणु त्वं हि समाहितः॥
तद्यथासौ जगन्नाथः शाक्यमुनिस्तथागतः[3]।
सर्वज्ञो धर्मराजोऽर्हन्मुनीश्वरविनायकः॥
[4]पातारस्वर्गमर्त्त्येषु श्रेष्ठोऽयञ्च सः सद्गुरुः।
देवदानवमानुष्यैः वन्दितः पूजितः सदा॥

---

१ D ०नृपो। २ D स्वायम्भू०।
३ D शाक्यसिंह तथागतः। ४ D पाताल।

द्वाचिंशल्लक्षणधरश्चाशीति अनुव्यञ्जनैः।
सर्वलक्षणसम्पूर्णः सर्वालक्षणवर्जितः॥
सर्वगुणविभूषाङ्गः सर्वदोषविवर्ज्जितः।
समन्तभद्रकायाश्च बोधिनाथ समागतः॥
यथानुश्रुयते तत्र कदाचित् मुनिसद्गुरुः।
शाक्यसिंहो जगच्छ्रेष्ठो लोकार्थं विजहार सः॥
जेतवनविहाराच्च सार्द्धं पञ्चदशैः सह।
भिक्षुर्भिक्षुणीभिश्च उपाशकैरुपाशिकैः[1]॥
मैत्रेयप्रमुखैः शिष्यैः स्थविरस्थविरादिभिः।
अष्टमीचन्द्रमाकारैः शाक्यसिंहः पुरस्कृतः॥
यदा सर्वज्ञनाथोऽसौ स्वर्द्धिं संप्रकाशयन्।
विवेश तत्र नेपाले शिष्यैः सह समागतः॥
कैश्चिद्वृषभानारूह्य[2] स्थविरस्थविरादिभिः।
कैश्चिद्धस्तीन्समारूह्य कैश्चिन्मेषाश्च आरूढैः[3]॥
कैश्चिदश्वान्समारूह्य कैश्चिन्मयूरश्रण्डजान्।
कैश्चिच्च राजहंसादीन् गरुडां चोरगानपि॥
विश्वकर्म्मादयो देवाः संस्थिता रत्नजान् रथान्।
नानायुक्तान् समारूह्य शिष्यैश्च सह आगतः॥
तेजसा अपि सूर्य्येव शीतेन पूर्णचन्द्रमा।
नक्षत्रैः सह आयातस्तथैव आगतो गुरुः॥

---

१ D उपासिकैरुपाशिकैः। २ D वृषभमारुह्य। ३ D वाहनैः

इत्येवं विविधैः कृत्वा स्वस्वर्द्धिं प्रकाशयन् ।
गरुडानिव पक्षीभि विहायसात्समागतः ॥
तत्रस्थैः सर्वलोकैश्च खे दृष्ट्वा प्रातिहार्य्यमा[१] ।
पाद्यादिपूज्यहस्तैश्च प्राययुर्जिनसंमुखम् ॥
अनेकैर्बोधिसत्वैश्च बहुप्रत्येकबुद्धकैः ।
श्रावकैर्जिनशिष्यैश्च भिक्षुभिक्षुण्युपासकैः ॥
देवपुत्रगणैः सार्द्धं ब्रह्मभिश्च महोत्तमैः ।
चतुर्भिश्च महाराजै रहिराजगणेश्वरैः ॥
किन्नरेन्द्रैश्च दैत्येन्द्रैर्गरुडैश्च महोत्तमैः ।
मनुष्यैर्मनुजेन्द्रैश्च नानामात्यगणैस्तथा ॥
धनिभिः सार्थवाहैश्च पौरैश्च जिनशेवकैः[२] ।
ब्रह्मविष्णुशिवशक्रैरप्सरोभिर्महोत्तमैः ॥
[३]छत्रध्वजपटाकादिधूपचामरहस्तकैः ।
व्यञ्जनादिभिष्पुष्पैश्च प्राययुर्जिनसंमुखम् ॥
मृदङ्गवादितैः केश्चित् केश्चित् झर्झवादितैः ।
केश्चित्तूर्य्यादिभिर्वाद्यैः केश्चिन्मण्डलवाद्यकैः[४] ॥
काहारादिभिः केश्चिच्च वीणवंशादिभिस्तथा ।
तालादिकांशजैर्वाद्यै नानावाद्यसुहस्तकैः ॥
केश्चित्पूजाज्यादि[५] संग्रहैः माल्यैर्दामैश्च पुष्पकैः
चीनैः काशिकवस्त्रैश्च [६]अंशिशौवादिभिस्तथा ॥

१ D प्रातिहार्य्यमां ।　२ D ०सेवकैः ।　३ D ०पताका ।
४ D मङ्गल० ।　५ C पूज्यादि ।　६ D ०सौवादिभि०

पट्टदूष्यादिभिर्हस्तैः नानामङ्गलवाद्यकैः ।
पुष्पधूपादिभिर्हस्तैः प्राजग्मुर्जिनसंमुखम् ॥
कैश्चिच्च वेदपाठादिस्तोत्रगीतसुभाषकैः ।
पाद्यादिविविधैः पूज्यै[१] विवेश तत्र पर्वते ॥
कैश्चित् पञ्चप्रणामेन कृत्वा त्रयः प्रदक्षिणाम् ।
कैश्चिदष्टाङ्गयुक्तेन प्रणामाञ्जलिभिस्तथा ॥
एवं बहुविधैर्हस्तैर्नानायुक्तैः प्रचारकैः ।
तत्र विवेशयामास शाक्यसिंहः स सद्गुरुः ॥
[यदा सर्वज्ञनाथोऽसौ स्वच्छर्द्धिं संप्रकाशयन् ।
विवेश शम्भूनाथस्य शिष्यैः सह समागतः ॥
जेतवनात्समायातः शाक्यसिंहः स सद्गुरुः[२] ।]
विवेश तत्र नेपाले शम्भूनाथस्य पर्वते ॥
यदा ताथागतायातः शिष्यैः सार्द्धं च पर्वते ।
सर्वज्ञस्य प्रभावाच्च तद्वनं शुभसंयुतम् ॥
ब्रह्मा तस्य पुरःस्थित्वा व्यञ्जनैर्वीजयन्मुनिं ।
वेदपाठादिकं कृत्वा जिनमाग्रत आगतः ॥
भूतेशेपि पुरः च धावन्[३] दुर्ज्जनान्वारयञ्च वै ।
राजात्वतैश्च[४] संपूज्यजिनस्याग्रतमागतः ॥
इन्द्रोऽपि [५]देवराज रत्नच्छत्रं च संदधन् ।
जिनस्य पृष्ठतांस्थित्वा मोदैः सह समागतः ॥

१ D पूज्यैर्विवेश । २ C omits these three lines.
३ D पुरोधावन् । ४ D द्वेतैस्च । ५ D देवराजेन्द्र

अग्निरपि[1] देवेशः नानाधूपैः प्रधूपितः।
सुगन्धसर्वसंयुतैः शेवयामास[2] गौतमम्॥
यमोऽपि धर्मराजोऽसौ दण्डेन वारयञ्जनान्।
[3]ताड़िताप्यापजान्सर्वान्दूरेणापि निवारितः॥
नैऋत्योऽपि राक्षसेश दुर्ज्जनान्वारयञ्च वै।
माराश्च विघ्नजान्सर्वान्दूरेणापि निवारितः॥
वरुणोऽपि च नागेन्द्रः स्वर्णभृङ्गार गृह्य वै।
सिञ्चितं विविधे मार्गं सुगन्धैर्वारिभिस्तथा॥
वायुरपि च देवेश ध्वजं धारयत ध्रुवम्।
त्रिगुणैः शेवयामास[4] तथागतस्य अग्रतः॥
धनाधिपोऽपि राजेन्द्र रत्नैश्च पूजितो मुनिः।
नानारत्न सुसंगृह्य जिनस्याग्रत आगतः॥
माधवोऽपि पुरःस्थित्वा शङ्खन्ध्वनति[5] शोभितम्।
त्रिदशं पूरणं शब्दं कृत्वा ताथागताग्रतः॥
असङ्ख्यैश्चामरैः छत्रैः पताकैश्च ध्वजादिभिः।
असङ्ख्यैर्विविधैर्वाद्यै मङ्गलैश्च सुपूरितैः॥
तत्र देवासुरै लोकै गन्धर्वै मनुजै गणैः[6]।
मङ्गलादिभिः संपूज्य प्राविशन्मुनिसत्तमः॥

१ D ०रपि च।
२ D ०संयुक्तैः सेवयामास।
३ D ताड़िताव्यान् प्रजान् सर्व्वान्।
४ D वेष्टयामास।
५ D ध्वनित०।
६ D ०सुरैर्लोकैर्गन्धर्वै किन्नरै गणैः।

[1]यः प्रचचार सर्वज्ञः प्रातिहार्य्यं प्रदर्शयन् ।
तदा च तद्वनं सर्वं अभूत्मङ्गलपूरितम् ॥
यस्मिन्काले च नेपाले तथागतः समागतः ।
तस्मिन्काले च तत्रैव अत्यर्थं मङ्गलं भवेत् ॥
सर्वज्ञनाथतेजेन वनं सर्वं मनोहरम् ।
संपूर्णमङ्गलं यातं सर्वज्ञप्रभावात् किलः[2] ॥
नानापुष्पाणि वृक्षाणि पुष्पैश्चापि अवाकिरन् ।
नानाफलानि नम्रानि फलैश्च पूजितं जिनः ॥
द्विरेफै विविधैर्जातिः सुगीतं सुमनोज्ञकम् ।
जगुश्च तत्र[3] उद्गतैस्तद्दर्शनोर्द्धवैमुखैः ॥
नानाप्रकारजैर्युक्तैः[4] स्वं स्वं भावं प्रकाशयैः ।
तद्दर्शनप्रभावाच्च गन्धर्व्वैरिव गीयते ॥
पवनैश्च प्रशेवन्ति सुस्वरै मधुरै वनम् ।
कीचकैः पूरकैः शब्दैर्वंशैरिव[5] प्रगीयते ॥
अष्टाङ्गगुणसंपूर्णैर्वारिपूर्णै[6]मनोरमैः ।
बभूवतु देवखातैश्च[7] जलजैः पुष्पमण्डितैः ॥
नीलोत्पलैः[8] पुण्डलीकैः इन्द्रीवलैश्च कैरकैः[9] ।
कह्लारै जलजैः पुष्पै मीनादिभिः सुयुक्तकैः ॥

१ D सर्व्वज्ञः प्रचचारो यः । २ D यातसर्व्वज्ञोऽसौ हि कीर्त्तितं ।
३ D उद्गते तत्र । ४ D ०प्रकारैर्जै ।
५ D ०वंशैरिव । ६ C omits वारिपूर्णैं ।
७ D omits श्च । ८ D नीलोत्पलैः । ९ D कैरवैः ।

राजहंसादिभिर्युक्तैः जलपक्षिभिर्मण्डितैः।
इत्थं पद्माकरयुक्तैः[1] सा त्रिदिवेऽपि सुदुर्लभा॥
मण्डूकैरुरगैर्नानामीनादिमकरजन्तुभिः।
अत्यर्थं प्रेमयुक्ताश्च तथागतप्रभावतः॥
सुगन्धिः शीतरधीर बभौ वायुः समन्ततः।
तृष्णा विना दावाग्निश्च[2] शशाम तत्र मण्डले॥
सौख्यं बभार नेपाले वनराज सुपक्षिभिः।
शुभं सर्वं बभूवात्र मङ्गलैः पूरितं भवेत्॥
मयूरशुकशालीकचक्राङ्कपक्षिभिस्तथा।
नानापक्षिगणैर्जातैः जग्मुर्खेच मनोहरम्॥
सिंहव्याघ्रर्ष्यर्क्षवृषभै मार्जारसर्पमूषिकैः।
अत्यर्थं च सुहृद्भावास्तस्य पुण्यप्रसादतः॥
तस्मिन्वने वरे[3] नाथ सर्वज्ञश्च जगद्गुरुः।
स्वशिष्यैः सह चक्राम स्वं प्रभावं प्रकाशयन्॥
यत्र[4] ये वानराः कोटिशतसाहस्रकादयः।
चरन्तः सततं हर्षै भुक्ता भोग्यफलानि च॥
[5]तत्रस्थवानरा सर्वे प्रादाचुर्जिनभास्करम्।
दृष्ट्वा हर्षैः समेतास्ते प्राययुर्जिनसंमुखम्॥
सर्वेऽथ वानरा मोदै गृहीत्वा वनजं फलम्।
ते तं बुद्धं प्रणम्यादौ मूर्ध्ना भक्त्या समादधुः॥

---

१ D पद्माकरैर्युक्तैः। २ D दवाग्निश्च। ३ D वनवरे।
४ D तत्र। ५ D तत्रस्ते।

अथ शौद्धोदनि बुद्धो गृहीत्वा भक्तिवत्सलः ।
तानुवाचाभयं दत्वा साधु साधु त्वतान्मृगाः ॥
यत् पुरा रोपितं बीजं सुक्षेत्रे शुभदेऽल्पकम् ।
तत्पुण्य साम्प्रतं प्राप्ताः युष्माभिरत्र वासताः ॥
यच्च दत्तं फलं मह्यं तत् स्यात् बीजं महत्तलम् ।
आरोपयथ यच्चाद्यं बुद्धक्षेत्रे शुभप्रदे ॥
यूयं भो वानराः सर्वे मानवाश्च भविष्यथ ।
तद्दानफलतो प्राप्य पुनः दाता भविष्यथ ॥
इति तस्य वचनं श्रुत्वा सर्वे हर्षसमाकुलाः ।
प्रसन्ना बुद्धपूजायैवं[1] भवन्ति तत्पराः सदा ॥
दिशश्च विप्रसन्नानि[2] कृत्वापि जिनलक्ष्मीभिः ।
तेजांसि सर्वदेवानां न भासन्ति तपन्ति च ॥
एवं बहुविधं सर्वं पूर्वादधिकगौरवम् ।
कृत्वा तथागतार्द्धिभिस्तत्रागतः स गौतमः ॥
प्रकम्पवसुधा सर्वा सागरान्ता वसुन्धरा ।
सुमेरुं कम्पयित्वाच्च आकनिष्ठं समन्ततः ॥
त्रिदिवस्थैश्च लोकैश्च इन्द्रादिभिः समन्ततः ।
हाहाकारसमुत्साले नानावाद्यैः प्रणादितम् ॥
पुष्पान्यपातु आशात्[3] चन्दनचूर्णरञ्जितान् ।
महामाण्डारवान्वस्त्रान् आकाशाद्देवपुत्रजैः ॥

---

१ D omits वं । २ D प्रविप्रसन्नानि । ३ D आकाशात् ।

देवदुन्दुभं नेदुश्च[1] प्रशक्तजलदस्वनैः।
दिशश्च विप्रसन्नानि तत्र मङ्गलपूरितम्॥
[2][नानावृक्षानि नम्राणि पवनैश्च विना अपि।
स्वैः स्वैः पुष्पैः फलैः भोग्यैः पूजयामास तं गुरुम्॥
मयूरशुकशारीकैश्चक्रवाकैः प्रकूजितैः।
कृष्णसारैर्मृगैर्द्वन्द्वैः प्रणमन्ति तथागतः॥]
तत्रस्था सर्वलोकाश्च ध्यायन्ते मङ्गले विधैः[3]।
पाद्यादिपूज्यहस्तैश्च प्रायर्युर्जिनसंमुखम्॥
पुष्पधूपादिभिः पूज्यैः पूजयामास सद्गुरुः।
अञ्जलिं[4] शिरसि धृत्वा प्रणम्य पादपङ्कजम्॥
तत्रस्थैः सर्वलोकैश्च पूज्यमान्य[5] स गौरवम्।
विजयामास तत्रैव [6]स्वयम्भूदर्शनं कृतम्॥
शाक्यसिंहोऽथ तं शम्भुं दृष्ट्वा गच्छति सादरात्।
रत्नत्रयालयश्चैत्यं नानारत्नैर्विभूषितम्॥
सौवर्णचक्रसंयुक्तं श्वेतकुब्जं(?)[7] मनोहरम्।
सौवर्णध्वजसंयुक्तं सौवर्णच्छत्रसंयुतम्॥
विश्वमणिसुसंयुक्तं नानारङ्कारभूषितम्[8]।
छत्रध्वजवितानञ्च दिग् [9]सुमालैः सुपूरितम्॥
पश्चिमे स्वमिताभञ्च उत्तरे मोघसिद्धिकम्।

---

१ D ०दुन्दुभि नेन्दुश्च। २ D omits the portion bracketted.
३ D मङ्गलैर्विधैः। ४ D अञ्जलि। ५ D पूजयामास।
६ D स्वायम्भू०। ७ ०कुब्जं। ८ D ०लङ्कारभूषितं।
९ D omits सु।

पूर्वे अक्षोभ्यं श्रीमन्तं दक्षिणे रत्नसम्भवम् ॥
लोचना मामकी तारा पाण्डरा सह संस्थितम् ।
चतुस्तथागतैरित्थं चतुस्ताराभिः शोभितम् ॥
दिग्विदिक्षु स्थितैर्देवैः नानारङ्कारैर्भूषितैः[१] ।
पट्टदूष्यादिभिर्वस्त्रैश्चीनैः काशीकैश्च पावनैः[२] ॥
जाम्बुनदै रत्नयुक्तैः दामैश्चापि विभूषणैः ।
मुक्तादिरत्नजैर्माल्यैः देवताभिः सुपूरितम् ॥
नानागुणविभूषाङ्गं नानारत्नविभूषितम् ।
[३]पट्टदूष्यादिभिर्वस्त्रैश्चीनै काशिकैश्च पावनैः ॥
नानास्वर्णविभूषाङ्गं नानारङ्कारभूषितम्[४] ।
नानावितानसंयुक्तं नानाध्वजसुभूषितम् ॥
नानाचामरभूषाङ्गं नानाघण्ठविभूषितम् ।
ईदृशं रत्नजञ्चैत्यं त्रैलोक्येऽपि सुदुल्लभम्[५] ॥
शान्तिकरकृतञ्चैत्यं स्वयम्भूगुप्तजोद्भुतम् ।
त्रयः पूर्वस्त्रिभिः कोटिदेवताभिः सदास्थितैः ॥
तस्मादन्यं न गच्छन्ति तस्य पूजनतत्परैः ।
गौतमोऽपि च सर्वज्ञः [६]स्वयम्भूपूजनं कृतम् ॥
पूजाङ्गै पूज्ययोग्यैश्च पूजयामास सद्गुरुम् ।
पुष्पै धूपैश्च गन्धैश्च दीपैर्वासैःस्वयम्भूवम्

१ D ०लङ्कारभूषितैः । २ D काशिकपावनैः
३ C adds पट्टदूष्यादिभिरित्यादि । ४ D ०लङ्कार० ।
५ D सुदुर्लभं । ६ D स्वायम्भु० ।

नानाप्रकारजैः पुष्पैः बहुभिश्च प्रदक्षिणैः।
मैत्रेयप्रमुखैः शिष्यैः प्रणमन्तं मुहुर्मुहुः॥
पञ्चाष्टाङ्गेन योगेन प्रणम्याञ्जलिभिस्तथा।
आनन्दप्रमुखैः शिष्यैः भिक्षुभिक्षुण्युपासकैः॥
स्थविरवीतरागैश्च स्वयम्भूं वन्दनां कृतम्।
कैश्चिदष्टाङ्गयुक्तैश्च प्रणामैः पञ्चभिस्तथा॥
कैश्चित्प्रदक्षिणां कृत्वा कैश्चित् स्तोत्रैश्च पाठकैः
कैश्चिच्च धारणीभिश्च नानास्तोत्रैः सुभाषजैः॥
कैश्चित् षडक्षरीमन्त्रैरहर्निशं सुपूजितम्।
भगवानपि संबुद्धः स्वयम्भूपूजनं कृतम्॥
[1]अञ्जलिभिरागच्छति प्रणम्य सह भिक्षुभिः।
पश्चाच्च[2] क्रमते एव सोऽयं तथागतो मुनिः॥
देवासुरमनुष्यैश्च सर्वैः सार्द्धं स गच्छति।
गोशृङ्गपर्वते तत्र चैत्ययो मध्यशृङ्गके॥
स्वयम्भुवः पश्चिमायां पार्श्वे पावनभूषिते।
मञ्जुश्रीवासजचैत्य[3]तद्विधातुजचैत्ययोः॥
तयोर्मध्ये प्रउज्ज्वले पवित्रे शिखरोच्छ्रये।
नानापुष्पादिभिर्वृक्षैर्नानाफलैर्विभूषिते॥
नानागुणैः सुसंयुक्ते नानावृक्षैरलङ्कृते।
नानाधातुभिः संयुक्ते नानारत्नैर्विभूषिते॥

१ D आगच्छत्यञ्जलिभिश्च प्रणत्वा भिक्षुभिः सह।
२ D चंक्रमते। ३ D ०चैत्यं।

नानापक्षिभिः सङ्कीर्णे नानामृगसमाकुले ।
ईदृशि गुणसम्पन्ने तस्मिन् गोशृङ्गपर्वते ॥
अनेकगुणसंयुक्ते तथागतैश्च वासिते ।
अतीतैरपि सर्व्वज्ञैः प्रत्युत्पन्नैश्च नागतैः ॥
शिष्यैः सार्द्धं अनेकैश्च समायातश्च पर्वते ।
इत्यश्च गुणसंयुक्ते गच्छत गौतमो मुनिः ॥
काश्यपप्रमुखैः पञ्चशतैर्भिक्षुभिरावृतः ।
[1]मैत्रेयः प्रमुखैः शिष्यैः बोधिसत्वैर्गणैर्वृतः[2] ॥
ब्रह्मविष्णुशिवशक्रैः नानादेवगणैर्वृतः ।
स भिक्षुभिक्षुणीभिश्च राजन्यैः पौरजैस्तथा ॥
ब्रह्मक्षत्रियवैश्यैश्च शूद्रादिविविधैः[3] जनैः ।
नानादेशसमायातैः शिष्यगणैः परिवृतः ॥
विजयामास सर्व्वज्ञः गौतमो मुनिनायकः ।
तत्रस्थैः सर्व्वलोकैश्च पूज्यमान्यैः[4] सगौरवैः ॥
विवेशयामास तत्रैव शाक्यसिंहो जगद्गुरुः !
नानाविधसुसंयुक्तं रत्नसिंहासनं शुभम् ॥
वज्रैर्वैदूर्य्यमाणिक्यैः[5] मुक्तादिविद्रुमैस्तथा ।
अनेकै रत्नैः संनद्धं सिंहशार्दूरहस्तिभिः[6] ॥
भूषितं रत्नजैर्दामैर्नानापट्टविभूषितम् ।

---

त्रेयप्रमुखैः । २ D बोधिसत्वगणैर्वृतः । ३ D विविधैर्जनैः ।
पूज्यमानैः । ५ D वैदूर्य्य० ।
रत्नसन्नद्धैः सिंहशार्द्दूलहस्तिभिः ।

अनेकैर्दूष्यैर्विस्तीर्णं समन्तः[1] प्रशोभितम् ॥
विश्वकर्म्मभिर्देवैश्च गौतमाय ददन्ति ते ।
चतुर्भिश्च महाराजै वितानं वितते निजम्[2] ॥
पञ्चवर्णसुपट्टैश्च चीनैश्चामरसंयुतम् ।
अनेकैश्चामरैश्चीनैः पट्टदूष्यैर्विभूषितम् ॥
प्रत्येकं च ध्वजां धृत्वा विदिक्षु पर्षदि स्थितः ।
तत्र श्रीभगवान्तस्थौ आच्छन्नमणिमण्डिते ॥
सिंहासने समुच्छ्राये पूर्णेन्दुरिव भासयन् ।
पर्षद्भिर्भगवान्तेन समयेन चतसृभिः ॥
गुरुपूजाकृतस्तेभिः[3] सत्कृतो मानितोऽर्च्चितः ।
देवै नागैश्च मनुजैः गन्धर्व्वैरपि पूजितः ॥
भिक्षुभिर्भिक्षुणीभिर्वा उपाशकैरुपाशिकैः ।
ब्रह्मभिः चत्रियैर्वैश्यैः[4] शूद्रैर्वापि सुपूजितः ॥
पूजयामास तत्रस्थैः शाक्यसिंहो जगद्गुरुः ।
भगवानपि सर्वज्ञ गौतमो मुनिनायकः ॥
अनेके पर्षद्भिः[5]सार्द्धं विजयामास स्वासने ।
मैत्रेयप्रमुखैर्वृद्धैः स्थविरस्थविरादिभिः ॥
भिक्षुभिर्भिक्षुणीभिश्च उपाशकाभ्युपाशिकैः ॥
श्रावकैर्जिनशिष्यैश्च सर्व्वैश्च[6] जिनशेवकैः ।

---

१ D दुष्यविस्तीर्णैं समन्ततः ।   २ D जिनं ।   ३ D स्तेच ।
४ D ब्रह्मक्षत्रियवैश्यैश्च ।   ५ D पर्षदै ।
६ D अन्यैश्च । C omits सर्व्वैश्च ।

पर्षदि आसने तस्थुः योग्ये योग्ये शुभासने[१] ॥
अनकैर्द्देवैर्नागैश्च यक्षकिन्नरनायकैः ।
तत्रजैः सर्वलोकैश्च नक्षत्रैरिव चन्द्रमा ॥
शाक्यसिंहो दयासिन्धुः सत्त्वमालोक्य पर्षदम् ।
प्राभाष्य धर्ममालोक्य तस्थौ लोकैः समुज्वलन् ॥
अथ सर्वेऽद्भुतप्राप्ताः पुष्पैर्न्नाथमवाकिरन् ।
वायुघूर्णा स्वपुष्पैः[२] खैर्नग वालतता इव ॥
कैश्चित् मान्दारवैः पुष्पै महामान्दारवादिभिः[३] ।
कैश्चिच्च चम्पकैः पुष्पैः कैश्चिच्च पारिजातकैः ॥
कैश्चित् सुपुण्डरीकैश्च कैश्चिन्नीलोत्पलैरपि ।
कैश्चिदपि कुमुदैश्च[४] कैश्चिच्चन्दनचूर्णकैः ।
कैश्चित् नानाविधैर्गन्धैः कैश्चिन्नानाप्रधूपनैः ।
कैश्चिन्नानाविधैर्वस्त्रैः कैश्चिच्च पुष्पराशिभिः ॥
जलजैः स्थलजैः पुष्पैः लाजाक्षतसुगन्धिभिः ।
इत्थं नानाविधैः पूज्यैः पूजयामास स[५] आदरात् ॥
शतैर्भिक्षुगणैः सार्द्धं काश्यपप्रमुखैः शतैः ।
बोधिसत्त्वगणानाञ्च ब्रह्माविष्णुमहेश्वरैः ॥
अपरैर्द्देववृन्दैश्च यक्षकिन्नरनायकैः ।
अञ्जलिं शिरसि धृत्वा नमितैः पद्मनामकैः ॥

१ C योग्ये शुभासने । D योग्ये शुभासने सुखं ।
२ D स्वपुष्पैश्च नगं । ३ D मन्दारवैः पुष्पैर्महामन्दारवादिभिः ।
४ D कुमुदकैः । ५ D omit स ।

तस्मिन्नवसरे चून्दा[1] भिक्षुणी पर्वते वशत्[2] ।
मञ्जुश्रीसंज्ञके धर्म्मश्रवणार्थं प्रपद्यते ॥
तत्र पुष्पाणि सूत्राणि सुगन्धीनि बहूनि च ।
आदाय पूजयामास शाक्यसिंहं सगौरवम् ॥
लाजाक्षतसदुर्वाभिः अञ्जलिं शिरसा वहन् ।
अष्टाङ्गेन च योग्येन[3] नमयामास सद्गुरुम् ॥
सदा तत्र तथागतचैत्य[4] सा परिचारिका ।
वन्दते गौतमपादौ[5] तत्रैकान्ते सुसंस्थिता ॥
अथ गौतमनाथोऽसौ शाक्यसिंहो जगद्गुरुः ।
सर्व्वेषां पर्षदानाञ्च त्रिकायपरिशुद्धिनाम् ॥
विलोक्य सकलं पर्षन्धर्म्मचिन्तितमानसम् ।
तच्चैत्योद्देशश्रवणे सक्तादरनिरन्तरम् ॥
तथागतमुखाम्भोजविनिर्गतामृतोन्मुखम् ।
प्रवर्त्तते सन्ध्याकाले पूर्णेन्दुकुमुदमिव[6] ॥
तथागतमुखाम्भोजविनिर्गतः श्रियोन्मुखम् ।
प्रभातसमयप्राप्ते[7] आदित्यपङ्कजमिव ॥
एवं बहुविधं सर्वं दृष्ट्वा पर्षदनीमिषम् ।
किञ्चिदपि वच नोक्तं जड़ा च पण्डिते इव ॥

१ B चूढा । C and D चूडा । २ D वसत् । ३ D योगेन
४ D सदा तथागत तत्र चैत्ये । ५ D गौतमं पादौ ।
६ D सन्ध्याकाले प्रवर्त्तन्ते पूर्णेन्दुकुमुदेव च ।
७ D °समये ।

इति ज्ञात्वा स सर्वज्ञः शाक्यसिंहः सद्ब्रह्मवित्[१] ।
धर्म्मादेशं स सञ्चिन्त्य[२] स्मृतिमुखमभूत्तदा ॥
ऋजुकायं प्रणिधाय[३] चतुर्ध्यानेषु तत्परः ।
कायवाक्चित्तसहिता स्थितो निश्चित्तमानसम् ॥
जनानामपि सर्वेषां चेतांसि ज्ञातवान् गुरुः ।
सर्वज्ञस्य जगन्नाथ ध्यानेषु तत्परोऽभवत् ॥
सर्वे सभाजनाश्चापि सर्वज्ञदर्शनोत्सुकाः ।
विलोक्य गौतमं नाथं तिष्ठन्ते स्तम्भना इव ॥
ततः सर्वज्ञकल्पोऽयं मैत्रेयः सहसोत्थितः ।
तथागतप्रभावाच्च ज्ञात्वा स्थविरनायकः ॥
जनानामपि सर्वेषां चेतांसि पुण्यभावजान् ।
चीवरमुत्तरासङ्गं कृत्वा ब्रह्मविदाम्वरः ॥
प्रदक्षिणत्रयं कृत्वा दक्षिणं जानुमण्डलम् ।
स्थाप्य भूमौ करपुटं धृत्वा शिरसि सादरम् ॥
पृच्छयामास प्रयतः शाक्यसिंहं गुणोदधिम् ।
इति बुद्धालय[४] श्रीमान् कस्य काले बभूव सः ॥
तथागतस्य यस्याद्यदर्शनाज्जनिनामिह ।
शान्ति पापस्य नियतं फलं किं किं भविष्यति ॥
येऽपि सत्त्वा अस्य धर्म्मधातु वागीश्वरस्य च ।
पूज्यवन्द्यादिकान् कृत्वा तेषां किं किं भविष्यति ॥

---

१ D स ब्रह्मवित् । २ A धर्म्मोदेशं सञ्चिन्त्य ।
३ D प्रणिधयन् । ४ A बुद्धारय ।

चक्षुषा दर्शनं तस्य कृत्वा मोहं विशुध्यति।
श्रुत्वा श्रोत्रेण तन्नाम[१] सर्वधर्मं प्रशूयते॥
तद्गन्धं घ्राणमाघ्राय घ्राणदोषं प्रशुध्यति।
तत्स्तोत्रं जिह्वया कृत्वा भवन्ति पण्डिता द्रुतम्॥
कायेन स्पर्शनं कृत्वा सर्वपापं दुरीकृतम्।
मनसा चिन्तितेनैव दधाति चित्तस्थिरताम्[२]॥
दशाकुशलजं पापं सर्वत्रापि दुरीकृतम्।
दश कुशलजं पुण्यं सर्वत्रापि प्रसूयते॥
पूर्वेऽपि पञ्चजन्मानि पश्चिमेऽपि[३] तथैव च।
सर्वेषां जन्मजन्मानां सर्वपापं प्रशुध्यति॥
एवं बहुगुणैर्युक्तं धर्मधातु स्वयम्भुवम्।
दर्शनं स्पर्शनं कृत्वा फलं किं किं भविष्यति॥
तन्मे वद प्रभो सर्वं परमार्थविचारतः।
फलं तस्य न जानामि वद मे वादिपुङ्गव॥
एवं मुक्ते च मैत्रेयं भगवानसौ भाषतः[४]।
शृणु साधु च सुष्ठु च भाषिष्ये मनसि कुरु॥
साधु मैत्रेय ते वक्ष्ये सत्त्वार्थं यच्च पृच्छसि[५]।
वच्मि[६] तत् सकलं भूत्वा सावधानमतिः शृणु॥
विस्तरातीतकालेऽस्मिन् भद्रकल्पे प्रजायुषी।

---

१ A तन्नामं। २ D स्थिरतां मनः। ३ A C D पञ्चमे।
४ D एवमुक्ते च मैत्रेयं भगवांस्तासौ प्रभाषतः।
५ B पृच्छति। ६ D वदमि।

अशीति च सहस्रेण काले तस्मिनजीजनत्[१] ॥
बन्धुमत्यां नगर्य्याञ्च बन्धुमानिति ख्यातवान् ।
राजा भवति शुद्धात्मा सदोत्साहि दयान्वितः ॥
सप्तरत्नैः सुसंयुक्तश्चक्रवर्त्ती भवत्यसौ ।
धर्म्मात्मा धर्म्मशीलश्च पुत्रवत्पालितः प्रजाः ॥
गोत्रकुलेन संपन्ना तस्य पत्नी अभूत्तदा ।
तया पुत्रं जनेष्यातु लक्षणैः समलङ्कृतम् ॥
सा[२] आगारं परित्यज्य सम्यक्सम्बोधिमाप्नुयात् ।
पाटलावृक्षमाश्रित्य सम्बुद्ध तेजसांवरः ॥
विपश्वी नाम भगवान् विद्याचरणसंयुतः ।
शिष्यो भवामि तस्य वै काले तस्मिन्नहं व्रती ॥
नामेति सत्यधर्म्मस्तं सेवयामास भावतः ।
पिण्डपात्रादिभिर्योग्यैः वस्त्रादिशयनासनैः ॥
विपश्विनोऽपि कालेऽस्मिनयं नेपालमण्डलः ।
कालीह्रद इति ख्यातः पयोभिः सम्प्रपूरितः ॥
यदा स भगवाञ्छास्ता बन्धुमत्यां पुरोऽन्तिके[३] ।
विहारे धर्म्ममादिश्य विजहार ससाङ्घिकः ॥
तदाहन्तं जगन्नाथमाराध्य समुपस्थितः ।
तदनुशासनं श्रुत्वा चरामि बोधिसंवरम् ॥
तदाभूत् सप्तक्रोशकव्यायामो[४] कालीह्रदः ॥

---

१ B न जीवति । २ D स । ३ D पुरान्तिके ।
४ B सप्तक्रोश० । D सप्तक्रोशस्च ।

आयामो दीर्घतस्तावत् सदा शुद्धजलैः शुचिः ।
वरुणादिनागराजैः सर्वैः सततवासितः[1] ॥
ह्रदो भूत्वा स्थितो नाम नागवास इतीरितः ।
तक्षकादिभिश्चैव शङ्खपारः सुरूपस्तथा[2] ॥
कुलिक अपरारश्च[3] नन्दोपनन्दकौ तथा ॥
वासुकिर्वारुणश्चापि पद्मोऽपि महापद्मकः[4] ।
श्रीकान्त्यादिभिर्नागैश्च नागराजैर्गणै युतः ॥
इत्येवमादिभिर्नागैः सर्वनागैः परिवृतः ।
सर्वैश्चापि नागलोकैः सदा च तत्र वासितः ॥
आरोग्यं मधुरं स्वच्छं भुक्तजीर्णकरिं[5] लघुम् ।
सुशीतरं सुगन्धं च इन्दुवर्णाद्दवारिणा ॥
अष्टाङ्गख्यातशलिल नानोत्पर[6]विराजितः ।
हंसशारसकालण्ड[7]चक्रवाकैः प्रकूजितः ॥
माने सरोवरायातैः[8] राजहंसैः सदा स्थितः ।
तस्मादन्यं न इच्छन्ति माने सरश्च[9] विस्मितम् ॥
बलाकाकलहंसैः शितेतरैर्मरिनैर्वकैः ।
वरढालक्ष्मणाभिश्च क्रौञ्चादिभिः परिवृतः ॥

---

१ D शतत० । २ B शङ्खपारसुरूप् तथा । D शङ्खपालसुरूपकः ।
३ D अपलालश्च ।
४ D वासुकीर्वारुणश्चापि महापद्मश्च पद्मकः ।
५ B ०कलिं । ६ D नानोत्पल० । ७ D ०कारण्ड० ।
८ D सरोवरमायातैः । ९ D मानसरश्च ।

नानाद्विजलजैर्नक्रैः[१] सफलीभिः प्रपूरितः ।
कूर्म्ममकरशूचैस्तु जलजन्तुभिरावृतः ॥
गौधेयैः चुद्रशङ्खैश्च दुर्नामाभिश्च मण्डुकैः ।
कुम्भीरैर्मद्गुरैरुद्रैः कमठीभिः परिवृतः ॥
शङ्खैः शुक्तिभिः शम्बूकैः राजीवैर्गण्डकैर्चक्रैः[२] ।
कुलीरैः शकुलैः शालैः एतैस्तैः सम्प्रपूरितः ॥
इत्येवमादिभिर्वृन्दैर्जलजन्तुभिरावृतः[३] ।
जलपक्षिभिः सर्वैश्च सदा तत्र निवासितः ॥
सौगन्धिकैः कुवलयैरिन्दीवरैश्च कैरवैः ।
नीलोत्पलैः पद्मिनीभिररविन्दैः कुशेशयैः ॥
रक्तोत्पलैश्च कमलैः पुण्डरीकैः सुपूरितः ।
संवर्त्तिकैर्वीजकोषैः पत्रकिञ्जल्ककेशलैः ॥
इत्येवं जलजैः पुष्पैः नानापुष्पैः सुपूरितः ।
नानागन्धैः सुसंयुक्तस्तद्ह्रदस्य समन्ततः ॥
वज्रवैदूर्य्यरत्नैश्च जाम्बूनदैः सुसारकैः ।
विद्रुमैर्विविधैर्वित्तैः[४] रत्नैश्च परिपूरितः ॥
हरिन्मणिपद्मरागैर्रूप्यैश्च[५] कनकादिभिः ।
दक्षिणावर्त्तकैः शङ्खैर्नानाशङ्खविशेषकैः ॥
सूर्य्यकान्तिमणिभिश्च चन्द्रकान्तैस्तथैव च ।
इत्यादिविविधै रत्नैः पाषाणैश्च प्रपूरितः ॥

---

१ A मंक्रैः ।　　२ D र्भषैः ।　　३ D रादितः
४ D चित्तै ।　　५ A C D रूपैः ।

कालीह्रद इति ख्यातो एतैश्च गुणभूषितः ।
कालीनामापि[1] नागेशस्तद्ह्रदाधिपतिरभूत् ॥
बहूनां जलवासीनां आधारः पक्षिणां सदा ।
समन्तात् कल्पवृक्षाणि सुगन्धीनि बहूनि च ॥
जातानि फलहृद्यानि गन्धवर्णयुतानि च ।
समन्तात्तस्य संजाताः पुष्पावृक्षाः[2] सुगन्धिनः ॥
तद्ह्रदस्य समन्ताच्च शिलोच्चयैः परिवृतः ।
पाषाणैः शिखरैः प्रस्थैः दरीनिर्झरगह्वरैः ॥
अरण्यैश्च निकुंजैश्च काननैर्विविधादिभिः ।
धातुगैरिकखरिभिरित्यादिविविधैर्धरैः ॥
प्राकारमिव तिष्ठन्ति सर्वैर्नीलैश्च पर्वतैः ।
तद्ह्रदस्य समन्ताच्च परिवृतः सुशोभितः ॥
व्याघ्रार्क्षसिंहऋषभिव्याडशूकरहस्तिभिः ।
तरक्षुजम्बूकखड्गैर्मर्कटवृषदंशकैः ॥
श्वाविद्गातप्रमीभिश्च चमूरुसमूरुर्मृगैः ।
हरिणैः कृष्णशालैश्च गोकर्णमूषिकादिभिः ॥
पारावतभरद्वाजैर्मयूरशूककोकिरैः[3] ।
जीवंजीवादिभिः श्येनैर्वायसा गतिखञ्जनैः ॥
कङ्कवासकलिङ्गैश्च वातशतपत्रकैः[4] ।
कुर्कुटकरविङ्कैश्च क्वणकोकिलैरपि ॥

१ D ॰नामोऽपि ।
२ D पुष्पवृक्षाः ।
३ D ॰कोकिलैः ।
४ D ॰स्चक्रवाकशतपत्रकैः ।

वायसाटभ्रभातायिउत्क्रोशकुक्कुभप्लवैः[१]।
कोयष्टिकटिटिभकैर्हारीतैश्च चकोरकैः॥
परोष्टीपुत्तिकादंशैर्दंशीगन्धोरीवीचिभिः।
खद्योतसरघाभृङ्गैः इत्यादिजन्तुभिर्गणैः॥
इत्येवमादिभिर्वृन्दैः खेचरैर्भूचरैस्तथा।
नानाकृतसमायुक्तैः तत्समन्तात् समाययुः॥
सदात्र त्रिदशैः सार्द्धं अप्सरोभिः प्रमोदितः।
स्नानक्रियादिकं कृत्वा सौख्यं भुक्त्वा दिवं ययुः॥
तथा ब्रह्मादयः सर्वे महर्षयस्तपस्विनः।
स्नानसन्ध्यादिकं कर्म्म[२] कृत्वा संसेविरे सदा॥
एवं लोकाधिपाश्चापि स्नात्वात्र सर्वदा मुदा।
स्वं स्वं कुलेशं अभ्यर्च्य महोत्साहैर्निषेविरे॥
एवमन्येऽपि लोकाश्च व्रतिनो ब्रह्मचारिणः।
स्नानसन्ध्यादिकं कृत्वा पूतात्मानं दिवं ययुः॥
बोधिसत्वैस्तथानेकैः स्नानसन्ध्यादिकं सदा।
कृत्वात्र विमलात्मानं समाययुर्जगद्धिते॥
एवं सर्वैर्मुनीन्द्रैश्च स्नानसन्ध्यादिकं सदा।
कृत्वा महत्फलं लब्ध्वा बभूवुः सौगतात्मजाः॥
येऽत्र स्नात्वा त्रिरत्नानां शरणे समुपाश्रिताः।
बोधिचर्य्याव्रतं धृत्वा सञ्चरन्ते जगद्धिते॥
ते रघुविमलात्मानो[३] भद्रश्रीसद्गुणान्विताः।

१ D ककुभप्लवैः। २ D कर्म्म। ३ D ते लघुविमलात्मानां।

बोधिसत्वा महाभिज्ञा[1] बभूवुः सौगतात्मजाः ॥
केचिन्निःक्लेशितात्मानो भवसञ्चारनिस्पृहाः ।
श्रावकबोधिमासाद्य बभूवुर्ब्रह्मचारिणः ॥
केचिच्च निर्मलात्मानो संसारविरताशया ।
प्रत्येकं बोधिमासाद्य सुनिर्वृतिं समाययुः ॥
केचित्सम्बोधिचित्तञ्च प्राप्य सद्धर्मलालसा ।
बोधिचर्य्याव्रतं धृत्वा समाचरे जगद्धिते ॥
केचित्स्वर्गं गता भुक्त्वा दिव्यकामं सुखं सदा ।
सद्धर्म्मगुणसंरक्ताः सञ्चरन्ते जगद्धिते ॥
केचित्सर्वे महीपालाः सुनीतिधर्म्मचारिणः ।
कृत्वा सत्त्वहितार्थानि ययुरन्ते जिनालयम् ॥
अहमपि तदा तत्र स्नानसन्ध्यादिकं सदा ।
कृत्वा पुण्यं विशुद्धात्मा सञ्चरामि जगद्धिते ॥
येऽप्यस्य जल पीवन्ते तेऽपि निमुक्तपातकाः[2] ।
परिशुद्धाशया भद्रा बभूवु सौगतात्मजाः ॥
एवमनुत्तरं तीर्थं सर्वैरपि मुनीश्वरैः ।
त्रिदशालयैर्द्देवैश्च[3] प्रशंसितं महीतले ॥
इत्यादिष्टं मुनीन्द्रेण विपश्चिना निशंम्यते ।
सर्वे सभाश्रिता[4] लोकाः प्राभ्यनन्दन् प्रबोधिताः ॥

१ D महाभिज्ञो ।    २ D निर्मुक्त०
३ D त्रिदशालयदेवैश्च ।    ४ D ०स्थिताः

इति विपश्विनादिष्टं गुरुणा मे श्रुतं यथा ।
तथा युष्मान्प्रबोधार्थं समाख्यातं प्रबुध्यताम् ॥
इत्यादिष्टं मुनीन्द्रेण श्रीघनेन निशम्यते ।
मैत्रेयादि सभालोकाः सर्वेऽपि संप्रमोदते ॥

इति श्रीमति बृहत्स्वयम्भूपुराणे श्रीधर्मधातुकालीह्रदसमुत्पन्नकथायां प्रथमोऽध्यायः ॥

# द्वितीयोऽध्यायः ।



अथ धीमान्महासत्त्वो मैत्रेयः स जिनात्मजः ।
भगवन्तं पुनर्नत्वा साञ्जलिरेवमब्रवीत् ॥
भगवञ्छ्रोतुमिच्छामि स्वयम्भूत्पत्तिसत्कथाम् ।
तद्भवान्समुपाख्यातु लोकानां संप्रबोधने ॥
इति संप्रार्थिते तेन मैत्रेयेन सुधीमता ।
भगवान्तान्सभालोकान्संपश्यन्नेवमादिशत् ॥
साधु मैत्रेय सर्वेऽपि सभालोकाः समादरात् ।
शृणुध्वं संप्रवक्ष्यामि स्वयम्भूत्पत्तिसत्कथाम् ॥
तस्य निर्वाण संप्रागते[१] काले सुदीर्घके ।
भद्रमेवापि कल्पेऽस्मिन्वर्षे सप्ततिसंज्ञके ॥
सहस्रेण जनस्यायुरभवन्नृपसत्तमः ।
नगर्यां अरुणाख्ये च सर्वलोकनिवासिनि[२] ॥
नानाजनैः सुसङ्कीर्णे नामनागल[३]पूरिते
अनेकैर्गुणसंयुक्ते साधर्म्मपत्निना सह ॥
राज्यं चकारयामास प्रजा सुपालयन् सुधीः ।
धर्म्मात्मा धर्म्मशीलस्य पुत्रवत् पालितः[४] प्रजान् ॥

---

१ D ०सम्प्राप्ते गते । २ D ०निवासिनी ।
३ D नामं नागल० । ४ D पालयन् ।

तस्य पुत्रोऽभून्नाम[१] शिखी तथागतो मुनिः ।
सर्वलक्षणभूषाङ्गः[२] सर्वगुणविभूषितः ॥
गृहवासं[३] परित्यज्य संबोधिज्ञानमाप्नुयात् ।
पुण्डरीकस्य मूले तु स्थिला स वरदांवरः ॥
क्षमराज[४] अभून्नाम तस्य शिष्यो भवाम्यहम् ।
बोधिसत्वोऽहमभवत्तदाराधनशुद्धधीः ॥
चीवरपिण्डपात्रादिभैषज्यशयनासनैः ।
नानापूज्यादिभिर्योग्यैः पूज्ययामास तस्य वै ॥
तदैकसमये [५]सोऽर्हंभगवान् सर्वविच्छिखी ।
सद्धर्मसमुपादेष्टुं[६] सभासने समाश्रयेत् ॥
तदा[७] च भिक्षवः सर्वे श्रावका ब्रह्मचारिणः ।
भिक्षुण्यो व्रतिनः सर्वे उपासका उपासिकाः[८] ॥
तत्सद्धर्मामृतं पातुं समुपागत्य तं मुनिम् ।
नत्वा साञ्जलयः सर्वे परिवृत्य समन्ततः ॥
तदा ब्रह्मामरेन्द्रो[९] हि त्रिदशैः सह आगताः ।
सर्वे लोकाधिपाश्चापि धर्मश्रोतुमुदागताः ॥
सिद्धा विद्याधराः साध्या यक्षगन्धर्वकिन्नराः ।
गरुडा राक्षसेन्द्राश्च दैत्या नागाधिपा अपि ॥

---

१ D तस्य पुत्रो बभूव्नाम । २ D ०पूर्णाङ्गः । ३ A ०वास ।
४ D क्षेमराजा । ५ D सोर्हन् । ६ D ०दिष्टुं ।
७ A तदा भिक्षवः । ८ D उपाशक उपाशिकाः ।
९ C and D ०सुरेन्द्रो ।

ऋषयो ब्राह्मणाश्चापि आर्त्तिर्थिकास्तपस्विनः ।
यतयो योगिनश्चापि तीर्थिकाश्च दिगम्बराः ॥
राजानः क्षत्रियैर्वैश्याः[1] अमात्या मन्त्रिणगणाः ।
शिल्पिनो वणिजः सार्थवाहश्च[2] महाजनाः ॥
पौरा जानपदा ग्राम्यास्तथान्यदेशवासिनः ।
तत्सद्धर्मामृतं पातुं सहसात्र समागताः ॥
सत्पूज्याङ्गं[3] समादाय समीक्ष्य तं मुनीश्वरम् ।
यथाक्रमं समभ्यर्च्य कृत्वानेकप्रदक्षिणाम् ॥
कृताञ्जलिपुटो नत्वा परिवृत्य समन्ततः ।
पुरस्कृत्य समुद्वीक्ष्य समादरादुपाश्रयत् ॥
तान् सर्वान् समुपासीनान् दृष्ट्वा स भगवाञ्छिखी ।
आदिमध्यान्तकल्याणं सद्धर्मं समुपादिशत् ॥
तत्सद्धर्मामृतं पीत्वा सर्वे लोकाः प्रबोधिताः ।
सद्धर्मसाधने रक्ता[4] बभूवुः सर्वमानसाः[5] ॥
तदैवात्र ह्रदे जातं शकता चक्रमानतः ।
सहस्रदलसंयुक्तं पद्मञ्च [6]रूक्मपत्रकम् ॥
ऊर्द्धवज्रमधोमुक्तं[7] मध्ये सुपद्मरागकम् ।
रत्नैर्नानादिभिर्युक्तं किञ्जल्कैः परिपूरितम् ॥
जाम्बूनदबीजकोषं समन्ततः प्रकाशितम् ।

---

१ D क्षत्रिया । २ D ०वाहश्चापि । ३ D तत्पूजाङ्ग ।
४ D रक्षा । ५ D ०मानवा । ६ A रूक्य० ।
७ A ऊर्द्धवज्रमधमुक्तं ।

नर्त्तनीमिन्द्रनीलञ्च वैदूर्य्यं पद्मनारकम्[१] ॥
पञ्चरत्नमयं पद्मं समन्ततः सुशोभितम् ।
विशालदलसंयुक्तं प्रोज्ज्वलन्तस्य कर्णिकाम् ॥
सूर्य्यसहस्रादधिकैर्लक्ष्मीभिः संप्रपूरितम् ।
श्रीभिश्च तद्बभूवापि इन्दुः चीरनिधाविव ॥
लोकधातुषु सर्वेषु बौद्धचेत्रे विशेषतः ।
त्रिसाहस्रमहालोके अन्यत्रे नास्ति कुत्रचित् ॥
सर्वगुणविभूषाङ्गं सर्वलक्षणमण्डितम् ।
सर्वरत्नैः सुसंनद्धं जाम्बूनदैः समन्ततः ॥
ईदृशं रत्नजं पद्मं त्रैलोक्येऽपि सुदुर्लभम्[२] ।
[३]विश्वकर्म्मभिर्द्देवैश्च दर्शनं विस्मयं भवेत् ॥
इत्येवं जलजं रत्नसंपूर्णगुणभूषितम् ।
महोपेन्द्रादिभिर्द्देवैः पूजितं वन्दितं सदा ॥
तत्र स्फटिकसंकाशः स्वयम्भूर्भगवान्प्रभुः[४] ।
जातश्च धर्म्मधातुः सः सर्वलक्षणमण्डितः ॥
एकहस्तप्रमाणेन बभूवश्चैत्यरूपजः[५] ।
विचित्रचित्रतेजश्च[६] ज्योतिरूपः सुशोभितः ॥
सहस्रसूर्य्यादधिकैः श्रीभिश्च संप्रशोभितः ।
जगदाह्लादरूपेण पूर्णचन्द्र इव स्थितः ॥

---

१ D ०रागकं । २ A सुदुल्लभं । ३ B विश्वकर्म्माभिः ।
४ D ०सङ्काशां स्वयम्भू भगवान् प्रभुः । ५ D बभूव चैत्य० ।
६ D विचित्रतेजरूपश्च ।

देवेभ्यो रूप्यधातुभ्यः ह्यसङ्ख्यैः देवगणादिभिः ।
ज्योतिभिः पूरितः सोऽयं भगवान् जगदीश्वरः ॥
यस्मिन् स्वयम्भू उत्पन्नमात्रेण त्रैलोक्ये[१] स्फुटितं भवेत् ।
केश्चित्स्वर्गं प्रगच्छन्ति मर्त्त्यं केश्चित्समन्ततः ॥
पातारे[२] अपि केश्चिच्च सर्वलोकं प्रकाशितम्[३] ।
चतुर्महाराजिकाश्च त्रायत्रिंशा तथा अपि ॥
यामा च तुषिताश्चापि निर्म्माणरतीं सवर्त्तिं[४] ।
कायकाश्च पुरोहितां[५] महाब्रह्मां[६] तथा अपि ॥
परीत्ताभां प्रमाणाभां आभास्वरां समन्ततः ।
इत्यशुभां मानशुभां शुभकृत्स्नामनभ्रकाम् ॥
सवां[७] फलां हृहाश्चापि तपां दृशां सुदर्शनाम् ।
कनिष्ठां स्वर्गभुवनां[८] समन्ततः प्रपूरितम् ॥
शम्भूनाथस्य लक्ष्मीभिः सर्वं स्वर्गं प्रकाशितम् ।
सञ्जीवं कालसूत्रञ्च सङ्घातं रौरवं तथा ॥
प्रतापनञ्च तपनं अवीचिमर्वुदमपि[९] ।
निरर्वुदञ्च अटटं हहवं तथा[१०] ॥
उत्पलमपि पद्मञ्च महापद्मञ्च[११] नारकम् ।

१ D त्रैलोक्यं । २ D पाताले । ३ D सर्व्वलोकप्रकाशितं
४ D यामां च तुषिताश्चापि निर्म्माणवशवर्त्तिकां ।
५ D पुरोधाहिं । ६ B मब्रह्मा । ७ D सुवां ।
८ D ०भुवानां । ९ D अर्व्वुदन्तथा ।
१० C ऊवुवं हाहावं तथा D हाहेतन महाभयं ।
११ D पद्मा च महापद्मा च ।

उष्णाश्च नरके[1] शीतिभूताः शीते[2] चापि सुउष्णिकाः ॥

भवन्ति सर्वसत्वानां शम्भोऽस्यापि सुलब्धिभिः ।

ईदृशं गुणसम्पन्नं शम्भूं[3] धाममयं प्रभुम् ॥

अनेकगुणसंयुक्तं त्रैलोक्येऽपि सुदुर्लभम् ।

वन्दनीयं परं स्वस्ति पूजनीयं विशेषतः ॥

नानार्थस्यापि[4] दातारं देवासुरनरेषु च ।

स देवमनुजादीनां हिताय च सुखाय च ॥

मोक्षाय च बभूवोऽयं स्वयमुत्पन्नेन कृति ।

सर्वलक्षणसंपूर्णं ज्येष्ठः श्रेष्ठः सदेवको[5] ॥

माननीयस्य पूज्यस्य मनोरथफलप्रदः ।

अस्याप्युत्पन्नमात्रेण प्रहर्षा दिवसा ययुः ॥

धरा वसुमती जाता पुष्पवृष्टिर्दिवो भवेत् ।

तत् मह्रीसाहस्रं[6] कम्पः स्थावरैः सह सागरैः ॥

अक्षुभ्यद्‌चुक्षुभ्यच्चापि[7] समन्ततः दिशो दशः ।

उन्नतिः पूर्वदिग्भागं पश्चिममवनम्यति ॥

दक्षिणमुन्नतिश्चापि उत्तरमवनम्यति ।

पश्चिममुन्नतिश्चापि पूर्वञ्च अवनम्यति ॥

उत्तरमुन्नतिश्चापि दक्षिणमवनम्यति ।

अग्निदिशमुन्नतिश्च[8] वायुव्यमवनम्यति ॥

---

१ A उष्णानरके । २ D omits शीते । ३ D शम्भुं ।
४ D ०स्यापि च । ५ B सदेवकः । ६ A तत् मह्रीसासं
७ D अक्षुभ्यत् चक्षुभ्यच्चापि । ८ D अग्निर्दिशं ।

नैरृत्यमुन्नतिश्चापि ईशानमवनम्यति ।
वायव्यमुन्नतिश्चापि ऐशानमवनम्यति ॥
ऐशानमुन्नतिश्चापि वायव्यमवनम्यति ।
दिशश्च विदिशश्चापि अवनम्यन्प्रउन्नतिः ॥
गर्त्तं प्रउन्नतिरपि उच्चञ्च अवनम्यति ।
चम्पकैश्चापि कुन्दैश्च पालिजातैश्च[1] यूथिकैः ॥
मल्लिकाभिर्नागपुष्पै यवाकुसुमकादिभिः ।
पुष्पान्ये तु पुष्पवृक्षै[2]र्नानाऋतुषु जातकैः ॥
विना वायुरपि वृक्षैः पूजयामासु शम्भूवम् ।
दाड़िमैः पनसैर्विल्वैश्चूतैश्च बीजपूरकैः ॥
कदलीवदलीपूगैस्तालैश्च नारि[3]केलकैः ।
द्राक्षादिखर्ज्जुलैश्चापि नानाऋतुफलैरपि ॥
वायुर्विना अपि वृक्षैः प्रनम्राणि भवन्ति च ।
सर्वैश्च पर्वतैर्वृक्षै नमयामासु तं प्रभुम् ॥
यत्र स्वयम्भूरुत्पन्नस्तत्रानम्यति संमुखम् ।
सुगन्धैः केशलैर्वर्णैर्युक्तैश्च वृक्षजातिभिः ॥
संच्छन्नोऽयश्च पुष्पकैः[4] नगं बाललता इव ।
इत्थं पुष्पान्यपातुश्च[5] पुष्पवृक्षैः समन्ततः ॥
विना वायुरपि वृक्षैः राजानमपि पौरजैः ।
एतैः प्रकारैर्विविधैः समन्ततः प्रणम्यति ॥

---

१ D पारिजातैश्च । २ D पुष्पाण्यन्ये तु वृक्षैश्च ।
३ D नारी० । ४ D सुपुष्पैश्च । ५ D पुष्पां पपातुश्च ।

इत्थं षड्भि प्रकारैश्च सागरान्तां वसुन्धराम् ।
आकनिष्ठं सुमेरुञ्च पातारमपि[1] कम्पति ॥
गर्ज्जत्प्रगर्ज्जदिविधैर्मेरुञ्चापि स पर्वतम् ।
सागरादिभिः सामुद्रैस्सप्तभिश्च समन्ततः ॥
वेलामुत्तीर्य्यते नूनं चत्तुभ्यत्साधरा मही ।
तस्मिं ह्यौकसदेवाश्च प्राप्ताश्चर्य्य[2] सांप्रतम् ॥
नानाप्रकारैर्युक्तैश्च मङ्गलैश्च प्रपूरितम् ।
इति किं युक्तमत्यर्थं प्रविचारविचारिताः ॥
भवन्ति सर्वे देवेशा[3] आशु तत्क्षणमेव च ।
दिव्येन चक्षुषा पश्य श्रोत्रेण च सुशब्दकम् ॥
घ्राणेन गन्धमाघ्राय रसञ्च रेह्य[4] जिह्वया ।
कायेन दिव्यसंस्पर्शं मनसा ज्ञान प्राप्यते ॥
इत्थं नानाप्रकारेण मङ्गलैः शुभसंयुताः ।
पूर्वाधिकतलं[5] गौरं अत्यर्थं मङ्गलं शुभम् ॥
स्वयम्भूवः प्रभावाच्च त्रिदिवेषु भवन्ति च ।
इत्येवं त्रिदशा देवा विज्ञाताश्च समन्ततः ॥
बभूवुः सर्वदेवानां चेतांसि मङ्गलानि च ।
इन्द्रोऽपि अथ देवेशः ज्ञात्वा शम्भोः सुतेजसा ॥
आज्ञा च कारयामास चतुर्णां राजपर्षदाम् ।
भो भो चत्वार राजानः शृण्वन्तु शासनं मम ॥

---

१ D पातालमपि ।   २ D प्राप्ता आश्चर्य्य ।
३ D सर्व्वदेवेशा ।   ४ D लेह्य ।   ५ B and C पुर्व्वा° ।

श्रीः स्वयम्भू[१] जगन्नाथ उत्पन्नं मर्त्त्यमण्डले ।
जम्बुद्वीपे शुभे रम्ये हैमालये शुभप्रदे ॥
विशेषेण च नेपाले कालीह्रदप्रख्यापिते[२] ।
नानादेवगणैर्युक्ते नानामङ्गलपूरिते ॥
नानागुणसुसंयुक्ते त्रैलोक्येऽपि सुदुर्लभे ।
ईदृशि[३] गुणसम्पन्ने स्वयम्भू जगदीश्वरः ॥
तत्पूजनाय गच्छामि युष्माभिः सह मण्डले ।
अथ सर्वेऽद्भुतप्राप्ताः सर्वैश्च[४] त्रिदिवौकसा[५] ॥
युष्मान्[६] संपेतुः नेपाले आशु इन्द्रस्य आज्ञया ।
केश्चिन्मान्दारवैः पुष्पैः महामान्दारवादिभिः ॥
चन्दनचूर्णसंस्कृतैः समन्ततः प्रशोभितम् ।
केश्चिद्देवदुन्दुभं नेदुर्दिशश्चापि समन्ततः[७] ॥
अप्सरोभिस्सुगीतैश्च मङ्गलैश्च प्रपूरितम् ।
पूर्णघट समादाय जलैः शिक्ताः समन्ततः ॥
स्वयम्भूं पूजयामास गन्धपूरितवारिभिः ।
अथ इन्द्रोऽपि देवेशः अप्सरोभिः परिवृतः ॥
देवपुत्रगणैः सार्द्धं समायातश्च मण्डले ।

१ D श्रीस्वयम्भू । २ D कालीह्रदेतिसंज्ञके । ३ D
४ B सर्व्वैश्च । D सर्व्वैश्च । ५ D त्रिदिवौकसाः ।
६ B and D पुष्पान् । ७ D has two different readings.
केश्चित् देवेन्द्रवाद्यश्च नेदुर्दिशसमन्ततः ।
केश्चित् दुन्दुभिवाद्येन नेदुर्दिशसमन्ततः ।

केश्चित् पुष्पान्सुसंगृह्य केश्चिन्मालान्तथा अपि ॥
केश्चिन्दामान्परिगृह्य मञ्जवस्त्रानपि तथा ।
केश्चित् धूपाश्च दीपाश्च केश्चिद्रत्नान् सुपूज्यकान् ॥
विविधपूजान् योग्याश्च तत्रागतो जगद्गुरौ[१] ।
यामेशोपि यामाभिस्तुषितेशोऽपि तुषितैः[२] ॥
निर्म्मारतीशो रतिभिः वशवर्त्ती शवर्त्तिभिः ।
ब्रह्माथ सर्वदेवेशः स्वगणैः सह आगतः ॥
नानादेवगणैस्सार्द्धं विविधैः पूज्यहस्तकैः ।
स्वस्वदेवगणैस्सार्द्धं स्वस्वेभ्यो भुवनेभ्य तु[३] ॥
विविधैः पूज्यसंगृह्य इन्द्रेण सह आगताः ।
कामावचरैर्देवैश्च[४] सुरूपावचरैस्तथा ॥
आरूप्यावचरैर्देवैः आयान्ति तत्र मण्डले ।
अथ देवगणाः सर्वे नाकेशापि गणैः सह ॥
पूज्ययोग्यानि संगृह्य समायान्ति स्वयम्भूवि ।
धृतराष्ट्रो गन्धर्वेशः कुम्भान्तेशो विरूढकः ॥
नागेशोपि विरूपाक्ष यक्षेशो वैश्रवण ह्वि[५] ।
चत्वारश्च महाराजा स्वैः स्वैर्गणैस्समागताः ॥
यक्षैः कुम्भाण्डै नागैश्च[६] गन्धर्वैः किन्नरादिभिः ।

---

१ D योग्याश्च विविधान् पूजान् तत्रागतो जगद्गुरुः ।
२ D तूषितेशोऽपि तूषितैः ।
३ D भुवनभ्यतु ।
४ D कामाविवचरैर्देवैः ।
५ D वैश्रवणस्तथा ।
६ D कुम्भाण्डनागैश्च ।

क          गीतैश्च कैश्चिच्च वेणुभिस्तथा ॥
कैश्चिन्मुकुण्डिभिर्वाद्यैः कैश्चित्तूर्य्यैश्च कांस्यजैः ।
कैश्चिद्देवदुन्दुभैर्वाद्यैः[१] कैश्चिद्गानैश्च भाषजैः ॥
अनेकै[२]र्मङ्गलैर्युक्तैः प्रशस्तजलदस्वनैः ।
इत्येतैर्विविधैर्वाद्यैः प्रपूरन्ते दिशो दश ॥
समायाता बभूवुस्ते नानादेवगणादयः ।
इत्येवमादयो देवाः समायाता दिशो दशात् ॥
विविधैर्वाद्यै गीतैश्च[३] वादयामासु गौरवम् ।
कैश्चित्सुगन्धपुष्पैश्च कैश्चित्सुगन्धधूपनैः ॥
कैश्चित्सुगन्धगन्धैश्च कैश्चित्सुगन्धदीपनैः ।
कैश्चित्सुगन्धपुष्पैश्च कैश्चिन्नीलोत्पलैरपि[४] ॥
कैश्चित्पुण्डरीकैः पद्मैः कैश्चिद्रक्तोत्पलैरपि[५] ।
कैश्चित्कह्लालपुष्पैश्च[६] कैश्चिच्च कुमुदैरपि ॥
इत्यादिजलजैः पुष्पैः केशरैर्गन्धपूरितैः ।
कैश्चित्पारिजातपुष्पैः[७] कैश्चिच्च नागकेशलैः ॥
कैश्चिच्च चम्पक[८]पुष्पैः कैश्चिच्च मल्लिकादिभिः ।
कैश्चित्कुंकुमैः पुष्पैः कैश्चिन्मारतिभिस्तथा[९] ॥
कैश्चित्सुदामकैः कुन्दैः कैश्चिच्च यूथिकादिभिः ।

---

१ D कैश्चिच दुन्दुभिर्वाद्यैः ।    २ B अनेकैः ।
३ D वाद्यगीतैश्च ।  ४ D नीलोत्पलैरपि ।  ५ D रक्तोत्पलैरपि ।
६ D कालपुष्पैश्च ।    ७ D कैश्चित्मान्दरजातिपुष्पैः ।
८ D चम्पकै ।    ९ D मालतिभिस्तथा ।

सुगन्धकेशलैर्युक्तैः पञ्चवर्णपुष्पजातिभिः[1] ॥
इत्यादिस्थलजैः पुष्पैः गन्धकेशल[2]पूरितैः ।
इत्थं इन्द्रादयोदेवाः सब्रह्मत्रिदशादयः ॥
पूजयामासुः शम्भुञ्च शैल वाललता इव ।
विचित्रैः सारजैः धूपैः संचूर्णैं भागजैरपि ॥
जटामासादिभिर्युक्तैः सुगन्धैर्धूपनैरपि ।
गौ[3]घृतादिभिस्तैलैश्च प्रदीपैश्च सुपूरितैः ॥
महादीपैश्च मालाभिः सुगन्धदीपकैरपि ।
श्रीखण्डादिभिर्गन्धैश्च पञ्चगन्धादिभिर्गणैः[4] ॥
सुगन्धैर्गन्धैः[5] संयुक्तैः लेपितं च स्वयम्भुवि ।
त्रिदशादिभिर्देवैश्च[6] भोज्यकान्यमृतादयः ॥
भवन्ति ढौषिताः कैश्चिदीश्वराय स्वयम्भुवे ।
नानापञ्चोपचाराद्यैर्नाकजैर्विविधैर्गणैः ॥
ब्रह्मापि त्रिदिवेशापि पूजयामासु शंभुवम् ।
अथ ब्रह्मा [7]सब्रह्मेशस्तं शम्भुं पूजनं[8] कृतम् ॥
विशेषेण च स्तोत्रेण पठति[9] सुस्वरेण च ।
नमो देवातिदेवाय रत्नपङ्कजजानये[10] ॥
चिरत्नमूर्त्तये आदिबौद्धरूप स्वयम्भुवे ।

---

१ D पञ्चवर्नसुपुष्पकैः । २ D ०केशर० । ३ D गो० ।
४ D omits च । ५ D सुगन्धैः पञ्चसंयुक्तैः लेपित च सयम्भुवि ।
६ D omits च । ७ D सब्रह्मेशः । ८ D शम्भूपूजनं ।
९ D पठन्ति । १० D ०जायते ।

चन्द्रकोटी[1]सुशीताय सूर्य्यकोटिप्रभाय च ॥
स्थूलाय सूक्ष्मरूपाय खर्वाय दीर्घरूपिणे ।
धर्म्माणां धातवे नित्यं शून्यरूपाय प्रज्ञया ॥
देहशून्याय देहाय देहदेहनिवासिने ।
बोधिज्ञानस्वरूपाय प्रज्ञोपायस्वरूपाय[2] ॥
बुद्धानां[3] जनन्यै[4] न पित्रे बोधिज्ञानप्रचारिणां ।
धामरूपस्वरूपाय त्रिगुणात्मस्वयम्भुवे ॥
पर[5]परात्मने तस्मै विश्वरूपस्वरूपिणे ।
इदं स्तोत्रं पठेद् यस्तु स मोक्षमधिगच्छति ॥
भवार्णवं परित्याज्य सुखावते सुखासनम् ।
ततो नारायणेनापि शङ्खपूरितैः[6] सुस्वरैः ॥
शम्भोस्तु दर्शनं कृत्वा मुदमाप्नोति गौरवम् ।
पिनाकिनापि मोदेन पुष्पधूपादिगन्धकैः ॥
मानोपचारकैः पूज्य शिरसाञ्जलिभिर्नतः ।
इन्द्रादयः सर्वे देवा[7] अप्सरोभिः सहागतः[8] ॥
पालिजातपुष्पदामैः पूजितं च स्वयम्भुवे ।
धृतराष्ट्रादयः सर्वे गन्धर्वाः प्राग्दि[9]शागताः ॥
वीणासुवादनं कृत्वा तत्सेवायां[10] परायणौ ।

---

१ D ०कोटि० ।  २ D ०स्वरूपकं ।  ३ B बौद्धानां ।
४ D जननी एन ।  ५ D परं ।  ६ D शङ्खपूरितसुस्वरैः ।
७ D and B सर्व्वदेवाः ।  ८ A सहगतः ।  ९ D दिक्०
१० D adds च ।

विरूढकमहाराजा कुम्भाण्डपर्षदैः सह ॥
तस्य रक्षां[1] पराकृत्वा दूरीकुर्वन्ति कालुषान् ।
विरूपाक्षादयो नागा गन्धर्वाश्च[2] गणैस्सह ॥
तत्पूजाय समाचक्रुर्मोदैः[3] सह समागताः ।
वैश्रवणोपि यक्षेश आगतः सह भ्रातरैः ॥
रत्नानां विविधैर्माल्यैश्चकार शम्भुपूजनम् ।
सुगन्धैः शीतलैर्मन्दैः पवनैश्च पुनः पुनः ॥
सेवाञ्च कारयामासुः कीचक[4]ध्वनिगीतकैः ।
अन्येकाः किन्नराः सर्वे मृदङ्गमुरुजादिभिः ॥
तूर्य्यैः कांशैश्च गीतैश्च वादितं चक्रुः शम्भवे ।
हरस्यापि गणाः सर्वे मोदैस्सह ससम्भ्रमैः ॥
नृत्यञ्च कारयामासुरत्यर्थं[5] विविधैर्नयैः ।
व्येम[6]चित्रश्च दैत्येन्द्रः ससैन्यवरवाहनः ॥
दुन्तशस्त्रानि संहृत्वा संरक्षन्ति स्वयम्भुवः ।
भूताश्चापि सभूतेशाः स्वं स्वं वृत्तिं त्यजन्ति च ॥
प्रेताश्चापि सप्रेतेशाः[7] प्रेतवृत्तिं न कुर्वताः ।
पिशाचादयो विघ्नाश्च मानूष्यमान्सभोजिकाः ॥
रक्षन्ति मानुषान्सर्वान् स्वयम्भुवः प्रभावतः ।
राक्षसादिभिः सर्वैश्च मान्सशोणितभोजिभिः ॥
अन्येषां जीवसत्त्वानां जीवमपि जघान न ।

१ D रक्षां । २ A गन्धर्व्वा । ३ D मोदैश्च सहमागतः ।
४ D कीलक० । ५ अभ्यर्थं । ६ D वेम० । ७ D सप्रेतेसाः

मृगान् त्यजन्ति व्याघ्रैश्च कैटैः[1] कीटानपि तथा ॥
विडालैर्मूषिकाश्चापि व्यालैश्च[2] मण्डुकानपि ।
वृषभैर्विविधैस्तलैः सिंहैरन्योन्यभक्षणैः ॥
परस्परं सुहृत्लङ्घास्त्यजन्ति निर्दयानि च ।
तस्मिंश्च समये वह्निः[3] शान्तदान्त बभूव च ॥
विना वृष्ट्यापि दावाग्निरत्यर्थं संप्रशाम्यते ।
त्रिसाहस्रात्समायाता अन्योऽन्येभ्योऽपि देवताः ॥
जलजैः स्थलजैः पुष्पैः सुगन्धैर्नाकजैरपि ।
सांयोजिकसुगन्धैश्च सुधूपै धूपनैस्तथा ॥
घृतप्रयुक्तदीपैश्च नैवेद्यैर्दिव्यभोजनैः ।
ध्वजपताकाभिः[4] नृत्यगीतसुवाद्नैः ॥
फलमूलादिभिः पत्रैः पूगैस्ताम्बूलकैस्तथा ।
नानौषधिसमायुक्तैः दिव्यैर्संयुतैस्तथा ॥
कुण्डपुष्पैः चतैर्दुर्वैर्लाजैश्च पञ्चरत्नकैः ।
चीरैः शङ्ख-सुपूज्यार्घैः[5] प्रचक्रु हि स्वयम्भुवे ॥
धारणीभिश्च स्तोत्रैश्च पाठै गीतैश्च गानकैः ।
प्रदक्षिणैः सहस्रैश्च यावच्चक्रुः प्रमोदितैः[6] ॥
रात्रि[7]दिवासुसंपूर्णः प्रचक्रुः संप्रदक्षिणाम् ।
देवालयेषु तीर्थेषु प्रजञ्जः सर्वदेवताः ॥
शम्भूध्याने समायुक्ताः जपं चक्रुश्च देवताः ।

---

१ D कीटैः । २ D ०व्याडैश्च । ३ A समयेदग्निः । ४ B ०पटाकाभिः ।
५ D सुपुष्पार्घैः । ६ D प्रमोदितः । ७ D रात्रिन्दिवा

नानागीतैर्महोत्साहैः नृत्यैर्वाद्यैः सुघोषकैः ॥
हाहाकारैः समुल्लासैश्चकार शम्भूपूजनम् ।
कैश्चिदष्टाङ्गयुक्तैश्च कैश्चित्पञ्चप्रणामकैः ॥
कैश्चित्प्रदक्षिणाङ्कृत्वा कैश्चित्स्तोत्रैश्च भाषजैः ।
एवं बहुविधैः सर्वैं मङ्गलैश्च प्रपूरितम् ॥
स्वयम्भुव प्रभावेन सर्वेषु भुवनेषु च ।
त्रिसाहस्रं महालोकं मङ्गलैश्च प्रपूरितम् ॥
नानोपचारकैर्भद्रैर्बभूव[1] तत्र सर्वदा ।
अथ ब्रह्मेशः सब्रह्मः स्वगणै सह पूजितम् ॥
विशेषेण च स्तोत्रेण स्तोत्रयामास शम्भुवे ।
नमः स्वयम्भुवे नित्यं ज्योतिरूपाय ते नमः ॥
येन येन हि भावेन तेन तेन हि रूपिने ।
ब्रह्मानां ब्रह्मरूपाय वैष्णवानां च वैष्णुवे ॥
शैवानां शिवरूपाय इन्द्रानां इन्द्ररूपिने ।
कामाचराणां कामाय रूपाचराणां[2] रूपिने ॥
आरूपानां चारूपाय देवानां देवरूपिने ।
गन्धर्वानां गन्धर्वाय कुम्भाण्डानां तथा अपि ॥
नागानां नागरूपाय यक्षाणां यक्षरूपिने ।
अप्सराणां स्वरूपाय किन्नराणां तथा अपि ॥
गरुड़ानां खगेशाय नानारूपाय ते नमः ।
मानूष्यानां मनुष्याय ब्राह्मणानां तथा अपि ॥

---

१ D वभू ।   २ D adds च ।

राज्ञानां राजरूपाय वैश्यानां वैश्यरूपिने ।
शूद्रानां शूद्ररूपाय कृषीणां कृषिरूपिने ॥
वाणिजानां[१] च सार्थाय नानारूपाया रूपिने ।
ज्ञानीनां ज्ञानरूपाय मोक्षाणां मोक्षरूपिने ॥
लौकीनां लोकरूपाय उत्तराणां तथैवच ।
धामानां धामरूपाय चन्द्राणां चन्द्ररूपिने ॥
सूर्य्याणां सूर्य्यरूपाय देवानां देवरूपिने ।
स्थूलानां स्थूलरूपाय सूक्ष्मानां सूक्ष्मरूपिने ॥
खर्वाणां खर्वरूपाय दीर्घाणां दीर्घरूपिने ।
धर्म्माणां धर्म्मरूपाय देहीनां देहरूपिने ॥
स्वर्गाणां स्वर्गरूपाय विश्वरूपाय ते नमः ।
सर्वज्ञानां सर्वज्ञाय बौद्धानां बौद्धरूपिने ॥
धर्म्माणां धर्म्मरूपाय सङ्घानां सङ्घरूपिने ।
चैत्यानां चित्तरूपाय अस्तीनामस्तिरूपिने ॥
नास्तीनां नास्तिरूपाय शून्यानां शून्यरूपिने ।
बोधिसत्त्वानां बोधये महासत्त्व तथैव च ॥
स्थविराणां[२] च वृद्धाय भिक्षूणां भिक्षूरूपिने ।
पाशकानां पाशकाय पाश्रिका[३] च तथैव च ॥
प्रज्ञानां प्राज्ञरूपाय[४] बौद्धरूपाय ते नमः ।
पक्षीणां पक्षिरूपाय जलचराणां तथा अपि ॥

---

१ D वाणिजाश्च सार्थवाह नानारूपाय रूपिणे ।
२ A स्थवीराणां । ३ A पाश्रिका तथा अपि । ४ D प्रज्ञ० ।

स्थलचराणां[1] सत्त्वानां नानारूपाय ते नमः ।
दैत्यानां दैत्यरूपाय दूतानां दूतरूपिने ॥
किङ्कराणां किङ्कराय सर्वेषां विश्वरूपिने ।
नारकानां नारकाय तिर्य्यगाणां तथैव च ॥
नानारूपस्वरूपाय विश्वरूपाय ते नमः ।
एतेषां सर्वसत्त्वानां मध्ये गत्वा दिने दिने ॥
धर्म्मन्दिदेश सर्वेषां मोक्षाय मार्गदेशिने ।
ईदृशगुणसम्पन्नशम्भवे धर्म्मधातवे ॥
नित्यं नमामि भावेन मोक्षमार्गोपदेशिने[2] ।
येन येन हि भावेन स्तुतिं कृत्वा दिने दिने ॥
तेन तेन हि रूपेण स मोक्षमधिगच्छति ।
इति सर्वे च देवेशाः स्वैः स्वैर्गणैः परिवृता ॥
पुनः पुनः प्रणिपत्य तं शम्भुं गौरवेण तु ।
कैश्चिदष्टाङ्गयुक्तैश्च कैश्चित्पञ्चप्रणामकैः ॥
स्वयम्भुं नमयामास पुनः पुनः सगौरवम् ।
इतिलोकप्रवरस्तोत्रं गुह्यागुह्यतरं मता ॥
गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ।
नातःपरतरा विद्यास्तीर्थं नातःपरत्नम् ॥
नातःपरत्नं पुण्यं नातःपरत्नं तपम् ।
नातःपरत्नं[3] स्तोत्रं नातःपरत्ना[4] गतिः ॥

---

१ D adds च ।  २ D ०देशकः ।  ३ D ०परतरं
४ D ०परतरा ।

यः पठेत्परमं भक्त्या श्रूयते वा समाहितः।
मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात्॥
कामार्थी लभते कामं धनार्थी लभते धनम्।
विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः॥
कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम्।
गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम्॥
मूर्खोऽपि लभते शास्त्रं मौषोऽपि[1] लभते गतिम्।
[2]संक्रान्त्याञ्च चतुर्द्दश्यामष्टम्याञ्च विशेषतः॥
पौर्णमास्याममावास्यामवश्यं भौमवासरे।
पठेद्वा पाठयेद्वापि शृणुयाद्वा समाहितः॥
स मुक्तः सर्वपापेभ्यः कामेश्वरसमो भवेत्।
लक्ष्मीवान्सुतवांश्चैव वल्लभः सर्वयोषिताम्॥
तस्य वश्यं[3] भवेदासुरस्त्रैलोक्यं सचराचरम्।
रौद्रं दृष्ट्वा यथा देवा विष्णुं दृष्ट्वा च दानवाः॥
पन्नगा गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः।
मण्डूका भोगिनं दृष्ट्वा मार्ज्जारं मूषिका यथा॥
सर्वे च प्रपलायन्ते तस्य वक्त्रविलोकनात्।
वह्निचौरभयन्तस्य कदाचिन्नैव सम्भवेत्॥
पापका विविधा सन्ति मेरुमण्डलसन्निभाः।
भस्मञ्च कुरुते क्षिप्रं तृणं वह्निहुतं यथा॥

---

१ D मोर्षोऽपि। २ A संक्रान्त्याञ्चतुर्द्दश्यां। ३ A वश्यं।

एकधा पठनादेव सर्वपापक्षयं भवेत् ।
दशधा पठनादेव वाचं सिद्धिं प्रजायते ॥
शतधा पठनादेव शतं जीवति मानवः ।
सहस्रं जपते यस्तु खेचरो जायते नरः ॥
सहस्रं दशिते यस्तु पठेद्वै भक्तिमान्नरः ।
स लोक जगतां प्रियः प्रत्यक्ष भवति ध्रुवम्[१] ॥
रक्षपूर्णं[२] यदा येन स्तोत्रराजं पठेत्सदा ।
भवपाशं विनिर्मुक्ता जिनतुल्य न संशयः ॥
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
सर्वधर्म्मेषु यत्पुण्यं सर्वदानेषु यत्फलम् ॥
ते पुण्यं कोटिगुणितं सकृज्जप्ता लभेन्नरः ।
श्रुत्वा महावलवान्स्तोत्रं पुत्रवान्सर्वसम्पदः ॥
देहान्ते सुपरं स्थानं यत्सुरैरपि दुर्लभम् ।
स याति च[३] न सन्देहो इदं स्तोत्रं प्रकीर्त्तनात् ॥
अथ सर्वे च मानुष्या ब्राह्मणाः क्षत्रिया अपि ।
वैश्याः शूद्रा[४]स्तथान्योऽपि तत्रागत स्वयंभुवि ॥
केचित्पुष्पान्सुसंगृह्य केचित् धूपान्तथा अपि ।
केचिद्दीपाश्च गन्धाश्च केचिन्नैवेद्यजानपि ॥
केचिच्छत्राश्च संगृह्य केचिन्मालान्तथा अपि ।
केचिद्दामाश्च रत्नाश्च केचिद्वस्त्रानपि तथा ॥

१ D सलोकजगताप्रेमप्रत्यक्षं भवति ध्रुवं । २ D लक्षपूर्णं
३ A omits च । ४ D सूद्राः ।

इत्येवं विविधान्पुष्पान् समागत्य समन्ततः ।
समायाता बभूवाच सर्वे च मनुजादयः ॥
चम्पकादिभिः सर्वैश्च षट्सु ऋतुषु जातकैः ।
पारिजातैश्च[१] कुन्दैश्च यवाकुसुमकैस्तथा ॥
कुण्डलीभिर्यूथिकाभिः करवीरै[२]स्तथा अपि ।
कुसुमैर्मातरीभिश्च मारतीभिः सुकुङ्कुमैः ॥
केतकीभिर्मल्लिकाभिः कर्णिकारैश्च किंशुकैः ।
नागकेशरैः कुसुमै[३]र्नागपुष्पैस्तथा अपि ॥
इत्थं नानाविधैः पुष्पैः सुगन्धैः केशलयुतैः[४] ।
पूजायामासुस्तं शम्भुं सर्वे च मानवादयः ॥
चन्दनादिभिर्धूपैश्च जटामांसादिचूर्णकैः[५] ।
सुगन्धैस्सहजैर्धूपैः धूपयामासु शम्भूवे ॥
गोघृतादिभि[६]स्तैलैश्च दीपाश्च मालिकान्तथा[७] ।
महादीपान्प्रदीपन्ति तत्र स्वयम्भुवौ मुदा ॥
मलयजैः सुगन्धैश्च पञ्चगन्धैर्मुदा पुनः ।
लेपयामासुः शम्भवे[८] सर्वे च मानवादयः ॥
गोक्षीरैस्सहशालिश्च औदनमुपढौषितम् ।
नानासुव्यञ्जनैर्युक्तं स्वयम्भुवे अपि मुदा[९] ॥

---

१ A पालिजातैश्च । २ A कलवीरैः । ३ D नागकेशरकुसुमैः ।
४ D केशरैर्युतैः । ५ A B C जटामासादि० । ६ D गोघृतादिभिः ।
७ C दीपाश्च मालिकास्तथा । ८ D शम्भुवे लेपयामासुः ।
९ D मुदा स्वयम्भुवे तथा ।

स्वादुसुगन्धसुरसान् लड्डुकादिन् सुपिष्टकान्।
नैवेद्यान्विविधाञ्जातान् ढौकयामासुः शम्भुवे ॥
केचिच्छ्चान् सुवर्णादीन्यञ्चवर्ण सुपट्टजान्।
मयदीन् रौप्यांश्चापि दानयामासुः शम्भुवे ॥
ध्वजांश्च विविधान्पट्टान्नानावर्णान् सुवर्णकान्।
दिग्विदिक्षु समन्ताच्च स्थापयामासुः शम्भुवे ॥
पटाकान्विविधान् युक्ताञ्चीनान्पट्टान् सुवस्त्रजान्।
दीर्घांश्च अतिदीर्घांश्च लम्बयामासुर्धातवे ॥
नीलान्पीतान् हरितांश्च[1] श्वेतान् रक्तांश्च वर्णकान्।
विविधाञ्चित्रिताान्वर्णान्पटाकानुपढौषितम्[2] ॥
चामरांश्चातिश्वेतांश्च दीर्घांश्च अतिदीर्घिकान्।
लम्बयामासुरत्यर्थं दिग्विदिक्षु समन्ततः ॥
घण्टांश्च विविधयुक्तान्[3] सुघोषान्मधुरानपि।
कांशजाञ्चित्रितान् युक्तान् घोषयामासुरत्र च ॥
वितानं वितते नूनं चीनपट्टादिजं शुभम्।
पञ्चवर्णादिसंयुक्तमत्यर्थं सुमनोरमम् ॥
केचित्काचित्प्रकुर्वन्ति नृत्यगीतान् सुवादनान्।
नानांश्च विविधान् नृत्यान् कारयामासु गौरवम् ॥
नानाफलानि पक्वानि विम्बानि पनसानि च।
कदलीफलपक्वानि स्वादुगन्धानि तानि च ॥

---

१ D omites च। २ D ०ढौकितं। ३ D घण्टा च विविधैर्युक्तान्।

स्कन्धादिविविधान्मूलान्नानामूलान् सुभक्षकान् ।
ताम्बूलादयः पत्राञ्च पूगादिविविधान् फलान् ॥
नानौषधिसमायुक्तान् दिव्यांश्च मानुषांस्तथा ।
भैषजादींश्च गुडिकान् ढौकयामासुश्चूर्णजान् ॥
दुर्वाक्षताञ्जलिभिश्च[१] लाजाक्षताञ्जलिस्तथा ।
नानापुष्पाञ्जलिभि(स्त?)श्च क्षिपयामासु शम्भुवि[२] ॥
पञ्चरत्नादिभिः कुण्डैर्लाजाक्षतैः समन्वितैः[३] ।
क्षीरैः शङ्खं सुपूर्य्यार्घं प्रददौश्च[४] स्वयम्भुवे ॥
सौवर्णरूप्यताम्रादीन्नानाधातूनपि तथा ।
अनेकान् विविधान् रत्नान् ढौकयामासु[५] शम्भुवे[६] ॥
धारणीश्चैव स्तोत्रञ्च पाठयामासुः शम्भुवे[७] ।
भाषजान् गीतगानादीन् गानयामासुः शम्भुवे[८] ॥
इत्येवं विविधैर्युक्तैः पञ्चोपचारकैर्विधैः ।
तं शम्भुं[९] पूजयामासु मानवाद्यमर्त्यजाः ॥
अथ भिक्षुभिक्षुणीभिर्धारणीभिः प्रपूजितम् ।
उपासकोपासिकैश्च पाठैः स्तोत्रैश्च पूजितम् ॥
ब्राह्मणैरथवासर्वैश्चतुर्वेदादिवेदकैः ।
वेदयामासुस्तस्मै च नानागन्धैः प्रपूजितम् ॥
ब्रह्मचारिभिः कैश्चिञ्च गीतवंशादिवादनैः ।

---

१ D omits च । २ D नानापुष्पाञ्जलिभिश्चाक्षेपयामासु स्वंभुवे । ३ D लाजाक्षतासमन्वितैः । ४ A प्रददौदुश्च । ५ A ढौषयामासुः । ६ D स्वम्भुवे । ७ D स्वम्भुवे । ८ D स्वम्भुवे । ९ D स्वम्भुं ।

गीतयामासुस्तस्मै च नानावाद्यैः प्रपूरितैः ॥
योगिभिर्योगयुक्तैश्च योगै ध्यानैः प्रपूजितम् ।
योगयामासुस्तस्मै च नानाज्ञानैर्महोत्तमैः ॥
संन्यासैर्विविधैः केश्चित् गीतादिपाठकैर्मुदा ।
पाठयामासुस्तस्मै च नानापाठैर्महोत्तमैः ॥
सर्वैश्च चत्रिये केश्चित् स्वर्णरत्नादिच्छत्रकान् ।
ढौकयामासुस्तस्मै च नानाविधानकैर्मुदा ॥
वैश्यैश्च अथ सर्वैश्च पिण्डपाचादिस्वन्नजान् ।
स्वादुरसान् सुगन्धांश्च प्रददुश्चैत्यपुङ्गवे ॥
सच्छूद्रादिभिः सूद्रैश्च नानाविधिभिः पूजनैः ।
पूजितं विविधैर्योगैः स्वै स्वैः वृत्तैः[१] पुनः पुनः ॥
गान्धिकैर्गन्धयुक्तैश्च धातुकैरपि धातुकैः ।
स्वर्णकारै रूप्यकारै रत्नकारैस्तथा अपि ॥
ताम्रकारैः कांस्यकारैर्लौहकारै [[२]मुदा पुनः ।
ध्वजकारैः पट्टकारैस्तन्त्रिभिश्च तथा पुनः ॥
व्यञ्जनिभिस्तण्डुलिभिः क्रयेभिर्विक्रयैरपि ।
एतैः स्ववृत्तिभिः पूज्यैः पूजयामासु गौरवम् ॥
लेपकारैर्लिपिकारैः] शिल्पिकारैश्च अन्यकैः ।
ताम्बूलिभिश्च कृषिभिः स्ववृत्तिभिः प्रपूजितम् ॥
नापितादिभिरन्यैश्च चर्मकारैरपि तथा ।
विविधैः काष्ठकारैश्च नानाशिल्पिभिर्जातिभिः ॥

---

१ D वृत्तिः । २ B omits the portion bracketted.

मौलिनिभिर्ध्वजिनिभिः[१] सूरिभिर्मान्त्रवर्त्तिभिः।
तैलिभि[२]र्घृतकैर्जातै[३]र्दीपयामासुः शम्भूवे[४]॥
चर्म्मकारैश्च मातङ्गैर्योगिभिरंजकैरपि।
ध्वजिभिर्दूरतस्थिला वन्दनीयं पुनः पुनः॥
इत्येवं जातिभिरन्यैरन्यैश्च जातिभिः पुनः।
स्वैः स्वैर्योग्यैर्वृत्तिभिश्च पूजयामासुः शम्भूवे[५]॥
कैश्चित्प्रदक्षिणाञ्चापि कैश्चिदञ्जलिभिस्तथा।
कैश्चित्पञ्चप्रणामैश्च नमयामासुस्तं प्रभुम्॥
अष्टाङ्गैश्च पुनः कैश्चित्प्रणिपत्य पुनः पुनः।
पूजयामासुस्तं शम्भुं[६] अत्यर्थं विविधैर्मुदा॥
मृदङ्गवादितं कैश्चित्कैश्चित्पटहवादितम्।
कैश्चिद्वीणां प्रवादन्ति कैश्चित् मुरजावादितम्॥
तूर्य्यञ्च वादितं कैश्चित् कैश्चिच पणवटङ्ककैः।
कैश्चित् शङ्खं प्रवादन्ति कैश्चित्कांश्यादिवादितम्॥
कैश्चित् गीतञ्च गायन्ति मनोज्ञैर्मधुरैः स्वरैः।
कैश्चिन्नृत्यञ्च कुर्वन्ति नानाविधैर्मनोहरैः॥
वेमचित्रोऽथ[७] दैत्येन्द्रः सबलैः सह आगतः।
भार्य्यापुत्रादिभिस्तत्र सर्वैश्च स्वगणैः सह॥
पातालजैश्च सर्वैश्च नानाजातिभिः संयुतैः।
दौवारिकैरमात्यैश्च किङ्करैः सह आगतः॥

---

१ D ध्वनिनिभिः। २ D तैलिभिः। ३ B omits जातैः। ४ D स्वम्भुवे।
५ D स्वम्भुवे। ६ D स्वम्भुं। ७ B व्योमचित्रोऽथ।

केचित्पुष्पान् सुसंगृह्य केचिद्धूपानपि तथा ।
केचिद्दीपान् समादाय केचित्पानान्तथा अपि ॥
केचिन्निवेद्यजान् गृह्य नानास्वादुसुगन्धिकान् ।
अनेकान् पूज्ययोग्यांश्च समादाय समागताः ॥
अथ तं दृष्ट्वा[१] सर्वे ते ह्यत्यर्थं प्रेमजातकाः ।
पूज्यवन्द्यादिभिर्हस्ते शेवयामासुः[२] शम्भूवम्[३] ॥
बलिरपि[४] सुरेन्द्रस्य भार्य्यापुत्रादिभिः सह ।
सर्व्वैश्च स्वै गणैस्सार्द्धं तत्रागताः स्वयम्भुवि ॥
दौवारिकैरमात्यैश्च पारिषद्यैर्गणैर्बलैः ।
पञ्चोपचारकैर्हस्तैस्तत्रागतः स्वयम्भुवि ॥
पुष्पान्संगृह्य केचिच्च धूपान् संगृह्य वैस्तथा ।
गन्धानपि च संगृह्य दीपानपि तथा पुनः ॥
नैवेद्यान्विविधान् योग्यान्नानापूज्यान् सुपूज्यकान् ।
एतैश्च पूज्यविधिभिः पूजयामासुः शम्भूवम्[५] ॥
इत्थं पञ्चप्रणामैश्च स्तुतिपाठैश्च भाषजैः ।
शेवयामासु[६]स्तं शम्भुं नानाविधिभिर्विस्तरैः ॥
सामुद्रेशाथ नागेश यक्षेश राक्षसेश्वरः ।
नानारत्नान् सुसंगृह्य तत्रागता जगद्गुरौ ॥
केचिद्धिरण्यान्संगृह्य केचिज्जाम्बूनदानपि ।
केचित् वज्रान् सुसंगृह्य केचिच्च विद्रुमानपि ॥

१ D दृष्ट्वातमथ । २ B D सेवयामासुः । ३ D स्वम्भुवं
४ D बलिश्चापि । ५ D स्वम्भुवं । ६ D सेवयामासुः ।

केचिन्मुक्तान् सुनीलांश्च वैडूर्य्यान्मणिरत्नकान् ।
दक्षिणावर्त्तशङ्खान्[1] नानारत्नान् समुज्ज्वलान् ॥
इत्थं नानाविधान् रत्नान् समागृह्य समन्ततः ।
सप्तेभ्यः सागरेभ्यश्च समायाता भवन्ति च ॥
इति सर्वैश्च सामुद्रैर्भवन्ति पूजिताश्रयम् ।
नानारत्नादिभिः पुष्पैः पूजितश्च जिनालयम् ॥
यमोऽथ धर्मराजोऽसौ भ्रातृपुत्रादिभिः सह ।
स्त्रीभिश्च परिवारैश्च तत्रागताः स्वयम्भुवि ॥
किङ्करादिभिः सर्वैश्च परिवारैः परिवृतैः ।
नानापूज्यादिभिर्हस्तैस्तत्रायाताः स्वयम्भुवि ॥
अनेकान्विविधान् रत्नान् धृत्वा हस्तैः सुपूज्यकान् ।
विद्रुमांश्चापि रत्नांश्च नानारत्नान् सुवर्णजान् ॥
इत्यञ्च विविधैः रत्नैर्नानारत्नैस्सुगौनिकैः ।
पूजयामासुस्तं शम्भूं[2] सर्वैः पातालवासिभिः ॥
अथ सर्वे नैरयिकाः सर्वकालं दिनेदिने ।
स्तुति[3] चकार मोदेन अत्यर्थं विविधैरपि ॥
नमो बुद्धाय धर्माय सङ्घाय च जिनाय च ।
स्वयम्भुवे नमस्तुभ्यं नमस्तस्मै नमो नमः ॥
एवञ्च नारकैस्सर्वैरत्यर्थञ्च दिने दिने ।
स्तुतिस्मरणमात्रेण ते मोक्षमधिगच्छति ॥
केचित्स्वर्गं प्रगच्छन्ति केचित् मर्त्ये सुलोकजे ।

---

१ D दक्षिणावर्त्तशङ्खाद्यान् । २ D स्वम्भुं । ३ D स्तुतिं ।

तत्पुण्यसुप्रदानाच्च सर्वे च त्रिदिवं गताः ॥
इत्यञ्च नारकैः सत्त्वैः सुखञ्च अनुभूयते ।
नारकान्वेदनान् त्यक्त्वा सर्वे च प्रलीलानपि[1] ॥
अथापि मर्त्त्यलोकेशा ब्राह्मणा क्षत्रिया अपि ।
वैश्याः शूद्रास्तथान्येऽपि सर्वे च त्रिदिवं गताः ॥
पशवोऽथ तिर्य्यञ्चापि[2] कृमिकीटादिजन्तवः ।
तत्प्रसादाच्च सर्वे च देवलोकाश्च मर्त्त्यजाः ॥
त्रयस्त्रिंशेश्वरा देवा इन्द्रादिसर्वदेवताः ।
कामाचराश्च सर्वे च रूपाचरा अपि तथा[3] ॥
आरूपावचराश्चापि सर्वदेवगणा अपि ।
स्वयम्भुवः प्रभावाच्च सुखञ्च अनुभूयते ॥
तस्मात् स्वयम्भुवं त्यक्त्वा अन्यत्रापि स्वभूवने ।
न गच्छन्ति च ते देवाः सुस्थितास्तत्र सर्वदा ॥
अथापि मर्त्त्यलोकेशाः सर्वे च मनुजादयः ।
तस्मादन्यं न गच्छन्ति स्वं स्वं गृहञ्च विस्मृतम् ॥
इत्थं पातालजा लोकाः दैत्येन्द्रादय दैत्यजाः ।
न गच्छन्ति च अन्यस्मिन्विस्मृतञ्च स्वभूवनम् ॥
एवं सर्वे च[4] देवाश्च मनुजेन्द्रादिमर्त्त्यजाः ।
दैत्या नागाश्च पाताळाध्युषितं तत्र सर्वदा ॥
त्रयपूर्वत्रिभिः कोटिदेवताभिस्त्रिभूवनैः ।
सर्वकालञ्च तत्रैव ध्युषितञ्च स्वयम्भुवि ॥

---

१ D प्रशीरानपि । २ D पशवश्चाथ तीर्य्यञ्च । ३ D तथापि च
४ A सर्वेश्च

एवं बहुगुणैर्युक्तं धर्म्मधातुं स्वयंप्रभुम् ।
जगदाह्लादरूपेण संस्थितं तत्र सर्व्वदा ॥
सोऽयं तिष्ठति धर्म्मात्मा दीर्घकालञ्च स्थास्यति ।
एवं मैत्रेय शिखिनः काले जातः स्वयं प्रभुः ॥

यद्देवा मानुजगणा सुरकिन्नराश्च
अस्यार्च्चितांघ्रिकमलैः कमलायताक्षैः[१] ।
ये श्रावयन्ति सततं शम्भूजोपदेशं
सिंहासने मणिमये प्रवशन्ति दीर्घम्[२] ॥

अथ सर्व्वे सभालोका धर्म्मधातोः स्वयम्भुवः ।
पूजाफलानि चित्राणि श्रोतुं पुनः समिच्छिरे[३] ॥
तं ज्ञात्वा स महासत्त्वो मैत्रेयः सुगतात्मजः ।
भगवन्तं मुनीन्द्रन्तं प्रार्थयेदेवमादरात्[४] ॥
भगवन्[५] स्वयम्भुवोऽस्य पूजाफलं सुविस्तरम् ।
श्रोतुमिच्छा प्रवर्त्तन्ते देवासुरमनुजकैः[६] ॥
तद्भवान् समुपादिश्य पूजाफलं सुविस्तरम् ।
सर्व्वं सभाश्रितान् लोकान् सम्बोधयितुमर्हति[७] ॥
इति संप्रार्थिते तेन मैत्रेयेन निशम्य सः ।

---

१ D यद्देवामनुजान् भूतान् गणाश्च सुरकिन्नराः ।
अस्यार्च्चिताङ्घ्रिकमलैः कमलायतलोचने ॥
२ D प्रविशन्तीति दीर्घकं ।　　३ D समीच्छरे ।
४ D प्रार्थयेद्देवमादरात् ।　　५ D स्वयम्भुवोऽस्य भगवन् ।
६ D के देवासुरमानुजैः ।　　७ D सम्बोधयतुमर्हति ।

भगवान्तान् सभालोकान् सम्पश्यन्नेवमादिशत्॥
अथ पूजाफलं वक्ष्ये शृणु मैत्रेय साम्प्रतम्।
फलं तस्य तथार्थञ्च[१] दृष्टे वालसहस्रसः॥
गोमूत्रैश्च मयैर्दुग्धैर्दधिभिश्च घृतैरथ।
सिञ्चितं तत्समन्ताद् य पवित्रं शरिरं लभेत्॥
तत्रादौ शम्भु[२]पूजार्थमेकपुष्पं प्रदापयेत्।
एकपुष्पप्रदानेन जिनपुत्रमवाप्नुयात्॥
बोधिसत्वा महासत्वा भिक्षुण्य भिक्षवस्तथा।
तस्मै पुष्पप्रदानेन बोधिपदफलं लभेत्॥
स्वभावशुद्धा गाथाभिः ध्यानं कुर्वन्ति मानवा।
तस्मात्पुण्यप्रसादाच्च शुद्धं मनः प्रपद्यते॥
सार्वज्ञैर्योगयुक्तैश्च योगध्यानं करोति यः।
तस्मै ध्यानं प्रकुर्वन्ति ते सर्वे योगिन भवेत्॥
अगुरैः कुङ्कुमैः शीलैः श्रीखण्डैः कर्पूरैरपि।
धूपेभिः धूपयामासुः सुगन्धी[३] शरीरं लभेत्॥
धूपयन्ति च ये तस्मै तेषां शोको[४] न विद्यते।
सुरासुरैश्च पूज्यन्ते गन्धमाल्यैर्विभूषणैः॥
अथ शम्भोश्च पादौ ये प्रददन्ति मनोरथैः।
[५]वारिभिः शीतलैः स्वच्छैः सुगन्धिभिः सुपाद्यकम्॥

१ B D यथार्थञ्च। २ D सम्भुं। ३ D सुगन्धि। ४ D शोकं। ५ D सुगन्धिशीतलैः स्वच्छैः सुपाद्यादि च वारिभिः।

सम्पदैस्ते परिपूर्णा मनोज्ञवक्का[1] भवन्ति च।
सुलोचनाः सुपुत्राश्च सुन्दरा दिवि भूतले॥
सदुर्वाभिः कुन्दपुष्पै[2]र्गन्धतोयै सलाजकैः।
अक्षतैः पञ्चरत्नैर्ये प्रददन्ति जिनालये॥
इति अर्घादिदानाच्च सिद्धि देवादिपूज्यकम्[3]।
सिंहासनं लभन्ते ते मनुजादय मर्त्त्यजाः॥
स्वच्छैः सुशीतरै[4]र्गन्धैः कुङ्कुमैरपि रञ्जितैः।
लाजाक्षतैस्सदूर्वाभिर्ये च तस्मै प्रदापयेत्॥
इत्याचमनदानेन महानिधिम्प्रपद्यते।
भवन्ति सर्वलोकेषु ईश्वरत्व[5] मुनीश्वरः॥
वारिभिस्तीर्थजैः सर्वैः कुङ्कुमैः सह रञ्जितैः।
स्वच्छैः सुशीतलैस्तोयैः स्नापयन्ति स्वयम्भुवम्॥
ये स्नापयन्ति तं शम्भूं[6] ते स्वर्गमधिगच्छति।
अनेकैरप्सरोभिश्च रतिमाप्नोति निश्चयम्॥
गौघृतादिभिर्लिप्तव्यं स्वयम्भूं च जिनालयम्।
घृतभोजी भवेच्चासौ मर्त्त्यलोके त्रिलोकिषु॥
मधुभिर्लिप्यते यश्च स्वयम्भूं जगदीश्वरम्।
अनेकमधुभोगी स्यात् सर्वेषु भूवनेषु च॥
गोपायसैश्च संलेप्य महाभोगी[7] सुखी भवेत्।

---

१ D मनोज्ञसुखमाप्नुयात्। २ D कुन्दपुष्पैः सदुर्व्वाभिः।
३ D सिद्धिदेवादिपूजितं। ४ D सुशीतलैः। ५ D ईश्वरत्वं।
६ D सम्भुं। ७ D महाभागी।

अनेगपायसभोजी[1] स्यादत्यर्थं त्रिदिवेषु च ॥ दधेः[2] ।
गोदुग्धैः स्नापनं कृत्वा स्वयम्भूं जगदीश्वरम् ।
दुग्धभोजी भवेच्चासौ सर्वं च दिवि भूतले ॥
गुड़ादिभिः शर्करैश्च लेपितञ्च स्वयम्भुवम् ।
गुड़शर्करभोजी[3] स्यात् स्वर्गमर्त्यादिलोकेषु ॥
पञ्चामृतैः प्रलेपन्ति तस्मै च मानवादयः ।
पञ्चाभिज्ञपदं प्राप्तास्ते मोक्षमधिगच्छति ॥
कुङ्कुमैरञ्चितैस्तोयैर्नानागन्धैस्सुपूरितैः ।
स्नापयन्ति ये तं शम्भुं सुगन्धि शरिरं[4] लभेत् ॥
इत्थं नानाविधैः स्नानैः पूजितञ्च जिनालयम् ।
मन्दाकिन्याञ्च ते स्नात्वा अप्सरैः त्रिदिवं गताः ॥
कर्पूरैः कुङ्कुमैः शीलैः श्रीखण्डैर्कुशलमूलकैः[5] ।
[6]कुन्दुरिभिः कस्तुरिभिः शीह्लैर्गन्धरसैरपि ॥
वालैः शङ्खैरगुलिभिः[7] जटामासिभिर्गुग्गुरैः[8] ।
ग्रन्थिपर्णैः केशलिभिः पद्मस्य केशरैरपि[9] ॥
मुस्तकैः सर्वगन्धैश्च घृतैश्च मधुभिस्तथा ।
शर्करादिभिचूर्णैश्च धूपैश्च धूपितं भवेत् ॥
इत्येवमादिभिर्युक्तैश्चूर्णधूपैश्च शम्भवे[10] ।

---

१ B अनेगपायसं भोजी। C अनेगपायसभोगी। D अनेकपायसंभोगी
२ D दधे। ३ D ०भोगी।
४ D स्नापयन्ति च ये सम्भुं सुगन्धि सरिरं। ५ D श्रीखण्डे कुशमूलके
६ D कुन्दुरुकस्तुरीभिश्च शीह्लैर्गन्धैरसैरपि। ७ D अगुरिभिः।
८ D जटामांसीभिः। ९ A केशलैरपि। १० D सम्भवे।

धूपितं शततं[1] येऽपि ते मोक्षमधिगच्छति ॥
चारुनेत्रा विशालाख्याः ख्यातकीर्त्तिशरीरिणः ।
रत्नोपमा तु विख्याताः ख्यातधूपफलस्य तु ॥
चन्दनैर्मृगनाभिश्च कुङ्कुमैः कर्पूरैरपि ।
श्रीखण्डादिभिर्गन्धैश्च लेपितं[2] स्वयम्भूवम् ॥
लेपयन्ति सुगन्धैर्ये जिनविम्ब जिनालये ।
लभन्ति स्वर्गमर्त्त्येषु वाशिताङ्गाः सुगन्धिभिः ॥
ढौकयन्ति सुगन्धिञ्च अजस्रं मनुजादयः ।
गन्धौदेहा भानुदिप्ता भवन्ति शशिनप्रभाः ॥
रत्नदामविभूषाङ्गाः पट्टवस्त्रविभूषिताः ।
नरोत्तमा भुवौ[3] जातास्तस्मै गन्धप्रदानतः ॥
राजा भवन्ति शुद्धात्मा चक्रवर्त्ती गुणी शीली[4] ।
सुन्दरीभिः परिवृत्य शम्भूवं[5] गन्धदानतः ॥
सुवर्णतिलकं येऽपि[6] ददौ भक्त्या जिनालये ।
मुनीन्द्रासनं लभ्यन्ते बुद्धपुत्रो भविष्यति ॥
कुसुमादिरञ्जितं वस्त्रं ददन्ति ये जिनालयम् ।
शीतार्त्तिदुःखं न जातु स्याद्विशालसम्पदं लभेत् ॥
नीलपीतहरितादि अरुणशुक्लचित्रकम् ।
तस्मै वस्त्रं प्रयच्छन्ति नानावस्त्रं प्रलभ्यते ॥
तस्मै सत्पिङ्गलं चित्रं नीलपीतादिरञ्जितम् ।

---

१ D सततं । २ D गन्धै लेपितञ्च । ३ D भवो ।
४ D चक्रवर्त्तिगुणैर्युतः । ५ D सम्भुव । ६ C सुवर्णतिलकञ्चापि ।

[1]मुक्तवस्त्रप्रदानेन नानावस्त्रं प्रलभ्यते ॥
यज्ञोपवीतं तस्मै ये पञ्चवर्णसुरञ्जितम् ।
भूयिष्ठनियमं प्राप्य ब्रह्मपदं प्रलभ्यते ॥
यथा तस्मै प्रयच्छन्ति चीनपट्टादिवस्त्रकम् ।
तथा तद्वदनुप्राप्ता बौद्धपुत्रो भविष्यति ॥
चीनवस्त्रप्रढौकेन चीनवस्त्रं प्रलभ्यते ।
पट्टवस्त्रप्रढौकेन पट्टवस्त्रं प्रलभ्यते ॥
शुचिवस्त्रप्रढौकेन शुचिवस्त्रं प्रलभ्यते ।
नानावस्त्रप्रढौकेन नानावस्त्रं प्रलभ्यते ॥
ये च बहुविधं सर्व्वं नानावस्त्रं प्रढौकितम् ।
यद् यद् वस्त्रं प्रढौकेन तत्तद्वस्त्रं प्रलभ्यते ॥
चीवलं[2] ददात्यस्मै काषायं पञ्चवर्णकम् ।
संप्राप्नोति श्रीवसनं कायञ्च प्रतिलभ्यते ॥
ददौ सत्पिङ्गलं चित्रं पीतहरितरक्तम् ।
अनेग[3]चित्रसंयुक्तं तस्मै च शम्भवे[4] मुदा ॥
चीवरस्संप्रढौकेन भवन्ति स्थविराणि च ।
बौद्धपुत्राणां ज्येष्ठानि[5] नानाचीवरभूषिताः ॥
हारार्द्धहारमालाभि रत्नदामैः[6] प्रपूजितम् ।
तस्मै स्वयम्भुवे[7] दानात् राजा भवन्ति निश्चयम् ॥

---

१ D मुक्तवस्त्रं प्रदानेन नानावस्त्र प्रलभ्यते । २ D चीवरञ्च ।
३ D अनेक० । ४ D सम्भवे । ५ D ज्येष्ठानि बुद्धपुत्राणाम् ।
६ D रत्नदानैः । ७ A स्वयम्भूवे ।

हाराद्धहारकटकैरत्नमालाभि[1] भूषितम्।
[2]अलङ्कारैर्विभूषाङ्गी तस्य पुण्यप्रसादतः॥
धारणी ये पठन्दद्यात् सुपुष्पं[3] जिने सुधीः।
कोटिपुष्पफलपुण्यं सलभेन्नात्र संशयः॥
पुष्पकेतोश्च धारिण्या सप्तधा पुष्पशोधितम्।
एकपुष्पं प्रढौकेन कोटिपुष्पफलं लभेत्॥
एकपुष्पप्रढौकेन तस्मै स्वयम्भूवे[4] मुदा।
धर्म्मार्थकाममोक्षञ्च स लभेद्दिवि भूतले॥
दशञ्च अपि ढौकेन दशञ्च गुणितं भवेत्।
सहस्रलक्षकोटिं यत्तत्तत्फलं[5] प्रलभ्यते॥
ये प्रसन्नचित्ताश्चस्मै[6] पुष्पराशिं प्रढौकितम्।
देवलोके मनुष्ये च पूज्या वन्द्या भवन्ति च॥
नानापुष्पैः प्रकिरन्ति[7] जलजैः स्थलजैरपि।
शक्राधिकलभागी स्यात्पद्मेन्दुकान्तिसुन्दरम्॥
अशेषपुष्पं जलजं[8] तस्मै च पञ्चवर्णकम्।
विशालं सम्पदं वंशं प्राप्नोति फलसम्पदम्[9]॥
स्थलजं त्रिविधं पुष्पं दद्यात्तस्मै जिनालये।
आरोग्यं सम्पदं सौख्यं प्राप्नोति च मानवा[10]॥

---

१ D रत्नमालाविभूषितं। २ A जलङ्कारैर्विभूषाङ्गी तस्य पुण्यप्रसादतः।
३ D सुपुष्पञ्च। ४ D स्वयम्भुवे। ५ D फलञ्च।
६ D ०चित्ता च। ७ D प्रकीर्य्यन्ती। ८ D जलजैः।
९ A प्राप्नोति च साम्पदं। १० D मानवाः।

प्रकिरन्ति [१]रक्तपुष्पैस्तस्मै च मानवादयः ।
शक्राधिकात्मभोगी स्यात्पद्मेन्दुकान्तिसुन्दरम् ॥
कोटिपुष्पं ददौ तस्मै फलं सङ्ख्या न विद्यते ।
वाञ्छाधिकफलञ्चापि प्राप्नुवन्ति च मर्त्त्यजाः ॥
कुसुमाञ्जलिभिस्तस्मै जलजैः स्थलजैः क्षिपन् ।
ते मोक्षमधिगच्छन्ति मानवादयः मर्त्त्यजाः[२] ॥
मुक्तक[३]पुष्पराशिं ये प्रददौ च स्वयम्भुवे[४] ।
जाम्बूनदसहस्राच्च कर्षाधिकफलं लभेत् ॥
बकुपुष्पं क्षिपेद् येऽपि जलजं स्थलजादिकम् ।
देवलोकमनुष्येषु राजा भवन्ति निश्चयम् ॥
मालाभिर्विविधैस्तस्मै रुद्रारैश्च जिनालयम् ।
सौख्यानि लभ्यते नूनं देवलोके महीतरे[५] ॥
जाम्बूनद अयुताच्च[६] दानाधिकफलं लभेत् ।
पराश्च विविधैर्नूनं देवलोके त्रिलोकिषु ॥
विद्यार्थदमुत्पलैश्च कामदं कुमुदैरपि ।
शौभाग्यं मालतीभिश्च जातिभिः कुलवृद्धिकम् ॥
सुरूपं केशलैः पुष्पैः कुण्डादिभिः[७] सुखं ददम् ।
रिपुक्षयं चम्पकैश्च नागपुष्पैर्विशेषकैः ॥
श्रीप्रदं कमलैश्चापि ऐन्द्र[८]प्रदं कुशेशयैः ।
लक्ष्मीदं रक्तपद्मैश्च पद्मैश्च दधनं तथा ॥

---

१ D लक्तपुष्पैः । २ D मानवादयमर्त्त्यजाः । ३ D मुक्तिक० ।
४ A स्वयम्भूवे । ५ C and D महीयते । ६ D जाम्बूनदप्रदानाच्च
७ D कुन्दादिभिः । ८ D इन्द्र० ।

नागकेशरैः शुभदं पुन्नागैः शान्तिदं भवेत् ।
पारिजातैः शत्रुनाशमायुर्दं पारिभद्रकैः ॥
अपराजितैर्विद्यादं कह्लारैः सिद्धिदं तथा ।
मोक्षदं करवीलैश्च[1] पीताभिरन्नदं तथा ॥
कुन्दैश्च श्रीपदञ्चापि कोकिलाक्षैः प्रवर्द्धनम्[2] ।
वस्त्रदं बन्धुकैश्चापि यवाकुसुमैर्मोक्षदम्[3] ॥
अशोकैः शोकहरणं कुसुमैर्वस्त्रदं तथा ।
मोक्षदं केतकीभिश्च पातरिभिश्च[4] पुष्टिदम् ॥
यूथिभिर्गन्धिदञ्चापि मल्लिकाभिश्च अन्नदम् ।
कोविदारैः शान्तिकञ्च कुङ्कुमैः स्वर्गदं तथा ॥
वश्यदं मालतीभिश्च मधुदं मधुरैरपि ।
दामनिर्गन्धदञ्चापि काशिकैः काशिवस्त्रदम् ॥
करञ्जैः करदं न स्यात् किंशुकैरक्तवस्त्रदम् ।
रत्नदं कर्णिकारैश्च कुन्दरैः कुन्दरं तथा ॥
किञ्जल्कैर्गन्धिभिर्युक्तैः रूपवन्तैः सुपुष्पितैः ।
त्रिभिश्च गुणसंयुक्तैरुत्तमं फलदं भवेत् ॥
किञ्जल्कैर्युक्तैश्च पुष्प[5] रूपवन्तैरगन्धिकैः ।
गन्धिभिर्युक्तैः पुष्पैः[6] किञ्जल्कैरपि नास्तिकैः ॥
द्वाभ्यां गुणैः सुसंयुक्तैः जलजैः स्थलजैरपि ।
तस्मै पुष्पप्रढौकेन मध्यमं लभ्यते फलम् ॥

1 D करवीरैश्च । २ D प्रवर्द्धनं । ३ D यवाकुसुममोक्षदं । ४ D पातलिभिश्च । ५ A D किञ्जल्कैरयुक्तैः पुष्पैः । ६ D युक्तपुष्पैश्च ।

नगन्धिभिर्नकिञ्जल्कैः पुष्पैर्दद्याज्जिनालये ।
सर्वे देवा च मानुष्या अधम लभ्यते फलम् ॥
इत्येवं विविधैः पुष्पै जलजैः स्थलजैरपि ।
नानापुष्पप्रढौकेन नानाफलपदं लभेत् ॥
एकपुष्पप्रढौकेन कर्षजाम्बूनदस्य यत् ।
तत्संख्यैः फलसंप्राप्ताः सर्वे च मानवादयः ॥
इति शम्भो गुणं[१] श्रुत्वा सर्वे च मानवादयः ।
प्रददौ शम्भुवे[२] येऽपि ते मोक्षमधिगच्छति ॥
शृणु मैत्रेय वक्ष्यामि नानापुष्पफलस्यपि ।
नानापुष्पप्रढौकेन नानापुष्पफलं लभेत् ॥
नानाविधै स्तवकैः पुष्पैः[३] नानाफलं प्रलभ्यते ।
एकपुष्पमेकफलं द्वौ पुष्पौ च[५] तथा अपि ॥
मुकुलैरधमं दद्यात् कोरकै[४]र्मध्यमं तथा ।
कुसुमैरुत्तमश्चापि फलदश्च जिनालये ॥
अङ्कुलं पत्रकं दद्यात् पुष्पश्चापि तथा अपि[६] ।
तस्मिन् जिनालये चैत्ये निष्फलं ये प्रलभ्यते ॥
स्वक्षवीजसम्भूतं नानापुष्पं ददौ जिने ।
धर्मार्थकाममोक्षञ्च उत्तमं लभ्यते फलम् ॥
स्वहस्तेन समाहृत्य स्वहस्तेन प्रढौकितम् ।
उत्तमं फल सम्प्राप्य स्वयम्भुवः प्रसादतः ॥

---

१ D सम्भो । २ A प्रददौदुः शम्भूवे । ३ D नानाविधैस्तवं कृत्वा
४ D कौलकैः । ५ D omits च । ६ A पुष्पं तथा अपि ।

क्रयपुष्पप्रढौकेन मध्यमं लभ्यते फलम्।
विक्रियञ्च प्रढौकेन अधमं लभ्यते फलम्॥
स्वहस्तेन ददौ पुष्पं स्ववाञ्छां लभ्यते फलम्।
पूज्यहस्ते प्रढौकेन भवन्ति जिनसेवकाः[१]॥
अन्यहस्तैर्जिने दद्याज्जलजः स्थलजमपि।
पुण्यबीजमनुप्राप्तास्तस्मात्मोक्षञ्च गच्छति॥
पुष्पवितानं ये तस्मै दद्यात्स्वयम्भूवे[२] मुदा।
वज्ररत्नैः प्रभोगी स्यात्त्रिलोकेषु च सर्वदा॥
दिग्मालान्विविधान्तस्मै दद्याच्च शम्भूवे[३] मुदा।
स्वर्णमाल्यैरलङ्कृत्य सर्वत्र भूवनेषु च॥
दीपमालाञ्च ये तस्मै रचयन्ति च मानवाः।
ज्ञानप्रदीपा रत्नेशा नराधिपा भवन्ति च॥
नानादीपञ्च ये तस्मै ददौ स्वयम्भूवे मुदा।
नेत्राभिरामको भोगी राजा भवति भाग्यवान्॥
महादीपं ददौ तस्मै नानासुरभिसंयुतम्।
स्वशरीरं[४] दीपमिव नानाफलं प्रलभ्यते॥
यो महादीपमालाञ्च प्रददौ च जिनालये।
तस्याः पुण्यं न सङ्ख्यास्ति अप्रमेयफलप्रदम्॥
ददौ ये तोरणाकारं तस्मै स्वयम्भुवे[५] मुदा।
नानारत्नैः सुसंयुक्तं लभ्यते धवलं गृहम्॥

---

१ A ०श्चेवकाः। २ D स्वयम्भुवे। ३ D सम्भुवे।
४ D स्वस्वीरं। ५ A स्वयम्भूवे।

गोघृतैः दीपदानेन लभ्यते उत्तमं फलम् ।
माहिषघृतैर्मध्यममधमञ्च अजघृतैः ॥
शान्तिदं श्वेततैलैश्च पुष्टिदं नीलतैलकैः ।
वश्यदं रक्ततैलैश्च एतेषामुत्तमं फलम् ॥
उत्तममसुरिभिश्च[1] सिद्धार्थैं मध्यमं लभेत् ।
अधमं तन्तुभैर्व्यापि[2] तैलस्य ईदृशं फलम् ॥
दीपं नित्यं घृतैर्दद्यादुत्तमं लभ्यते फलम् ।
मध्यमं तिलतैलैश्च अधमं सर्वतैलकैः ॥
तैलाज्यादिप्रदीपञ्च यो दद्याज्जिनपुङ्गवे ।
नेत्राभिरामको भोगी दिव्यचक्षुरवाप्नुयात् ॥
यक्षासुरमनुष्याणां नागगन्धर्वरक्षति[3] ।
अन्येषां दुष्टजन्तूनां भयं नास्ति कदाचनः ॥
कुष्ठादिपापरोगाश्च कुदृष्टिग्रहशत्रवः ।
डाकिनी ग्रहपीड़ाश्च नाशयन्ति तदा ध्रुवम् ॥
धनधान्यसमृद्धिश्च शिवशक्तिः समन्वितः ।
अन्त[4]जन्मविपत्तिञ्च हत्वा यान्ति सुखावतीम्[5] ॥
कलस्थमिव[6] दृश्यन्ते दूरस्थोगतिरस्कृतम् ।
तत्सर्वं दीपदानस्य फलं ज्ञेयं स्वयम्भुवे ॥
क्षितीशो राजा भवति चक्रवर्त्ती महीभुजः[7] ।

---

१ D उत्तममसुरीभिश्च ।   २ D वापि ।   ३ A ०रति ।
४ D अन्यं ।   ५ D सुखावतिं ।   ६ D कलुखमिव ।
७ D क्षितीशो भवति राजाश्चक्रवर्त्तिमहीभुजः ।

शक्तो भवति देवेशस्तस्मै दीपप्रदानतः
जाम्बूनदलक्षपला फलञ्च लभ्यते ननु ।
स्वयम्भुवे ददाद्दीपात् मनुजादय मानवाः ॥
नैवेद्यं ये ददौ तस्मै मानवादय मर्त्त्यजाः ।
कुलीनः सुशीला धीरा प्रासादिकश्च[१] भोगिन ॥
नैवेद्यशाल्यनैवेद्यदानाद्य मानवादयः ।
मर्त्त्येषु भोग्यवान् चासौ स्वर्गेषु अमृतं पिवेत्[२] ॥
[निसरावस्य[३]] पञ्च ये पूपकां दद्यात्मनुजादयमानवा ।
पञ्चगतिं न लभ्यन्ते स्वर्गगतिपदं लभेत् ॥
वर्त्तुलैः शान्तिदश्चापि पुष्टिदं चतुरस्रकैः ।
त्रिकोणैर्वश्यदश्चापि गुड़ादिभिरनेकदम् ॥
लाडुकपूपकादिञ्च ये दद्याच्च स्वयम्भुवे[४] ।
ते स्वर्गमधिगच्छन्ति अमृतभोजनं लभेत् ॥
उत्तमं गौघृतपिष्टैर्मध्यमं घृतपिष्टकैः ।
अधमं तैलपिष्टैश्च लभ्यते नात्र संशयः ॥
पूपकैः शुभदं प्रोक्तं च्छत्रपिष्टैश्च च्छत्रदम् ।
शार्करैरुत्तमं प्राप्तं मध्यमं गुड़पिष्टकैः ॥
नानापिष्टञ्च ये दद्यात् मानवादय मर्त्त्यजाः ।

---

१ D साप्रासादिकास्च ।

२ A नवेद्यस्य शाल्यनैवेद्यदानाद् यं तस्मं च मानवादयः ।
मर्त्त्यैष्ठभोग्यवाञ्चासौ स्वर्गेष्ठ अमृतं पिवेत्

३ D निःसरावस्य ।    ४ A स्वयम्भूवे ।

उत्तमैरुत्तमं प्राप्तं मधमै[1]रधमं फलम् ॥
इत्थं नानाविधं पिष्टं ये दद्याच्च स्वयम्भुवे ।
सर्वफलं प्राप्नुवन्ति स्वं स्वं[2] वाञ्छाधिकपदम् ॥
श्रीवत्सैः[3] श्रीवशं दद्यात् पुण्डरीकैः[4] प्रवर्धनम् ।
ध्वजैश्च राजकश्चापि कलशैः पूर्णसम्पदम् ॥
चामरैः शुभदं प्रोक्तं मत्स्ययुग्मैस्तु मङ्गलम् ।
छत्रैश्च चक्रवर्त्ती स्यात् शङ्खैश्च लक्ष्मीदं[5] भवेत् ॥
रविना सर्वतेजैः स्यात् शशिना अमृतं ददम् ।
इत्येवमङ्गलैरष्टै पिष्टकैः शुभदं भवेत् ॥
श्रीवत्सैरविशान्तञ्च पुण्डरीकैश्च[6] चन्द्रमा ।
ध्वजैश्च मङ्गल[7]शान्तं बुधश्च कलशैरपि ॥
बृहस्पतिश्चामरैश्च[8] शुक्रञ्च मत्स्ययुग्मकैः ।
छत्रैश्च शौरिशान्तञ्च शङ्खैरपि विधुन्तुदम् ॥
रविभिः केतुशान्तञ्च[9] शशिभिर्जन्मशान्तिकम् ।
एतैर्दशशुभं दत्तं दशभिः पिष्टकैरपि ॥
एकं दद्यादेकफलं द्वौ दद्याद्द्विगुणं भवेत् ।
त्रयं दद्यात्त्रिगुणञ्च[10] लभन्ते मानवादयः ॥
फलमूलादिकं दत्वा शम्भवे भक्तिमाञ्च ये ।
यथेष्टं फलमाप्नोति निरोगी सुखवान्सदा ॥

---

१ D मध्यमैः ।   २ D स्वस्व ।   ३ D श्रीवत्सं पूपकं ।
४ A पुण्डलीकैः ।   ५ D लक्ष्मीदं ।   ६ A पुण्डलीकैश्च ।   ७ D मङ्गलं ।
८ D चामरैश्च ।   ९ D केतुशान्तञ्च ।   १० D त्रिगुणितम् ।

फलैश्च फलभोजी[1] स्यात् मूलैश्च मूलकं तथा ।
पत्रैश्च पत्रभोजी[2] स्यात् स्कन्धं स्कन्धैः प्रलभ्यते ॥
लम्भा व्यं[3] हरतकिं[4] धात्रीं चूतञ्च पनसादिकम् ।
इत्थं ददौ च ये तस्मै यथेष्टं लभ्यते फलम् ॥
पिप्पलिं नागलञ्चैव पिप्पलामूलकं तथा ।
चविकं चित्रकञ्चापि हरदञ्च लच अपि[5] ॥
शुकम्पालं पत्रकञ्च तृणराजाह्वयं तथा ।
एतानि समभागानि गुड़ञ्च षोड़शं पुनः ॥
भैषज्यं ददौ तस्मै नीरोगी सुखवान्भवेत् ।
स्निग्धानना सुवर्णाभा राजा भवति गौरवम् ॥
वातपित्तश्लेश्मादि च[6] नाशयन्ति[7] सदा रुजान् ।
दीर्घायुष्कः निरोगात्मा सम्भवे दिवि भूतरे[8] ॥
तृणराजं मुस्तकञ्च श्रीखण्डरक्तचन्दनम् ।
लचञ्च शुकम्पारञ्च मुञ्जं हरतकिमपि ॥
उशीलं मधुकञ्चापि तिष्यफलं नखं तथा[9] ।
कस्तुरं कर्पूर[10]ञ्चैव एलाञ्च जायपत्रकम् ॥
जायाफलं कक्कोलो च लवङ्गञ्च तथा अपि ।
खदिलगुड़िकामित्थं एतैश्च चूर्णकैः सह ॥

---

१ D फलभोगी । २ D पत्रभोगी । ३ C वा D omits व्यं । ४ D हरीतकिं ।
५ D चविकञ्चापि हरदं चित्रकं चलरमपि । ६ D वातपित्तञ्च श्लेष्मादि ।
७ A omits न्ति । ८ D दीर्घायुष्कश्चणीरोगो सम्भवे दिवो भूतले ।
९ D तथानखं । १० A कर्पूलं ।

खदिलगुड़िकामित्थं यो दद्याच्च स्वयम्भूवे ।
सुगन्धसुखं शरीरं[१] प्राप्यते स महीभुजः ॥
सुगन्धरेपितं[२] अङ्गं गन्धकाजी भवेन्महो[३] ।
स्वर्गे मर्त्ये च पाताले राजा भवति सर्वदा ॥
[४]खडिरगुटिकाया च शर्करखण्ड एव च ।
इन्द्रो भवति देवेशः अमृतं भोजनं कृतम् ॥
शर्करखण्डपानस्य पिप्पलैः शर्कलै तथा[५] ।
[६]दद्यात् जिनालये पानं राजा भवति निश्चितम् ॥
राजा भवति धर्मात्मा[७] मर्त्येशो मर्त्यमण्डले ।
गुड़शुण्ठिकृतं पानं यो दद्याच्च स्वयम्भूवे ॥
पानभोजी भवेच्चासौ स्वर्गमर्त्ये त्रिलोकिषु ।
इत्येवं विविधं पानं[८] ददौ तस्मै जिनालये ॥
रागद्वेषसंमोहादि[९] त्यक्त्वा याति सुखावतिम् ।
ताम्बूरादिपूगं[१०] तस्मै[११] स्वयम्भुवे मुदा ददौ ॥
ताम्बूलपूगभोजी[१२] स्यात् राजा भवति निश्चयम् ।
ताम्बूलादिगनं दत्वा रूपवान् सुखवान् शुचिः[१३] ॥

---

१ D सुगन्धं सुमुखं देहं । २ D ०लेपितं । ३ A मह्नो ।
४ A खडिलगुड़िकाया शर्करखण्डमरिचैः पानं दद्यात् स्वयम्भूवे ।
५ D शर्करैस्तथा ।
६ B C omit this line. A पानं कृत्वा दद्यात्
७ D तस्मात् दद्यात् मह्नत्पानं । ८ D विविधैर्पानैं ।
९ D रागद्वेषश्च मोहादि । १० D ताम्बूलादिश्च पूगश्च ।
११ D omits तस्मै । १२ D ०भोगी । १३ B शुधि । D शुचि ।

दिव्याङ्गनामनोहारी राजलक्ष्मीमवाप्नुयात् ।
भोगेश्वराः नरेन्द्राश्च दीर्घायुष्का सुकुलिनः ॥
ताम्बूर[1]गण्डानाच्च भवन्ति मर्त्त्यमण्डले ।
अलङ्काला[2]दिकान्दद्यात् शम्भूवे मनुजादयः ॥
नानाफलं प्रलभ्यन्ते अलङ्कारविशेषतम्[3] ।
आभरणं ददौ तस्मै आभरणं प्रलभ्यते ॥
मुकुतञ्च ददौ तस्मै भूपेशो भवति अयम्[4] ।
चूडामणिं ददौ तस्मै चक्रवर्त्ती भवत्यसौ ॥
ललाटिकां ददौ तस्मै राजा भवति निश्चयम् ।
शिरोऽलङ्कारमित्थं ये[5] ददौ ताथागतालये ॥
फलमुत्तमं सम्प्राप्य राजा भवति भूभुजाम् ।
कर्णिकाभिः कर्णिकालं[6] कुण्डलैः कुण्डलं लभेत् ॥
कण्ठिभिः कण्ठभूषणं[7] प्राप्यते मनुजादयः ।
मुखालङ्कालमित्थं[8] ये ददौ स्वयम्भूवे मुदा ॥
उत्तमं फलं सम्प्राप्ता[9] ब्रह्मलञ्च प्रलभ्यते ।
प्रालम्बिकाभिर्लम्बिकां[10] मौक्तिकैर्मौक्तिकामपि ॥
कटकैः कटकञ्चापि अङ्गदैरङ्गदमपि[11] ।

---

१ D ताम्बूलगुण्ड० । २ D अलङ्कारा० । ३ D ०विशेषतः ।
४ D मकुटञ्च ददौ तस्मै भूपेशोऽयं भवन्ति च ।
५ D शिरोऽलङ्कार ये तस्मै । ६ D कर्णिकारं । ७ D कण्ठभूषञ्च ।
८ D मुखालङ्कारमित्थं । ९ D संप्राप्य । १० D प्रालम्बिकाभिलम्बिञ्च ।
११ D अङ्गदामपि ।

अङ्गुलीयकैर्मुद्राश्च[1] कङ्कणैः कङ्कणं तथा ॥
मेखलाभिर्मेखलाश्च अलङ्कालै[2]रलङ्कृतम् ।
[3]इत्थं शरीरालङ्कारान्ददौ तस्मै स्वयम्भुवे ॥
अधमं फलं सम्प्राप्ता वैश्यत्वञ्च प्रलभ्यते ।
पादागुडैः पादागुडं किङ्किनीभिश्च किङ्किनिम्[4] ॥
अधमं फलसम्प्राप्ता शूद्रत्वञ्च प्रलभ्यते ।
नानालङ्कालजं इत्थं फलञ्च प्राप्यते ननु[5] ॥
ते स्वर्गमधिगच्छन्ति नानालङ्कालभूषितम् ।
वज्रैर्मुक्ताभिर्वैडूर्य्यैर्विद्रुमै[6]रश्मगर्भकैः ॥
मलकटैः[7] पुष्परागैर्जाम्बूनदैर्विशेषकैः ।
इत्थं नानाविधैर्रत्नैः खचितं भूषणं ददौ ॥
देवत्वञ्च अनुप्राप्तास्त्रिदिवेषु विशेषतः ।
सुवर्णैः कृतभूषञ्च ददौ तस्मै मुदा पुनः ॥
राजा भवति धर्म्मात्मा मर्त्यलोके विशेषतः ।
रजतैः कृतभूषञ्च तस्मै ददौ स्वयम्भुवे[8] ॥
भवन्ति मानुषास्ते च धर्म्मात्मा पुण्यशीलिनः ।
सुवर्णैः रजतैः रत्नैः केतकीपुष्पवच्छुभम् ॥

---

१ D अङ्गुलीयकमुद्राश्च । २ D अलङ्कारैः ।
३ A इत्थं शवीलालङ्कालान् ददौ तस्मै स्वयम्भूवे ।
४ D पादागुडैः पादगुडं किंकिनीपदलभ्यते ।
५ D नानालङ्कारजमित्थं ये फलं प्राप्यते ननु ।
६ D वैदूर्य्यविद्रुमैः । ७ D मरकटैः । ८ D स्वयम्भुवे ।

कृतपुष्पं ददौ तस्मै बहुविधं फलं लभेत् ।
यद्यत्स्वभावपुष्पाणां तत्तच्च कृतिमफलम्[1] ।
विशेषैरत्नपुष्पैश्च[2] लभन्ते मनुषाः फलम् ॥ कृत्तिमपुष्पस्य[3] ।
नानारत्नैः कृतं पुष्पं ददौ तस्मै जिनालये ॥
देवत्वञ्च प्रलभ्यन्ते त्रयस्त्रिंशे[4] विशेषतः ।
जाम्बूनदैः कृतं पुष्पं तस्मै स्वयम्भूवे[5] ददौ ॥
ब्रह्मत्वञ्च प्रलभ्यन्ते त्रिदिवेषु विशेषतः ।
सुवर्णैश्च कृतं पुष्पं ये ददौ तं स्वयम्भुवे[6] ॥
राजात्वञ्च प्रलभ्यन्ते विशेषैर्मर्त्त्यमण्डले ।
रजतैश्च कृतं पुष्पं[7] स्वयम्भूवे मुदा ददौ ॥
मानुषत्वं प्रलभ्यन्ते दीर्घायुष्को धनेश्वरः ।
वितनोति वितानञ्च तस्मै च[8] मानवादयः ॥
दीप्तदेहाः सुशीलाश्च भवन्ति कुलिनश्च ते ।
उत्तम[9]फलदं स्वर्णैः पट्टैश्च मध्यमं फलम् ॥
अधमं फलदं वस्त्रैर्वितानस्य इदं फलम् ।
नानावितानं ये ददौ तस्मै स्वयम्भूवे[10] मुदा ॥
धर्मात्मा धर्मशीलश्च कुलवान्भवति असौ[11] ।

१ D कृतिमफलम् ।  २ A विशेषैरत्नैश्च ।  ३ D कृतिमपुष्पस्य ।
४ A त्रयत्रिंशे ।  ५ D स्वयम्भुवे ।
६ A सुवर्णैः कृतं पुष्पं ये ददौ तस्मै स्वयम्भूवे ।  ७ A रजतैः कृतं पुष्पञ्च ।
८ D तस्मैश्च ।  ९ D उत्तमं ।  १० D नानावितानं तस्मैश्च ददौ स्वयम्भुवे
११ D कुलवाञ्च

देवत्वं कनकयुक्तैः[१] राजत्वं पट्टकैस्तथा ॥
मानुषत्वं वस्त्रकैश्च पुष्पकैः शुभदं भवेत् ।
नानाविधमिदं इत्थं वितानन्तु ददौ पुनः ॥
मनुजाद्योमानुष्या[२] वाञ्छाधिकफलं[३] लभेत् ।
महार्हरत्नसंयुक्तं च्छत्रं ददौ स्वयम्भूवे[४] ॥
इन्द्रो भवति देवेशः श्रीप्राप्त[५] धर्म्मसंयुतः ।
जाम्बूनदकृतं च्छत्रं ददौ स्वयम्भुवे मुदा[६] ॥
राजा भवति चक्रेशः सप्तरत्नैः सुसंयुतः ।
सुवर्णैः कृतच्छत्रं यो धौकृतञ्च[७] जिनालये ॥
भविष्यति भूपेशः[८] पुण्यवान् सुखवानपि ।
रजतैः कृतच्छत्रञ्च यो ददौ चैत्यपुङ्गवे ॥
राजा भवति धर्म्मात्मा गुणवान्नेमवाञ्च वै ।
चीनपट्टैः कृतं च्छत्रं ददौ तस्मै स्वयम्भूवे ॥
राजत्वञ्च[९] प्रलभ्यन्ते स्वर्गमर्त्त्यत्रिलोकिषु ।
पञ्चपट्टैः कृतं च्छत्रं यो दद्यात् शम्भवे[१०] मुदा ॥
भवन्ति राजपुत्रास्ते सर्वत्र भुवनेषु च[११] ।
मयनैः कृतं च्छत्रञ्च[१२] यो दद्याच्चैत्यपुङ्गवे ॥
च्छत्रधारी भवेल्लोके मर्त्त्यलोके विशेषतः ।

---

१ D कनकैर्युक्तै । २ D मनुष्यानां । ३ B वाञ्छादयफलम् ।
४ D स्वयम्भुवे । ५ D ०प्राप्ता । ६ D तस्मै स्वयम्भुवे ।
७ D ये ढौकितञ्च । ८ D भविष्यति च भूपेन । ९ D राजात्वञ्च
१० D सम्भवे । ११ A भूवनेषु च । १२ D मयनैश्च कृतं कृत्रं ।

नानापुष्पैः कृतं[१] च्छत्रं ददौ तस्मै जिनालये ॥
ब्रह्मत्वञ्च प्रलभ्यन्ते त्रिदिवेषु विशेषतः ।
स्वर्णपर्वतसाहस्राद्दानाधिकफलं लभेत् ॥
च्छत्रदानात् मुदा तस्मै इत्थं फलं प्रलभ्यते ।
चीनपट्टध्वजं तस्मै ददौ स्वयम्भुवे मुदा ॥
धवलगृहं प्रलभ्यते[२] चक्रवर्त्ती[३] भवत्यसौ ।
पञ्चवर्णपट्टध्वजं ददौ तस्मै जिनालये ॥
प्रासादञ्च प्रलभ्यन्ते भोगवन्त भवन्ति ते ।
नानाविधमिदं इत्थं ध्वजं ददौ जिनालये ॥
ध्वजयुक्तं गृहं लभ्य स्वर्गमर्त्त्यत्रिलोकिषु ।
नीलपताकैर्विद्यादं पीतकैः रत्नदं तथा ॥
कर्म्मदं रक्तवर्णैश्च हरितैः सिद्धिदं भवेत् ।
नानावर्णै[४]र्नानाफलं श्वेतैश्च सर्वदं तथा[५] ॥
उत्तमफलदं दीर्घैं मध्यमै[६]र्मध्यमं फलम् ।
अधमफलदं खर्वैः पताकस्य इदं फलम् ॥
धौषितं शम्भवे येऽपि इत्थं फलं प्रलभ्यते ।
राजत्वञ्च दुकूलैश्च ब्रह्मत्वं पुष्पकैरपि ॥
वैश्यत्वमपि पट्टैश्च कार्पासैः शूद्रकं भवेत् ।
पटाकं विविधमेवं ददौ तस्मै जिनालये ॥
इत्थं फलं प्रलभ्यन्ते मानवाद्यो मानुषाः[७] ।

---

१ D नानापुष्पैर्कृतं। २ A धवलगृहं लभ्यन्ते। ३ D चक्रवर्त्ति।
४ D नानावर्णैर्युतं। ५ D omits तथा। ६ A omits मध्यमैः।
७ D मानवाद्यमानुषाः।

अति[१]श्वेतचामरञ्च ददौ तस्मै स्वयम्भुवे ॥
राजत्वफलसंप्राप्ता देवमर्त्त्यत्रिलोकिषु ।
घण्टं ददौ च ये तस्मै मानवाद्यो[२]मानुजाः ॥
सुस्वराः स्निग्धघोषाश्च भवन्ति सर्वजन्मसु ।
दुर्वाकुण्डाक्षतपुष्यान् लाजया सह भक्तितः ॥
प्रक्षिपेच्छम्भुचैत्येऽस्मिन् स्वस्तिवाक्यमुदीलयन्[३] ।
दुर्गतिं नाभिजानाति सुकुली देवतासमः ॥
सर्वलोकगुरुवन्द्यश्चान्ते मोक्षमवाप्नुयात् ।
स्वस्तिवाक्यैश्च गाथाभिरुदीरयन् स्वयम्भूवे[४] ॥
तेषां सर्वत्र जन्मेषु स्वस्तिं शुभञ्च निश्चयम् ।
आदौ स्वस्तिञ्च मध्ये च पर्य्यवसानेऽपि तथा[५] ॥
आपूर्वं अन्तजन्मेषु स्वेषु सर्वत्र जन्मसु ।
इति सर्वे च मानुष्याः ज्ञात्वा गाथामुदीलयन्[६] ॥
तस्या पुण्यप्रभावाच्च स्वस्त्यस्तु सर्वजन्मसु ।
पञ्चरङ्गिकशोधूरं च्छत्रं ददौ स्वयम्भूवे[७] ॥
देवलोकेषु मर्त्त्येषु[८] च्छत्रवल्लभ्यते फलम् ।
पञ्च ये पूपकादिञ्च क्षिपेत्तस्मै स्वयम्भूवे ॥
पशुगतिं न लभ्यन्ते देवगतिं प्रलभ्यते ।
चक्रपिष्टञ्च ये तस्मै[९] क्षिपेच्च मानवाद्यः ॥

१ D उच्च० । २ D मानवाद्य० । ३ D उदीरयेत् ।
४ D स्वयम्भुवे । ५ D स्वस्तिकं । ६ D उदीरयन् ।
७ D स्वयम्भुवे । ८ D देवमर्त्त्येषु लोकेषु । ९ D तस्मैः

चक्रेशश्च फलं प्राप्ता भवन्ति क्षत्रवत्पुनः ।
कुचाकारं सुपिष्टं ये क्षिपेत्तस्मै च मानवाः ॥
अप्सराभि रतिं कृत्वा त्रयत्रिंशे सदा स्थिताः ।
मयनकृतपुष्पं ये क्षिपेच्च शम्भवे[1] मुदा ॥
ईप्सितं फलं संप्राप्ता बौद्धपुत्रा[2] भविष्यति ।
जाम्बूनदकृतं पुष्पं क्षिपेत्तस्मै जिनालये ॥
राजा भवति देवेशस्त्रायत्रिंशे विशेषतः ।
सुवर्णकृतपुष्पं ये क्षिपेत्तस्मै स्वयम्भुवे[3] ॥
राजा भवति धर्म्मात्मा सर्वत्र भूवनेषु च ।
रूप्येण कृतपुष्पं ये स्वयम्भुवे क्षिपेत्मुदा ॥
भवन्ति मनुजास्ते च धर्म्मात्मानः सुशीलिनः ।
स्वाभाविकानि पुष्पाणि क्षिपेत्तस्मै मुदा पुनः ॥
तेषां सर्व्वेषां[4] पुष्पाणां स्वाभाविकफलं लभेत् ।
एकपुष्पेनैकफलं दशेन दशमं फलम् ॥
शतेन शतकञ्चापि सहस्रेण सहस्रकम् ।
लक्षेण लक्षकञ्चापि कोटिना कोटिकं तथा ॥
फलमित्यश्च संप्राप्ता भविष्यन्ति न संशयः ।
इति मत्वा च ये सर्वे मनुजादयो[5] मानवाः ॥
अत्यर्थञ्च क्षिपेत्पुष्पं मुदा तस्मै पुनः पुनः ।
धर्म्मार्थकामदं पुष्पं सर्वत्र भुवनेषु च ॥

---

१ D सम्भवे । २ D बुद्धपुत्रो ।
३ D सुवर्णकृतपुष्पं ये तस्मै दाना स्वयम्भुवे । ४ D स्वाभाविकानां ।
५ D मनुजादय ।

यद् यद् पुष्पं चिप्तकेन तत्तद्फलं प्रलभ्यते।
यथानुलभ्यते[1] द्रव्यं दक्षिणानुप्रयच्छति ॥
धर्म्मार्थकाममोक्षञ्च प्राप्नुवन्ति च मानवाः।
दक्षिणायुक्तपूजायाः फलं सर्वं समुद्भवेत्[2] ॥
दक्षिणायुक्तपूजायाः स्वल्पफलं प्रकथ्यते।
दानकर्म्मविवाहेषु देवार्च्चने विशेषतः ॥
यज्ञतीर्थेऽभिषेके च दक्षिणा शुद्ध्यते सदा।
तस्माच्च दक्षिणा देया कर्म्मसमाप्तकारकाः[3] ॥
यावद्दक्षिणा हीनैव[4] तावत् कर्म्मफलं न हि[5]।
यथा यथा बहुं दद्यात्तथा तथा फलं लभेत् ॥
यथा यथा स्वल्पं दद्यात्तथा तथा फलं लभेत्।
आयुरारोग्यकल्याणं शुभञ्च सुखसम्पदम् ॥
सर्वञ्च सर्वदा भद्रं ददाति दक्षिणा शुभाः।
दक्षिणा परमं दानं[6] सर्वकर्म्मसमाप्तकृत्[7] ॥
दक्षिणापूर्णकर्म्मेण धनेशो भवति ह्यसौ।
जाम्बूनदेन उत्तमं[8] सुवर्णेन महोत्तमम् ॥
मध्यमं रजतेनापि मानुष्यैर्लभ्यते फलम्।
इति मत्वा च मानुष्या दक्षिणां ढौषितञ्च ये[9]

१ D यथानुर्लभतो। २ D समुद्भवे। ३ D सम्पूर्णकारकाः।
४ D यावच्च दक्षिणा हीने। ५ B omits नहि।
६ A दक्षिणां परमदानां। ७ D ० वान्। ८ D जाम्बुनदेनोत्तमञ्च।
९ D दक्षिणाढौकितञ्च ये।

तस्याः[१] पुण्यफलेनापि भविष्यन्ति धनेश्वराः।
माणिक्येन रविः शान्तं मौक्तिकेन[२] च चन्द्रमा॥
अङ्गारो विद्रुमेनापि पुष्परागेन च बुधः।
बृहस्पतिः सुवर्णेन तथा वज्रेन शुक्र वैः॥
शनिश्वरं नीलेनापि[३] राहुः श्रोत्राञ्जनेन च[४]।
कर्केतनेन केतुश्च[५] सुमलेन च जन्मकम्॥
अनेगं विविधं[६] रत्नं दक्षिणावर्त्तशङ्खकम्।
नष्टशोकाः सुवंशाश्च पूर्णेन्द्रिया मनोरथाः॥
नानारत्नं ददौ तस्मै इत्थं फलं प्रलभ्यते।
इत्येवं विविधं रत्नं ददौ तस्मै च दक्षिणाम्॥
रत्नेशाश्च भवन्ति ते[७] धनाधिपेन शादृशाः।
एवं बहुगुणं ज्ञात्वा सर्वे च मनुजादयः॥
रत्नानां दक्षिणां तस्मै ददाति स्म पुनः पुनः।
पिण्डपात्रं ददौ तस्मै स्वयम्भुवे पुनः पुनः॥
नानायुक्तैर्नानाफलं[८] लभन्ते च पुनः पुनः।
रत्नपात्रं ददौ तस्मै तुषितेशो भविष्यति॥
दिव्यस्त्रीभिः परिवृत्य तुषितेषु सुवासितः।
जाम्बूनदकृतं पात्रं ददौ तस्मै जिनालये॥
यामेशो भवति सोऽयं देवकन्यापरिवृतः।
सुवर्णकृतपात्रं ये तस्मै ददौ मुदा पुनः॥

---

१ D तस्य। २ A मौक्तिकेन चन्द्रमा। ३ D नीलकेन।
४ A श्रोत्रोञ्जनेन च। ५ B कञ्जेन तेन केतुश्च। D कर्कोटकेन केतुश्च।
६ D अनेकविविधं। ७ D रत्नेशाश्च भवन्तीति। ८ D फलं नाना।

अप्सराभिरतिं कृत्वा त्रयस्त्रिंशेश्वरो भवेत् ।
रजतकृतपात्रं ये तस्मै ददौ मुदा पुनः ॥
महाराजानश्चत्वार भवन्ति च पुनः पुनः ।
ब्रह्मत्वं कांश्यपात्रैश्च क्षत्रियं ताम्रपात्रकैः ॥
वैश्यत्वं मृन्मयैः पात्रैः पाषाणैः शूद्रकं भवेत् ।
इत्थं नानाविधं पात्रं ददौ तस्मै स्वयम्भुवे ॥
ईप्सितं फलसंप्राप्तास्ते नराः स्वर्गगामिनः ।
गोदुग्ध ओदनैर्व्वह्म[1] क्षीरोदनैर्दिवौकसम् ॥
शाल्योदनैर्मनुष्यत्वं निःसंशयं प्रलभ्यते ।
तैलपूरकैरधमं मध्यमं घृतपूरकैः ॥
उत्तमं गोघृतैर्युक्तैर्पूपस्य तत्फलं लभेत्[2] ।
पूरकैः सह पात्रञ्च तस्मै ददौ च मानवाः ॥
पूर्वोक्तञ्च फलं लभ्य[3] त्रिदिवेषु गमिष्यति ।
ओदन विविधं इत्थं पिण्डपात्रं ददौ च ये ॥
सुधांसुभोजिनः सर्वे त्रयस्त्रिंशे विशेषतः ।
एवं बहुगुणं मत्वा पिण्डपात्रस्य यद्फलम् ॥
तद्फलं विविधं प्राप्य पुण्यवान् सुखवान्भवेत् ।
शृणु मैत्रेय वक्ष्यामि पिण्डपात्रस्य यद्फलम् ॥
पिण्डपात्रप्रदानस्य फलसङ्ख्या न विद्यते ।
सर्वभूमिरुहानाञ्च पत्रसङ्ख्या तु[4] विद्यते ॥

---

१ D वह्यं । २ A उत्तमं गोघृतजैश्च पूरकास्य इदं फलम्
३ D पूर्व्वोक्तं फल लभ्यञ्च । ४ D च ।

सर्व्वेषां प्राणिजातीनां रोमसङ्ख्या च विद्यते[१] ।
तस्मै पिण्डप्रदानस्य पुण्यसङ्ख्या न विद्यते ॥
वर्षकोटिसहस्राणि मेघा वर्षेयुः सर्व्वतः[२] ।
रात्रिन्दिनमविच्छिन्नं तदस्ति विन्दुसङ्ख्यकाः ॥
शम्भूवे[३] पिण्डदानस्य फलसङ्ख्या न विद्यते ।
नदीसमुद्रजलानां[४] शक्यते विन्दुसङ्ख्यिकाः[५] ॥
तस्मै पिण्डप्रदानस्य फलं वक्तुं न शक्यते ।
गजकोटिसहस्राणि गवां कोटिशतानि च ॥
कोटिकन्याप्रदानाच्च पिण्डपात्रं तु गौरवम् ।
अतीतैरपि वुद्धैश्च प्रत्युत्पन्नैरनागतैः ॥
[६][सर्व्वैस्तथागतैश्चापि फलवक्तुं न शक्यते ।
अहमधन एकाकी अत्र नेपालमण्डले ॥
आयातः पिण्डपात्रस्य फलं वक्ते न शक्यते ।
तथागताश्च विद्यन्ते ददौ तथागताय च ॥]
तथागता न विद्यन्ते बोधिसत्त्वेभ्यः संददौ ।
बोधिसत्त्वो[७] न विद्यन्ते भिक्षुणीभिक्षुभ्यां ददौ ॥
भिक्षु[८]भिक्षुणीनापि च चैरकेभ्यो[९] ददौ पुनः ।
शम्भू[१०]चैत्ये जिने दानाल्लभ्यते उत्तमं फलम् ॥

---

१ D has an additional line सर्व्वेषां जातिनां सङ्ख्या रोमानाञ्चापि विद्यते । २ A सर्व्वत्र । ३ D सम्भुवे । ४ D ०जलजां ।
५ D ०संख्यकाः । ६ A omits the portion bracketted.
७ D बोधिसत्व । ८ D भिक्षुश्च । ९ D चैलकेभ्यः । १० D स्वम्भु० ।

धातुस्तूपे चैत्ये दानात् मध्यमं लभ्यते फलम्[1] ।
सर्वज्ञगुरवे[2] दानात् फलसङ्ख्या न विद्यते ॥
स्थविरेभ्यश्च दानाच्च सर्वज्ञत्वं प्रलभ्यते ।
भिक्षुभिक्षुणीभ्यां दानाद्बहुफलं प्रलभ्यते[3] ॥
शाक्यवंशे प्रदानाच्च ईप्सितं लभ्यते फलम्[4] ।
[[5]वज्राचार्य्याय वै दानात् निष्फलं लभ्यते ननु ॥]
इति श्रुत्वा च मानुष्याः पात्रे ददौ पुनः पुनः ।
अपात्रे पिण्डदानाच्च स्वल्पं फलं प्रलभ्यते ॥
पात्रे पिण्डप्रदानाच्च बहु[6]फलं प्रलभ्यते ।
इत्थं मत्वा च मैत्रेय सर्वे च मानवादयः ॥
पिण्डप्रदानाच्च निश्चयं लभ्यते फलम् ।
तण्डुलानि ददौ तस्मै स्वयम्भुवे मुदा पुनः ॥
आरोग्यवान् भवति चासौ अमृतं भोजनं लभेत् ।
धान्यादि भूमिजं व्रीहिं सर्वं ददौ स्वयम्भुवे ॥
इष्टं फलं प्रलभ्यन्ते मानुजादय मर्त्त्यजाः ।
धान्यैश्च शान्तिकश्चापि यवेन पुष्टिकस्तथा ॥
तिलैश्च वश्यकश्चापि महाबलश्च[7] माषकैः ।
सिद्धार्थैः सर्वकश्चापि व्रीहीनाञ्च इदं फलम् ॥

---

१ D धातुस्तूपे च चैत्ये च दानाच्च मध्यमं फलं । २ D °गुरुवे ।
३ D भिक्षुश्च भिक्षुणीश्चापि दानात् फलं बहुं लभेत् ।
४ D ईप्सितञ्च फलं लभेत् । ५ C omits this line. ६ A बहुं
७ A महाबलं ।

मुदा तस्मै ददौ योऽपि वाञ्छितं लभ्यते फलम्।
चतुर्विंशति व्रीहिञ्च ददौ तस्मै च मानवाः॥
येषां येषां फलमुक्तं तेषां तेषां फलं लभेत्।
भृङ्गारञ्च ददौ तस्मै गन्धवारिभिः पूरितम्॥
तृष्णारोगं न जातु स्यात् मनुजादय मानुषाः।
भृङ्गारथालिकं शुद्धं ददौ तस्मै स्वयम्भुवे[१]॥
रत्नथालिं प्रलभ्यन्ते त्रिदिवेषु विशेषतः।
खिक्खिलिकां[२] ददौ तस्मै स्वयम्भुवे पुनर्मुदा॥
षड्गतिं न प्रलभ्यन्ते केवलं मोक्षगामिनः।
कुम्भारञ्च ददौ तस्मै स्वयम्भुवि जिनालये॥
निष्पापी किल्विष[३]नाशी भवन्ति सर्वजन्मसु।
सुवर्णेन कृतं ढौक्य उत्तमं लभ्यते फलम्॥
रूप्यैश्च मध्यमं वापि ताम्रादि स्वल्पकं फलम्।
इत्थं नानाविधैर्वापि धातुभिः कृतद्रव्यकम्॥
भृङ्गारादिं ददौ तस्मै वाञ्छितं लभ्यते फलम्।
काष्ठपादं ददौ तस्मै स्वयम्भुवे पुनर्मुदा[४]॥
नरकगामी[५] न भवेत् स्वर्गगामी च केवलम्।
उपानहं ददौ तस्मै सुवर्णैं धातुभिः कृतम्॥
ऋद्धिराभी भवेच्चासौ खेऽपि गामी च केवलम्।

---

१ A भृङ्गारथालिञ्च ददौ तस्मै स्वयम्भुवे मुदा पुनः। २ D खिक्खिरीकां
३ D किल्विषं। ४ D मुदा पुनः। ५ D ०गामिं।

[1][जातेन तेन मुनिना प्रथमं भूम्यकामता ॥
सप्तपदे पद्मोद्भूते पादुकायुग्मदानतः।
इति गुणं प्रतिश्रुत्वा तस्मै ददौ उपानहं ॥
ऋद्धिलाभी भवेच्चासौ वियद्गामी च केवलम् ॥]
भिक्षुग्रामयिरित्थं ये ददौ तस्मै मुदा पुनः ॥
भिक्षुभावं प्रलभ्यन्ते मर्त्यलोके विशेषतः।
सिंहशार्दूलहस्तिभि[2]र्युक्तं सिंहासनं ददौ ॥
इन्द्रपदं प्रलभ्यन्ते त्रयत्रिंशे विशेषतः।
सिंहशार्दूलौ युक्तञ्च हस्तिसिंहौ च वा अपि ॥
शार्दूलसिंहावथवा तस्मै च मानवादयः।
सिंहासनमिदमित्थं ददौ च स्वयम्भुवे मुदा[3] ॥
चक्रवर्त्तिनो भवन्ति[4] विशेषैर्मर्त्त्यमण्डले।
हस्तिनौ युक्तञ्च सिंहौ शार्दूलावथवा पुनः ॥
सिंहासनं ददौ इत्थं ते राजान भवन्ति च।
पर्य्यङ्कं तूलिकादीञ्च ददौ तस्मै मुदा पुनः ॥
दिव्यासनं प्रलभ्यन्ते देवमर्त्त्यत्रिलोकिषु।
दीपथालिं ददौ नित्यं दीपेन सह मानवाः ॥
दिव्यचक्षुं प्रलभ्यन्ते त्रिदिवेषु विशेषतः।
आरतिदीपं[5] नित्यञ्च ददौ तस्मै स्वयम्भुवे ॥
अत्यर्थं ज्ञानचक्षुञ्च प्रलभ्यन्ते न संशयः।

---

१ B omits the portion bracketted. २ D ०हस्तीभिः। ३ D श्रीस्वयम्भुवे। ४ D चक्रबर्त्तिन् भवन्ती च। ५ A आलति०

धूपंदहं ददौ तस्मै स्वयम्भुवे मुदा पुनः॥
दिव्यघ्राणं प्रलभ्यन्ते त्रिदिवेषु विशेषतः।
जलभाण्डं ददौ तस्मै मानवाद्य मानुषाः॥
तृषारोगा विनश्यन्ति[१] सर्वत्र जन्मजन्मसु।
गन्धसुशीतलजलैः[२] स्वच्छैश्च वारिभिः सह॥
ताम्रादिकघटदानादन्ते बौद्धपदं लभेत्।
सौवर्णरूप्यभाण्डञ्च ददौ तस्मै मुदा पुनः॥
दिव्यदेहा भवन्ति ते त्रयस्त्रिंशे विशेषतः।
ताम्रादिधातुजं भाण्डं मुदा तस्मै पुनर्ददौ॥
भवन्ति मानुषास्ते च धनाधिपेन शादृशाः।
पाषाणं मृन्मयं वापि नानाभाण्डं ददौ मुदा॥
अप्रधृष्या धनाढ्याश्च भवन्ति मानुषाश्च ते[३]।
तस्मै च भक्तियुक्तेन पात्रपूर्णं प्रदापयेत्॥
[४][योऽश्रद्धया प्रदत्तेन पात्रपूर्णं न कारयेत्।
अधनोऽसौ कुलद्वेषी कुष्ठरोगी भवेत्कुधीः॥
तस्माच्च श्रद्धयाभक्त्या पात्रपूर्णं प्रदापयेत्।]
पूर्णपात्रप्रदानेन गृहे लक्ष्मी सुनिश्चराः[५]॥
आरोग्यं सुखकल्याणं पुत्रपौत्रीप्रवर्द्धनम्[६]।
इति मत्वा च मानुष्याः पूर्णपात्रं प्रदापयेत्॥

---

१ A विनस्यन्ति। २ D सुगन्धशीतलजलैः। ३ D मानुषा च ते
४ C omits the portion bracketted. ५ D प्रवर्द्धते।
६ A D आरोग्यं सुखं कल्याणं पुत्रप्रवर्द्धनं पौत्री।

पूर्णपात्रप्रदानस्य फलसंख्या न[१] विद्यते ।
मृदङ्गादिभिर्वाद्यैश्च दुन्दुभिः पटहादिकैः ॥
वीणाभि मुरजैर्वापि ध्वनत्घण्टैश्च[२] कांशजैः ।
ढक्कादिमण्डलवाद्यै[३]र्झल्लडिण्डिमझ्झझ्झलैः[४] ॥
इत्यादिभिश्च वाद्यैर्ये वादयन्ति स्वयम्भुवे ।
गन्धर्वा च न जातु स्यात् सुन्दराश्च सुदेहिनः ॥
मनोज्ञवक्त्रास्ते जाता देवमर्त्त्ये विशेषतः ।
भेरीभिरपि काहारैस्तूर्य्यैर्घोषैश्च वाद्यकैः ॥
घोषणां[५] कारयामासुः स्वयम्भुवे मुदा पुनः ।
सुस्वराः स्निग्धघोषाश्च भवन्ति सर्वजन्मसु ॥
किन्नराश्च न जातु स्युः[६] केवलं देवजन्मिनः ।
जन्तुशृङ्गैर्न[७] जन्तु स्यात् माहिषैर्माहिषं न हि ॥
अजशृङ्गैरजं न स्यादेडकैरेडकं न हि ।
मानवाद्य इत्थं ये शृङ्गघोषं प्रचक्रु हि ॥
पशुजन्म न जातु स्यात् मानुषा अपि केवलम् ।
जलजन्तुं जन्म न स्यात् शङ्खैश्च शुक्तिकं तथा[८] ॥
जलजैर्घोषणां कृत्वा जलजन्तुं न हि[९] ।
गीतैर्गाणैश्च ये तस्मै विविधैर्भाजनैरपि[१०] ॥

---

१ A omites न । २ D ०घटैश्च । ३ D ढक्कादिमङ्गलैर्वाद्यैः ।
४ D ०झर्झरैः । ५ D घोषणं । ६ D स्यात् । ७ D जन्तुशृङ्गैर्नजातु ।
८ A जलजन्तुं न स्याच्छङ्खैः शुक्तिकं तथा । B शुक्तिकैः शुक्तिकं तथा ।
९ D क्वचिन्न हि । १० A भौजैरपि ।

गाणयामासुरत्यर्थं सुघोषैर्मधुरस्वरैः ।
मनोज्ञवल्गान्वाक्यान् च सुघोषान् मधुरस्वरान् ॥
प्राप्नुवन्ति सदा मर्त्यास्त्रिदिवेषु विशेषतः ।
धारणी च पठेत्तस्मै मनुजादय मानवाः ॥
सर्वज्ञत्वं प्रलभ्यन्ते त्रिदिवेषु विशेषतः ।
पाठश्चापि पठेत्तस्मै मानुषाश्च पुनः पुनः ॥
ग्रहपीड़ा विनश्यन्ति शान्तिः पुष्टि भविष्यति ।
गद्यं पद्यजं स्तोत्रं स्तुतिं कृत्वा दिनेदिने[१] ॥
सुन्दराः शुद्धदेहाश्च भवन्ति पण्डिताः ध्रुवम् ।
भाषजैर्विविधैस्तस्मै स्तोत्रं कृत्वा प्रतिदिने[२] ॥
सुस्वराः स्निग्धघोषाश्च भवन्ति सर्वजन्मसु ।
तस्य मन्त्रं जपेद्वापि मनुजादय मानवाः ॥
सर्वफलं प्रलभ्यन्ते अन्ते बौद्धपदं लभेत् ।
शान्तिमक्षोभ्यमन्त्रेण पुष्टिञ्चामोघसिद्धके[३] ॥
वश्यं[४] चाप्यमिताभस्य रत्नेशस्य श्रीसम्पदम्[५] ।
वैरोचनस्य मन्त्रेण सर्वफलञ्च प्राप्यते[६] ॥
मानुषा इति मत्वा च सच्चेवा च सदा कृताः ।
विद्यां अक्षोभ्यमन्त्रेण रत्नेशस्यापि सम्पदम् ॥
कर्म्मदं चामिताभस्य अमोघसिद्धेः सिद्धिदम्[७] ।

---

१ D गद्यं पद्यं स्तुतिं कृत्वा भक्त्या भावं दिने दिने । २ D भाषजै विविधै स्तोत्रं तस्मै कृत्वा दिनं प्रति । ३ B ०सिद्धे च० । A अमोघसिद्धेः पुष्टिकम् । ४ A वश्य । ५ D श्रियं पदं । ६ D सर्व्वं फलं प्रलभ्यते । ७ D सुसिद्धिदं ।

वैरोचनस्य मन्त्रेण मोचञ्च प्राप्यते ननु[1] ॥
इत्थं ज्ञात्वा च मानुष्याः तच्छेवां निश्चयं कृतम् ।
मैत्रेय शृणु वक्ष्यामि मन्त्रजापस्य यत्फलम् ॥
तेषाञ्च मन्त्रजापस्य फलसङ्ख्या न विद्यते ।
सर्वपृथ्वीरुहानाञ्च पत्रसङ्ख्या तु विद्यते ॥
सर्वेषां सत्वजातीनां केशसङ्ख्या च विद्यते ।
तेषां मन्त्रस्वजापस्य पुण्यसङ्ख्या न[2] विद्यते ॥
अब्दकोटिसहस्राणि घनाः वर्षयुः सर्वतः ।
दिनं रात्रिमविच्छिन्नं[3] तदस्ति विन्दुसङ्ख्यया ॥
शम्भुव मन्त्रजापस्य फलसङ्ख्या न विद्यते ।
नदीभागरजलानां[4] शक्यते विन्दुसङ्ख्यया ॥
तस्य जापस्य मन्त्रस्य फलं वक्तुं न शक्यते ।
हस्तिकोटिसहस्राणि गवां कोटिशतानि च ॥
कोटिकन्याप्रदानाच्च मन्त्रजापस्य उत्तमम् ।
अतीतैरपि बुद्धैश्च प्रत्युत्पन्नैरनागतैः ॥
सर्वैस्तथागतैश्चापि फलं वक्तुं न शक्यते ।
अहं अधम एकाकी अत्र नेपालमण्डले ॥
आयात[5] मन्त्रजापस्य कथं वक्तुं प्रशक्यते ।
इत्थं ज्ञात्वा च मानुष्यास्तेषां मन्त्रं जपेन्ननु ॥

---

१ D पुनः ।    २ D च ।    ३ D दिनरात्रिमवच्छिन्नं ।
४ D नदीभागर अम्बूनां ।    ५ D आयता ।

ईप्सितं फलं[1] सम्प्राप्ता मोक्षञ्च अधिगच्छति ।
व्यञ्जनैर्वीजयन्तस्मै[2] स्वयम्भुवे मुदा पुनः ॥
राजत्वञ्च प्रलभ्यन्ते विशेषैर्मर्त्यमण्डले ।
चामरैर्वीजयन्चापि तस्मै च मानवादयः ॥
राजेशत्वं[3] प्रलभ्यन्ते निश्चयं मर्त्यमण्डले ।
चामरं[4] व्यंजनं वापि वीजयार्थे ददौ च ये ॥
ईप्सितफलं सम्प्राप्ता[5] भवन्ति जन्मजन्मसु ।
सुधालेपं मुदा तस्मै चरन्ति मानवादयः ॥
रागद्वेषसम्मोहादि[6] त्यक्ता याति सुरालयम् ।
धनेश्वरा दीर्घायुष्का सौभाग्याश्च सुकूलिनः ॥
एवञ्च सुखसम्प्राप्ताः परत्रे मोक्षगामिनः ।
शङ्खभस्मैः प्रलेपस्य फलसङ्ख्या न विद्यते ॥
शिलाभस्मैः प्रलेपस्य बहुफलं प्रलभ्यते ।
सुवर्णचूर्णैर्दुग्धैश्च मिश्रितैः सह सङ्गमैः ॥
सुधाभिर्लेपं कुर्वन्ति वाञ्छितं लभ्यते फलम् ।
यद् यत्सुधाभिलेपन्ति तत्तत्फलं प्रलभ्यते ॥
ईप्सितफलं सम्प्राप्य[7] पूर्णचन्द्रमिव द्युतिम् ।
कामदं कामदं तस्मात् पुत्रदं पुत्रदं तथा ॥
मोक्षदं मोक्षदं चापि वाञ्छितं वाञ्छितं लभेत् ।

---

१ A ईप्सितफलं । २ D वीजयन्तं । ३ B राजेसत्वं । ४ A चामलं ।
५ D फलञ्च ईप्सितं प्राप्ताः । ६ D रागद्वेषञ्च मोहादि ।
७ D फलञ्च ईप्सितं प्राप्ताः ।

यथा सुधाभिः श्वेतञ्च तथा तद्वत्फलं लभेत् ॥
सर्वेषां प्राणजातीनां चन्द्रमा इव गौरवम् ।
इति मत्वा च मानुष्याः सुधालेपं प्रकुर्वन्ति[१] ॥
दिव्यदेहाश्च ते प्राप्तास्ताथागतपदं[२] लभेत् ।
अकारमुखमन्त्रैश्च वस्त्रौपहारकं ददौ ॥
भवेयुर्देवपुत्राश्च सुधा च भोगिनः सदा ।
जलेन मण्डलं कृत्वा तस्मै ददौ पुनः पुनः ॥
राज[३]वल्लं प्रलभ्यन्ते विशेषैमर्त्त्यमण्डले ।
वितस्तिमात्रं भूमौ च पिष्ठवासैश्च[४] मण्डलम् ॥
ददौ तस्मै च ये भक्त्या सौभाग्यं लभ्यते फलम् ।
रत्नमण्डलथालिञ्च ददौ तस्मै सगौरवम् ॥
चक्रवर्त्तौ[५] भवन्ति ते सप्तरत्नैः परिवृतः ।
गजेन गजरत्नञ्च पुरुषेणापि पौरुषम् ॥
अश्वेन अश्वरत्नञ्च स्त्रीरत्नेन स्त्रीरत्नकम्[६] ।
खड्गेन खड्गरत्नञ्च चक्रेण चक्ररत्नकम्
मणिना मणिरत्नञ्च निधानेन निधानकम् ।
चन्द्रेण चन्द्रवद्भाति सूर्य्येण सूर्य्यवत्तथा ॥
एतैः रत्नैश्च सम्पूर्णं तस्मै च मण्डलं ददौ ।
पूर्वविदेह जम्बू च अपर गोड़ानिमपि[७] ॥

१ D प्रकुर्व्वंति । २ D तथागत० । ३ D राजा । ४ D विष्ठ्य० ५ D चक्रवर्त्ति । ६ D स्त्रिरत्नकं । ७ D गोड़ावलीमपि ।

उत्तर कुरु आदिञ्च उपद्वीपं चतुर्विधम्[1]।
अष्टद्वीपैश्च[2] संयुक्तं अष्टशृङ्गोपशोभितम्॥
नानारत्नैः समायुक्तं अनेकै रत्नपूरितम्।
इत्यादि रत्नैः सम्पूर्णं ददौ तस्मै मुदा पुनः॥
मेरुमिव सुसंयुक्तं मण्डलञ्च सुशोभितम्।
पञ्चरत्नमयैः कृत्वा सम्पूर्णं रत्नमण्डलम्॥
निर्य्यान्तयन्ति तस्मै ये मानुजाद्य मानवाः।
रत्नमण्डलमित्थं ये ददौ तस्मै मुदा पुनः॥
सप्तरत्नैः परिवृत्य चक्रवर्त्ती भवन्त्यसौ[3]।
अनेन च परिपूर्णं राज्यञ्च[4] प्रतिपूरकम्॥
प्राप्यते गौरवं नूनं स्फीटं पूर्णञ्च मङ्गलम्।
तस्मै यानप्रदानेन यानगामी नरो भवेत्॥
पुष्पयाने सुसंस्थित्वा ते नराः स्वर्गगामिनः।
गृहञ्चापि ददौ तस्मै धर्म्मधातु स्वयम्भुवे॥
स्वर्गगृहं प्रलभ्यन्ते देवपुत्रो भविष्यति।
प्रासादञ्च ददौ तस्मै स्वयम्भुवे मुदा पुनः॥
वैजयन्तं प्रलभ्यन्तः देवराजो भविष्यति।
विहारञ्च ददौ तस्मै मानवाश्च मुदा पुनः॥
ईप्सित[5]फलसम्प्राप्तो जिनपुत्रो भविष्यति।
सर्वज्ञाय च अर्थेन विहारञ्च कृतं ददौ॥

१ A ०द्वियं। २ A ०द्वियैः। ३ D सप्तरत्नपरिवृत्य चक्रवर्त्ति भ
४ A राज्य च। ५ D ईप्सितं।

तस्मै विहारदानस्य अप्रमेयफलं लभेत् ।
सर्वेषामपि पुण्यानां फलसङ्ख्या च विद्यते ॥
विहारकृत[१]पुण्यस्य फलसङ्ख्या न विद्यते ।
मण्डपञ्च ददौ तस्मै मनुजाश्च मुदा पुनः ॥
धवलगृहं लभ्यन्ते[२] विशेषैर्मर्त्त्यमण्डले ।
जनाश्रयं कृतं तस्मि[३]न्मानुषा मनुजादयः ॥
गृहेशो भवति चासौ देशे देशे विशेषतः ।
पुष्पार्थे च ददौ वालिं[४] तस्मै च मनुजादयः ॥
चैत्रेशो भवति सोऽपि सर्वत्र भूवनेषु च ।
भूमिञ्चापि ददौ तस्मै मानुजाः श्रद्धयान्विताः[५] ॥
भूमीशो भवति चासौ पुण्यात्मा धर्म्मसंयुतः ।
भूमिं ददौ मुदा तस्मै व्रीह्यर्थे तण्डुलस्य च ॥
सर्वेषामपि लोकानां पृथ्वीशो भवति असौ ।
गवां कोटिशतदानात् भूमिदानं तु गौरवम् ॥
तस्मात्सर्वप्रयत्नेन भूमिदानं मुदा ददौ ।
भूमिदानफलेनापि भूमिभिः परिपूरितः ॥
चतुर्वर्णानां वै मध्ये भूमीश्वरो भवत्यसौ[६] ।
इति मत्वा च मानुष्या भूमिदानं तु गौरवम् ॥
ददौ तस्मै वागीशाय स्वयम्भुवे मुदा पुनः ।
वापीकूपतड़ागादि तस्मै जलाश्रयं कृतम् ॥

---

१ B omits ०कृत० ।　२ D प्रलभ्यन्ते ।　३ D तस्मै ।
४ A वालिं ददौ पुष्पार्थे च ।　५ D श्रद्धया मुदा ।　६ D भविष्यति ।

वृषविग्राग्री भवेच्चासौ स्वर्गे च अमृतं पिवेत् ।
यथा जलेन लोकानां मनः प्रस्फुलितं कृतम् ॥
तथा तद्वत्फलं प्राप्ताः सर्वेच्च जन्मजन्मसु ।
जीर्णोद्धारञ्च पण्ठानं[1] स्वयम्भोः मनुजादयः ॥
सुन्दरा दीप्तदेहाश्च ते नराः स्वर्गगामिनः ।
शिलासोपानमित्थं ये जीर्णोद्धारं कृतं कृतम् ॥
ते नरा दिव्यदेहाश्च प्राप्ताः स्वर्गं गमिष्यति ।
तस्मै स्वयम्भुवे नित्यं प्रणामञ्च कृतं मुदा ॥
प्रणामं पौरुषत्वञ्च फलं सम्प्राप्यते ननु ।
उत्तमं शिरसा नित्यं हस्तेन मध्यमं फलम् ॥
अधमं मनसा नित्यं प्रणामस्य इदं फलम् ।
वचसा च प्रणामस्य फलञ्च विद्यते ननु[2] ॥
[नमस्कार प्रणामस्य स्वल्पफलं प्रलभ्यते ।
दूरेणापि प्रणामस्य फलञ्च विद्यते ननु ॥
आश्रमं तु प्रणामस्य बहुफलं प्रलभ्यते[3]]।
सहस्पर्श प्रणामस्य फलसङ्ख्या न विद्यते ॥
इति मत्वा च मानुष्याः प्रणामञ्च कृतं मुदा ।
जङ्गमं सुगतं णम्य फलसङ्ख्या न विद्यते ॥
बोधिसत्वप्रणामस्य ईप्सितं लभ्यते फलम् ।

१ B घण्टानां । B पश्चानं । २ C बहुफलं लभ्यते ।
३ C omits the portion bracketted.

भिक्षुश्च भिक्षुणीश्चापि श्रावकान्[1] जिनसेवकान्॥
नमस्कृत्वा प्रमोदेन बहुफलं प्रलभ्यते।
इति ज्ञात्वा च मानुष्या अत्यर्थञ्च सगौरवम्॥
तस्मै स्वयम्भुवे नित्यं प्रणामं तु कृतं मुदा।
चित्तेन ध्यावनां[2] कृत्वा वाण्या तु धारणीं पठेत्॥
हस्ताभ्यामञ्जलिं कृत्वा जानूभ्यां पृथिवीं वहेत्।
शिरसा च नमस्कृत्वा एवं पञ्चप्रणामकैः॥
दिने दिने नमस्कृत्वा केवलं देवजन्मिनः।
मानुषाश्च न जातु स्यादसुराश्च तथा अपि॥
भूताश्चापि तथा प्रेतान् तिर्य्यञ्चापि च पन्नमान्।
पञ्चगतिं न जातु स्यात् जन्मजन्मान्तरेऽपि च॥
एवं पञ्चप्रणामेन देवपुत्रो भविष्यति।
उरसा भूं स्पृशं कृत्वा मनसा ध्यावनां कृतम्॥
वचसा धारणीं पाठेल्ललाटेन पृथ्वीं स्पृशेत्।
दृष्टिभ्यां पृथिवीं स्पृष्ट्वा पद्भ्यां सम संस्थिताः॥
कराभ्यामञ्जलिं धृत्वा जानूभ्यां पृथिवीं स्पृशेत्।
अष्टाङ्गैरिति इत्थं ये नमयामासु मानुजाः॥
प्रतिदिने प्रणिपत्य अष्टाचेण[3] दुरीकृतम्।
नारकं प्रेतं तिर्य्यञ्च म्लेच्छं दीर्घायुषं मलाम्॥
मिथ्यादृक्कुद्धकान्तारं मष्टावेते वर्जितम्[4]।

१ D भिक्षुणी चापि श्रावकां। २ D ध्यावनं। ३ D अष्टाङ्गेन
४ D अववर्ज्जितं।

एकेन एकां सङ्ख्यां च शतेन शतसङ्ख्यया ॥
सहस्रेण अयुतेन लक्षकोटि तथा अपि।
इत्येवं सङ्ख्यया युक्त्या प्रणामञ्च पुनः पुनः ॥
सुगतिञ्च अनुप्राप्ताः सर्वे ते बोधिलाभिनः।
रत्नकेतोश्च धारण्या पाठेन सह नम्यते ॥
तस्मै एकप्रणामेन कोटिधा लभ्यते फलम्।
इति मत्वा च मानुष्याः पञ्च अष्टप्रणामकैः ॥
दिने दिने नमस्कृत्वा फलसङ्ख्या न विद्यते।
यावती भूमिराक्रान्ता ह्यधोकाञ्चनचक्रतः ॥
योजनानां सहस्राणि अशीत्या परिकीर्त्तिता।
यावन्तो वालुका तत्र[१] तावन्त्या परिसङ्ख्यया ॥
राजा भवति वीरेशश्चक्रवर्त्ती महीतले।
सप्तरत्नसमायुक्तः सर्वविद्याविनायकः ॥
दीनानाथसमुद्धारी चाष्टाङ्गप्रणतो ध्रुवम्।
प्रणामञ्च कृतं तस्मै नित्यञ्च मनुजादयः ॥
चक्रवर्त्ती भवेद्राजा सप्तरत्नैः परिवृतः।
द्वात्रिंशल्लक्षणैर्युक्तः नानालङ्कारभूषितः ॥
नानावस्त्रविभूषाङ्गः राजकन्यापरिवृतः।
ऋद्धिं स्फीतञ्च क्षेमञ्च सुभिक्षं परिपूरितम्[२] ॥
प्राकीर्णं परिपूर्णञ्च राज्यञ्च प्राप्यते ननु।
एवं बहुगुणं मत्वा नत्वा कायस्य भङ्गुरम् ॥

१ D स्तत्र तावत्या। २ A सुभिक्षञ्च पूरितम्।

तस्मै प्रणामात्कोविद्वान् कायिकं ह्यन्यथा चरेत्[१] ।
कस्तमननं[२]कुर्य्याच्च दूलेणापि स्वयम्भुवे ।
प्रणामञ्च करोत्यस्मै फलञ्च वाञ्छितं लभेत् ॥
बहुफलं दूरेणापि[३] असङ्ख्यं आश्रमेण तु[४] ।
संस्पर्शेन[५] प्रणामस्य फलसङ्ख्या न विद्यते ॥
इति ज्ञात्वा च मानुष्याः स्वयम्भू जगदीश्वरम्[६] ।
प्रणिपत्य प्रयोगेण सर्वकालं पुनः पुनः ॥
प्रदक्षिणां कृतं नित्यं तस्मै च मानवादयः ।
प्रदक्षिणायाः पुण्यन्तु नानाफलञ्च उक्तवान् ॥
पदोत्क्षेपेन सुवर्णकर्षदानात्फलं लभेत् ।
जाम्बूनदसुवर्णानां फलञ्च लभ्यते ननु ॥
नालस्येनापि यः कुर्य्यात् स्वयम्भुवे प्रदक्षिणाम् ।
पदे पदे सुवर्नस्य कर्षदानफलं लभेत्[७] ॥
एकवारस्त्रिवारञ्च शतं सहस्रकं तथा ।
अयुतं लक्षकोटिञ्च प्रदक्षिणां कृतं मुदा ॥
यथा यथा च सङ्ख्यास्ति तथा तथा फलं लभेत् ।
मनुजादय मानुष्या एवं फलं[८] प्रलभ्यते ॥
इत्थं प्रदक्षिणां कृत्वा ये चापि मनुजादयः ।

---

१ B तस्मै प्रणामात्को विद्वान् कायिकं ह्यन्यथा वरेत् । A भवेचरेत् ।
२ D मननं । ३ A दूलेनापि । ४ B आश्रमं न तु । ५ A संस्पर्शेन ।
६ D जगदीश्वरः । ७ A पदे पदे सुसुवर्णकर्षदाने फलं लभेत् ।
८ D फल ।

सुवर्णवर्णा[1] वज्रपौत्राः पूज्या मान्या नराधिपाः[2] ॥
वपुषा प्रदक्षिणां तस्मै मनुजाश्च कृतं मुदा ।
ईप्सितं फलसम्प्राप्ता देवपुत्रो भविष्यति ॥
पञ्चाष्टाङ्गप्रणामस्य [3]प्रदक्षिणानाञ्च तथा ।
तेषां फलस्य सङ्ख्यास्ति देहप्रदक्षिणायाः न[4] ॥
इति श्रुत्वा च मानुष्या वपुषा च पुनः पुनः ।
प्रदक्षिणां कृतं तस्मै अत्यर्थं लभ्यते फलम् ॥
नदीसमुद्रजलानां[5] विन्दुसङ्ख्या च विद्यते ।
सर्वभूमिरुहाणां पत्रसङ्ख्या च विद्यते ॥
सर्वेषां सत्वजातीनां रोमसङ्ख्या च[6] विद्यते ।
आसु मेरुपृथिवीनां रेणुसङ्ख्या च विद्यते ॥
अतीतैरपि बुद्धैश्च प्रत्युत्पन्नैरनागतैः ।
तस्मै प्रदक्षिणायापि फलं वक्तुं न शक्यते ॥
अहमप्येव एकाकि वसत[7] अत्र[8] पर्वते ।
फलं वक्तुं न शक्यामि तत्प्रदक्षिणाया अपि ॥
इत्थं प्रदक्षिणां कृत्वा ये चापि मनुजादयः ।
सुवर्णवर्णा वज्रपुत्राः[9] पूज्यमाना नराधिपाः ॥
इति मत्वा मैत्रेय तस्मै प्रदक्षिणां कुरु ।
दिने दिने प्रणिपत्य असंख्येयं फलं लभेत्[10] ॥

---

१ D स्वर्णवर्णा । २ B नराधिपौ । ३ D प्रदक्षिणां तथा खलु ।
४ D प्रदक्षिणां खलु । ५ D ०अम्बूनां । ६ A omits च ।
७ A वशत । ८ B C तत्र । ९ D ०पौत्राः । १० D असङ्ख्यफललभ्यते

बौद्धमूर्त्तिं स्वयम्भूञ्च धर्म्ममूर्त्तिं स्वयम्भुवम्।
सङ्घमूर्त्तिं स्वयम्भूञ्च तथागतस्वरूपिनम्॥
बोधिसत्त्वस्वरूपञ्च महासत्त्वस्वरूपकम्।
भिक्षूणां भिक्षुरूपञ्च सर्व्वरूपनमस्कृतम्॥
येऽपि च मानवाः सर्व्वे चिरत्नमूर्त्तिं सम्भुवम्[1]।
शरणं गच्छन्ति[2] भावेन त्रिरत्नवंशजं भवेत्॥
दशदिक्षु स्थिताः सर्व्वे बोधिसत्त्वा जिनात्मजाः।
सेवितं[3] सततं[4] सर्व्वकालं तस्मै अहर्निशम्॥
ये जनाः सर्व्वभावेन सेवितञ्च[5] स्वयम्भुवम्।
ते नराः फलसम्प्राप्ता स्वर्गगामिनः सर्व्वदा॥
मानुजाश्च सर्व्वेऽपि नमस्कृतं स्वयम्भुवम्।
ते अक्षयफलं प्राप्ताः सर्व्वत्र भुवनेष्वपि॥
शम्भूं गच्छामि शरणं यावदाबोधिमण्डतः।
श्रीशम्भूं शरणं गत्वा पञ्चमूर्त्तिं तथागतम्॥
विज्ञापयामि सम्बुद्धान्दशदिक्षु व्यवस्थितान्।
महाकारुणिकाश्चापि पञ्च ताथागतानपि॥
असङ्ख्येयेषु कल्पेषु जन्मजन्मान्तरेऽपि च।
तत्सर्व्वमशुभं कर्म्म देशयामि पुनः पुनः॥
अनागतिषु संसारे जन्मन्यत्रैव वा पुनः।
यन्मया पशुना पापं कृतं कारितमेव वा[6]॥

---

१ A शम्भूवं। २ D गच्छति। ३ A B शेवितं। ४ A B शततं।
५ A D शेवितञ्च। ६ A कृतकारितमेव वा।

यच्चानुमोदितं किञ्चिदात्मघाताय मोहतः।
तदत्ययं देशयामि पश्चात्तापेन तापितः॥
रत्नत्रयेऽपकारो यो माता पित्राथवा मया।
गुरुं अन्येन[1] वाक्षेपात्कायवाग्बुद्धिभिः कृतः॥
अनेकदोषदुष्टेन मयापि येन नायकाः।
यत्कृतं दारुणं पापं तत्सर्वं देशयाम्यहम्॥
मया बालेन मूढेन यत्किञ्चित्पापमाचितम्[2]।
प्रकृत्या यच्च सावद्यं प्रज्ञप्त्यावद्यमेव च॥
तत्सर्वं देशयाम्येष शम्भुव अग्रतः[3] स्थितः।
कृताञ्जलिदुःखभीतः[4] प्रणिपत्य पुनः पुनः॥
अत्ययमत्ययत्नेन प्रतिगृह्णन्तु नायकाः।
न भद्रकमिदन्नाथ[5] न कर्त्तव्यं पुनर्मया॥
बोधिसत्त्वैर्यदागम्यं करणीयं मयापि तत्[6]।
महासत्त्वैश्च सर्वज्ञैः यत्कृतं तत्करोम्यहम्॥
विज्ञापयाम्यहं नाथ शम्भुनाथ[7] तवाग्रतः।
तत्सर्वमत्ययार्थेन विज्ञापयामि तु पुनः॥
पापदेशनामित्यञ्च मानवाश्च कृतं मुदा।
तेषां पापान्विनश्यन्ति सर्वत्र जन्मजन्मसु॥
अपायदुःखविश्रामं सर्वसत्त्वैः कृतं शुभम्।

१ D गुरुरन्येन। २ D पापमागतः। ३ D ०मग्रतः।
४ A ०दुर्खभीतः। ५ D नाथा। ६ D यत्। ७ D नाथं शम्भूनाथं।

अनुमोदे प्रमोदे न सुखं तिष्ठन्तु दुःखिताः ॥
संसारदुःखनिर्मोचमनुमोदे शरीरिणाम् ।
बोधिसत्त्वत्वबुद्धत्वमनुमोदे च तायिनाम्[१] ॥
चित्तोत्पादसमुद्रांश्च सर्वसत्त्वसुखावहान्[२] ।
सर्वसत्त्वहिताधानाननुमोदे च शासिनाम् ॥
माता पितृगुरूणाञ्च अन्येषां सत्त्वजातिनाम् ।
पुण्यचित्तं समुत्पन्नं पशुजातीनां[३] तथा अपि ॥
पुण्यानुमोदनामित्थं कृतञ्च मनुजादयः ।
पुण्यफलञ्च सम्प्राप्तास्ते मोक्षमधिगच्छति ॥

पुण्यानुमोदनायाः ।

चतुर्दिक्षु स्थितान् बुद्धान् प्रार्थयामि[४] कृताञ्जलिः ।
धर्मप्रदीपान् कुर्वन्तु मोहाद्दुःखप्रपातिनाम् ॥

अध्येषणायाः ।

जिनान् श्रीशम्भुनाथञ्च[५] याचयामि कृताञ्जलिः ॥
कल्पाननन्तान्तिष्ठन्तु मा भूदन्धमिदं जगत् ।

याचनायाः ।

नमो बुद्धाय धर्माय सङ्घाय च स्वय
चिरन्तमूर्त्तये तस्मै आदिबुद्धस्वयम्भुवे ॥
श्रीस्वयम्भुं मे शरणं[६] रत्नत्रयस्वरूपिनम् ।

१ B चातायिनाम् । २ D चित्तात्पादं समुद्रांश्च सर्व्वसत्वसुखावहा
३ D पशुजातीं । ४ A प्रार्थयामि । ५ A omits च ।
६ D श्रीस्वयम्भूशरणा ।

सर्वप्रतिदिशामेऽस्य स्वयम्भुवे कृताञ्जलिः ॥
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ।
आबोधौ शरणं यामि स्वयम्भुं जगदीश्वरम् ॥
बोधिचित्तं करोम्येष स्वपरार्थप्रसिद्धये ।
उत्पादयामि बोधिञ्च सत्त्वान्निमन्त्रयामि वै ॥
दृष्टां चरिष्ये संबोधौ भवेऽहं सुगतो[१] गुरो ।
हिताय सर्वसत्त्वानां चरिष्येऽष्टाङ्गपोषधम् ॥
यथा तथागताः सर्वे बुद्धज्ञानेन चक्षुषा ।
यानन्ति सर्वं पश्यन्ति कुशलं जातिमूलकम्[२] ॥
यन्निकायलक्षणञ्च यत्स्वभावं तथा अपि ।
धर्मतया[३] तु विद्यन्ते अनुमोदात्कुशलाच्च वै ॥
तन्मूलं नित्यं भवति संबोधौ परिणामितम् ।
लोकस्य सुखं दुखञ्च[४] कर्त्तुं हर्त्तुं सदा भवेत् ॥
यथैव भानुना सर्वं तमः दूरीकृतं भवेत् ।
चन्द्रमसा यथैवापि प्रह्लादं जगतां कृतम् ॥
तथा दृष्ट[५]श्रुतस्मृत्या पृष्टकथा च शापतः ।
तत्सर्वं जगतां कुर्य्यां हित[६]सुखाय सर्वदा ॥

बोधिचित्तयोः ।

[७]माता पिता पितामह[८] मातुश्च[९] प्रापितामहः ।

---

१ A सुगत । २ A कुशलमूलं जातिकं । ३ A D तम्मतया ।
४ D लोकस्य च सुखं दुःखं । ५ D दृष्टिं । ६ D हितं
७ A C D बोधिचित्तः । ८ A पितामहतुश्च प्रपितामहः ।
९ D पितामहश्च प्रपितामहः ।

इत्यादि पूर्वगं गोत्रं सुखावतिं प्रगच्छत ॥
पितृव्यमातुलश्चापि श्वश्रुश्च श्वशुरस्तथा[१] ।
स्वगोत्रं स्त्रीगोत्रञ्च सुखावतिपदं तथा ।
पुत्रपुत्री पौत्राश्च सर्वेऽपत्यं तथा अपि ॥
बौद्धपुत्राश्च ते नित्यं सुवंशञ्च भविष्यति ।
ज्ञातिबन्धुसुहृन्मित्रदासदासीश्रमित्रकम् ॥
सर्वे जनाश्च लोकाश्च भवेयुर्बोधिलाभिनः ।
राजामात्याः सपौराश्च स्त्रियश्च पुरुषा अपि ॥
कर्म्मकराः प्रेषकाश्च ते सर्वे बोधिलाभिनः ।
सर्वे च पशवश्चापि तिर्य्यञ्चापि ससत्त्वजाः ॥
क्रिमि[२]कीटादयः सर्वे भवन्ति जिनपुत्रकाः ।
एवं नानाविधं तस्मै प्रार्थयन्ति पुनः पुनः ॥
ते नरा जिनपुत्रा स्युः सर्वत्र जन्मजन्मसु ।
शताचरादिभिस्तस्मै [३]चमापनमुदाहरेत् ॥
चमस्व हे शम्भुनाथ सर्वसत्त्वानुकम्पया ।
एकं शतं सहस्रञ्च लचं कोटिं तथा अपि ॥
स्वार्थेनापि परार्थेन चमापनं कृतं मुदा ।
मम पुत्रपौत्रादिषु मह्य मे चापि बान्धवे ॥
सुहृन्मित्रदासीदासराजामात्येषु पौरजे ।
लोकेषु पूर्वप्रेतेषु सर्वसत्त्वेषु च पुनः ॥

१ A D C श्वसुश्च श्वसुरस्तथा । २ D कृमि० । ३ B च्मापावनम् ।

कृपां देहि शम्भुनाथ निश्चयं करुणां कुरु ।
इत्थं क्षमापनं तस्मै पुनः पुनः करोति यः ॥
षड्भिश्च अनुप्राप्ताः सर्व्वज्ञ पदं लभेत् ।
समुद्धरन्ति निर्माल्यं येऽपि स्वयम्भुवे मुदा ॥
कुदृष्टिमुक्तादेहाश्च मोक्षप्राप्ता भवन्ति च ।
तस्यां[1] गणञ्च स्थानं ये शोधयन्तीह मानवाः ॥
रजांसि एभ्य यत्नैश्च समुद्धरन्ति च ये मुदा ।
हैमवर्णाः सुदृशास्ते पुत्रपौत्रसमन्विताः ॥
सुभगाः सुन्दरा देहाः परत्रे नाकगामिनः ।
एवं विदित्वा मानुष्या रजसादयः शोधितम् ॥
तृणं कपल्यं पाषाणं[2] दूरीकृतं पुनः पुनः ।
यथा तत्रैव शोध्यन्ति तथा तद्वत्फलं लभेत् ॥
मनुजादय मानुष्याः शुद्धगृहं प्रलभ्यते ।
दुग्धार्थं गोप्रदानञ्च तस्मै च मनुजादयः[3] ॥
कल्पवृक्षेण सादृश्यफलञ्च[4] लभ्यते ननु ।
अथ महिषीदानञ्च दध्यर्थञ्च स्वयम्भुवे ॥
वाञ्छितञ्च फलं प्राप्ताः[5] विशेषैर्मर्त्त्यमण्डले ।
त्रासार्थं दुष्टसत्त्वानां रक्षार्थञ्च स्वयम्भुवम् ॥
शस्त्रहस्ताः स्थिता ये च शम्भुभक्तिसमन्विताः ।
आयुष्मन्तो निरोगाश्च पुत्रपौत्रीसमन्विताः ॥

---

१ D तस्याः । २ B तृणां कपल्यं षाणम् । ३ A D मनुजा मुदा ४ A कल्पवृक्षे शादृश्यफलञ्च । ५ A वाञ्छितफलं संप्राप्ताः ।

१२० भोग्यवन्तो धनाढ्याश्च गच्छन्त्यन्ते शम्भ्वालयम् ।
मृदङ्गान्मुरजान्पटहान्दुन्दुभान्मण्डलानपि ॥
मुकुन्दांश्च ध्वनन्ति च डिण्डिमान् झर्झरानपि ।
कांस्यातालादिकान्तस्मै वादयन्ति च मानवाः ॥
सुन्दराः दिव्यदेहाश्च भवन्ति सर्वजन्मसु ।
काहारैश्च तथा तूर्यैः शङ्खैः शृङ्गादिभिस्तथा ॥
वंशादि घोषवाद्यैश्च[1] भेर्यादिभिः पुनः पुनः ।
घोषणां कारयामासुस्तस्मै च मानवादयः ॥
दिव्यश्रोताश्च ते जाताः सुशब्दं शृणुयुः सदा ।
भाषजैर्विविधैर्गीतैः सुमनोज्ञस्वरद्युतैः[2] ॥
नृत्यञ्च कारयन्त्येवं कुर्वन्ति च सुसुन्दरम् ।
ते नराः सुस्वरा भान्ति सुन्दरा दिवि भूतले ॥
दिव्यश्रोता महाभिज्ञाः सुशब्दं शृणुयुस्सदा[3] ।
नृत्यगीतादिकं कृत्वा स्वयम्भुवे च मानवाः ॥
वन्द्यमानाः सुगात्राश्च निष्पापाश्च बहुसुताः ।
दीर्घायुष्का बहुपुत्राः निरापदा गुणाश्रयाः ॥
ग्रहव्याधिविमुक्ताङ्गाः भवन्ति ते शुभाकराः ।
पुनः त्वं शृणु मैत्रेय तस्य स्वयम्भुवो मुदा ॥
नानोपवाससयुक्तानां फलं वक्ष्यामि तत्त्वतः ।
पूर्वस्मिन्दिवसे कृत्वा शुचिं दन्ता विशोधनम् ॥

---

१ A D घोषयावाद्यैश्च । D घोषयावाद्यैः । २ D ०स्वरैर्युतैः ।
३ D सुशब्दश्च शृणुस्सदा । A शृणुस्सदा ।

क्षुरकर्म्मादिकं स्नानं शुचिगन्धोदकैश्चरेत् ।
प्रातःस्नानं चरेन्नित्यं शुचिवस्त्रासनावृतः ॥
पञ्चगव्यैश्च संशोध्य शम्भु[1]व्रतं समाचरेत् ।
निराहारो जलाहारो शुभ[2]व्रतं समाचरेत् ॥
पञ्चगव्याशनो वापि क्षीरभोजी तथाचरेत् ।
फलमूलाशनो वापि शम्भु[3]भक्तः समाचरेत् ॥
आमिषा मधुमद्यादीन्भार्य्यास्नेहं त्यजेद्व्रती[4] ।
हीनजातं कुशीलञ्च न स्पर्शत्यापिनं तथा ॥
यथोक्तं विधिना सर्वं शम्भु[5]भक्त्या समाचरेत् ।
मानुष्यमानवाया ये उपवासं स्वयम्भुवः ॥
निश्चयं मनसि कृत्वा इत्थं नेमं कृतं ननु ।
स्वयम्भुव अनेनैव विधिनोक्तं उपोषधम् ॥
मानवा मानुष्य कृत्वा वाञ्छितं लभ्यते फलम् ।
निराहारोऽथवा तस्मै जलाहारी[6] तथैव च ॥
मासोपवासं नियतं मानवा मानवी कृतम् ।
इत्थं कृतोपवासस्य फलसङ्ख्या न विद्यते ॥
मनुजादयमानुष्याः षड्भिज्ञपद[7] लभ्यते ।
पञ्चगव्याशनो[8] यश्च क्षीरभोजी तथा अपि ॥

१ D स्वम्भु० । २ D श्वम्भ० । ३ D स्वम्भु० । ४ D व्रतिः ।
५ D स्वम्भु० । ६ D जलाहारो । ७ D षड्भिज्ञञ्च पदं ।
८ D पञ्चगव्यासनो ।

१२' [[1]उत्तमफलसंप्राप्तः[2] पञ्चाभिज्ञपदं लभेत् ।
पञ्चामृतं पिवेत्तस्मै उपोषधं कृतञ्च ये ॥
पञ्चगतिं न लभ्यन्ते केवलं देवजन्मिनः ।
फलमूलाशनो योऽपि पत्रं स्कन्दं तथा अपि ॥]
मनुजादयमानुष्य बोधिसत्त्वपदं लभेत् ।
क्षीरोदनादिभिर्भक्तैः एकभक्तं कृतं ननु ॥
[3]मध्यमं फलसंप्राप्ताः भिक्षुपदं प्रलभ्यते ।
आमिषा भार्य्या मद्यादीन्मासमेकं त्यजेच्च ये ॥
वाञ्छितं फलसंप्राप्ताः इप्सित[4]फललभ्यते ।
उपवासं कृतमित्थं मानव्य मनुजादयः ॥
स्वं स्वं वाञ्छाफलं लब्धाः स्वयम्भुवः प्रसादतः ।
जीर्णशीर्णभिदीर्णाश्च ये विदधन्ति शम्भुव[5] ॥
पूर्णकाया कलिमुक्ता[6] धर्मदेहा शरीरिणः ।
इष्टिकार्थं मृत्पिण्डञ्च इष्टिकां मृत्तिकां तथा ॥
स्वयम्भुवे ददुर्येऽपि भूमीशास्ते भवन्ति च ।
यष्टिकाजीर्ण उद्धारं कृतं तस्मै च मानवाः ॥
ब्रह्मलञ्च पदं लभ्य स्वर्गलोके विशेषतः ।
चक्रावली कृतार्थेन काष्ठं ददुः स्वयम्भुवे ॥
ते देवाश्च[7] भवन्ति वै स्वर्गलोके विशेषतः ।

---

१ B omits the portion bracketted. २ D ०संप्राप्तिः पञ्चाभिज्ञः ।
३ D मध्यमफलसम्प्राप्ताः । ४ D ईप्सितं । ५ D स्वम्भुव ।
६ D कलिर्मुक्ताः । ७ D ते देवा ।

फलिणी पट्टकादिश्च चक्रावलिं त्रयोदशम् ॥
जीर्णोद्धारं कृतं येऽपि त्रयोदशभुवनं[१] लभेत् ।
च्छत्र उद्धारणं येऽपि कृतं तस्य च मानुषाः ॥
भवन्ति लोके राजानः चक्रवर्त्तिपदं[२] लभेत् ।
विश्वमणिश्च उद्धारं कृतं येऽपि च मानवाः ॥
भवन्ति देवतास्तेऽपि तुषितेशो विशेषतः ।
च्छत्रोपरिध्वजस्यापि जीर्णोद्धारं कृतश्च[३] ये ॥
देवराजो भवन्ति ते त्रयत्रिंशे विशेषतः ।
कलेशं अङ्कनादिश्च जीर्णोद्धारं कृतं ननु ॥
सर्वत्र जन्मजन्मेषु बौद्धशिष्यो भविष्यति ।
चतुः तायागतान्तारा देह उद्धारणं कृतम् ॥
ते नराः दीप्तदेहाः स्युः सर्वज्ञत्वं फलं लभेत् ।
जाम्बूनदेन जीर्णश्च उद्धारश्च कृतं ननु ॥
असङ्ख्यफलसंप्राप्त[४] बौद्धपुत्रो भविष्यति ।
सुवर्णेन च जीर्णश्च उद्धारश्च कृतश्च ये ॥
दिव्यदेहाश्च ते प्राप्तास्त्रयत्रिंशे विशेषतः ।
रजतेन कृतं जीर्णं उद्धारश्च कृतं सुरा ॥
भूपेशो भवति राजा विशेषैर्मर्त्त्यमण्डले ।
धातुभिश्च कृतं जीर्णं उद्धारं कृतमानवाः ॥
गृहस्तेशा भवन्ति ते सर्वत्र भुवनेषु च[५] ।

---

१ D भूवनं । २ A चक्रवर्त्तीपदं । ३ A कृतं । ४ D ० संप्राप्ता ।
५ A भूवनेषु च ।

१२ इति ज्ञात्वा च मानुष्या जीर्णोद्धारं कृतं ननु ॥
ईप्सितफलसंप्राप्ता वाञ्छितं लभ्यते फलम् ।
अथापि शृणु मैत्रेय स्वयम्भूपूजनाफलम् ॥
तत्तुभ्यमहं वक्ष्यामि[१] स्वल्पमात्रफलं शुभम् ।
सर्वतीर्थाभिषेकानां गोदानञ्च प्रउत्तमम् ॥
गोदानानां सहस्राणां अश्वमेधं लभेत्फलम् ।
अश्वमेधसहस्राणां रच चैत्यमत्तथा[२] ॥
रच चैत्यसहस्राणां स्थावरचैत्यञ्च तथा[३] ।
स्थावरचैत्यसहस्राणां स्तूप[४]कृतमहत्फलम् ॥
स्तूपानाञ्च सहस्राणां धातुस्तूपमहत्फलम् ।
धातुस्तूपसहस्राणां तं शम्भूपूजन[५] फलम्
इति ज्ञात्वा च मानुष्यास्तत्पूजनं पुनः पुनः ।
इत्थं कृत्वा च मानुष्या ह्यप्रमेयफलं लभेत् ॥
यद् यद् वाञ्छितं सर्वं फलञ्च लभ्यते ननु ।
भगवन्मुनिशार्दूल पुनर्वक्तुं त्वमर्हसि ॥
तस्य स्वयम्भुवो नित्यं पूजनाया महत्फलम् ।
चिरत्नानां विशेषेण गुणं वक्ष्यामि तत्वतः ॥
एकचैत्यं प्रतिष्ठाप्य सर्वदेवप्रतिष्ठिताः[६] ।
एकचैत्यं प्रपूजेन सर्वदेवाः[७] प्रपूजिताः ॥

---

१ D वक्ष्ये । २ B लक्षचैत्यस्य सत्कथा । D ०मत्त्तथा ।
३ D लक्षचैत्यसहस्राणां स्थावरं चैत्यकं तथा । ४ D स्तूपं ।
५ A ०पूजन० । ६ D ०प्रतिष्ठितः । ७ A सर्व्वदेवाः ।

एकचैत्यं प्रसंस्कृत्य सर्वदेवाश्च संस्कृताः ॥
चैत्यबिम्बं प्रतिष्ठाप्य व्रतं दानञ्च भोजनम् ॥
यः कुर्य्याद्भक्तिसंयुक्तः[१] बोधिभाक्स भवेद्ध्रुवम् ।
सर्वपापः क्षयं याति शम्भुचैत्य[२]प्रदर्शनात् ॥
कोटिजन्मतपः पुण्यमेकशम्भु प्रणामतः ।
ये शम्भुं शरणं यान्ति न ते गच्छन्ति दुर्गतिम् ॥
प्रहाय सर्वपापानि बौद्धपदं लभन्ति ते ।
ये तु शम्भुं[३] समुद्दिश्य पुण्यं कुर्वन्त वा नवाः ॥
प्रहाय मानुषान् कायान् भवन्ति बोधिलाभिनः ।
अतीतानागतानाथैः प्रत्युत्पन्नैस्तथागतैः ॥
सर्व्वैः शिष्यैस्सहसार्द्धं तस्मै च पूजनं कृतम् ।
एतत्संक्षेपतं पुण्यं ज्ञातव्यं शम्भू[४]कर्म्मसु ।
न शक्यते जिनैः सर्वै वक्तुं सर्वं मया कथम् ॥
अतीतानागतैर्बुद्धैः प्रत्युत्पन्नैस्तथा अपि ।
तस्य स्वयम्भुवो नित्यं फलं वक्तुं न शक्यते ॥
अहमचैव[५] एकाकी गोपुच्छपर्वते वशन् ।
श्रीस्वयम्भुवोऽपि सर्वं न शक्यामि वक्तुं फलम्
इति मत्वा च मैत्रेय यूयञ्च मानवादयः ।
तस्य स्वयम्भुवो नित्यं सेवां[६] कृतं पुनः पुनः ॥

१ A ०संयुतः ।    २ D सम्भुचैत्यं ।    ३ A शम्भूं ।    ४ D सम्भु० ।
५ D अहमैत्रेय ।    ६ A शेवां ।

१२ अथ तस्य वचः श्रुत्वा शाक्यसिंहो[१] जगद्गुरोः ।
सर्वेषां पर्षदानाञ्च चेतांसि सुस्थितं[२] भवेत् ॥
भवन्ति विपुलालक्ष्मी पूज्यमानो नृपाद्यैः[३]
दिविभुवि[४]सुजनैस्तैर्देवसङ्घैर्महद्भिः ।
कुमुदशशिनिभाभो भोजमध्येषु संस्थः
तमनुमनिभयं ये श्रावयेच्छम्भुपूज्यम् ॥
इत्यादिष्टं मुनीन्द्रेण श्रुत्वा सर्वे सभाश्रिताः ।
लोकास्तथेति विज्ञप्य प्राभ्यनन्दन्[५] प्रबोधिताः ॥
इति मे गुरुणादिष्टं श्रुतं मया तथोच्यते ।
त्वमप्येव सदा राजन् भज तत्र जिनालये ॥
एतत्पुण्येन ते भद्रन्निरुत्पातं सदा भवेत् ।
बोधिचित्तञ्च सम्प्राप्य बोधिसत्त्व भवेदपि ॥
ततः सम्बोधिसम्भारं पूरयित्वा यथाक्रमम् ।
मारान्निर्ज्जित्य सम्बोधिं प्राप्य बुद्धपदं लभेत् ॥
[६]इति शास्त्राहृतादिष्टं निशम्य स नराधिपः ।
अशोकः ससभालोकाः प्राभ्यनन्दन्[७] प्रबोधिताः ॥
[८][अथाशोको महीपालः साञ्जलिः[९] पुनराश्रितः[१०] ।

---

१ A शाक्यसिंह । २ B C फुल्लितम् । D स्फुल्लितं ।
३ A न्टपोघैः । ४ A भूवि । ५ D प्राभ्यनन्द ।
६ D इति शास्त्रासमादिष्टं निसंम्य । ७ D प्राभ्यनन्द ।
८ B omits the portion bracketted. ९ D शाञ्जलिः ।
१० A पुररास्त्रितः ।

तमर्हन्तं यतिन्नत्वा प्रार्थये[1] देवमादरात् ॥
भदन्त श्रोतुमिच्छामि स्वयम्भूत[2] स सत्कथाम्।
तत्सम्यक् समुपादिश्य सम्बोधयतु नो भवान् ॥
इति सम्प्रार्थिते राज्ञा सोऽर्हन्यति महामतिः।
उपगुप्तो नरेन्द्रन्तं सम्पश्यन्नेवमादिशत् ॥
साधु श्टणु महाराजन् यथा मे गुरुणोदितम्।
तथाहन्ते प्रवच्यामि सर्वलोकाभिबोधने ॥]

इति श्रीमति बृहत्स्वयम्भूपुराणे गोश्टङ्गपर्वते स्वयम्भूचैत्यभट्टारकोद्देशे पूजाफलवर्णनोनाम द्वितीयोऽध्यायः ॥

१ D प्रार्थयदेवं। २ D स्वयम्भुवं

१२

# तृतीयोऽध्यायः ।

अथ प्रोवाच मैत्रेय भगवन्तं गुणोदधिम् ।
यदेव भगवानाह तदेव ब्रूहि साम्प्रतम् ॥
मयि कृपामनुकम्पां लोकानां पुण्यवृद्धये ।
सर्वेषामपि सत्त्वानां त्राणाय शुभकारिणे ॥
अपुण्यानां पुण्यार्थाय अहितानां हिताय च ।
असौख्यानां सुसौख्याय[1] अमोक्षाणां मोक्षप्राप्तये[2] ॥
पापीनां पुण्यचित्ताय दुःशीलानां सुशीलिने[3] ।
अधर्म्माणां सधर्म्माय अगुणीनां गुणाप्तये[4] ॥
अन्धानां दृष्टये नित्यं मूकानां वाचनाय च ।
बधिराणां श्रुतार्थाय मन्दानां बुद्धये[5] अपि ॥
कुब्जानां ऋजु अर्थाय[6] पङ्गुणाञ्च[7] अपङ्गवे ।
आतुराणां निरोगाय असमर्थानां समर्थये[8] ॥
अधनानां धनार्थाय अज्ञानानां ज्ञानप्राप्तये[9] ।
अपुत्राणां सपुत्राय अपौत्रिणां तथा अपि ॥

---

१ A सुभिक्षाय । २ B मोक्षाय च । ३ B सुशीलने ।
४ B गुणप्राप्तये । ५ B बोधये । ६ B कुब्जाय ।
७ B पङ्गवानाम् । ८ B समर्थिने । ९ C मन्दानां बुद्धये अपि ।

अदासानां सदासाय अदासीनामपि तथा ।
अभार्य्याणां सभार्य्याय अमित्राणां सुमित्रिने[१] ॥
अवंशानां सवंशाय अबान्धवानां बन्धुवे[२] ।
अमोचाणां समोचाय अगुरूणां गुरवे अपि ॥
अराजानां सराजाय अद्वीपानां सद्वीपिने ।
अराज्यानां सराज्याय मह्यमर्थन्न हि गुरो ॥
सर्व्वेषामपि सत्त्वानां सर्व्वेषामपि प्राणिनाम् ।
तीर्य्यञ्चापि पशूनाञ्च हितार्थाय कुरु गुरो ॥
दयाक्रपां पुरस्कृत्य[३] देशयिष्यसि साम्प्रतम् ।
शम्भुनाथोपदेशञ्च देहि मह्यं गुरो पुनः ॥
कस्मिन्नवसरे नाथ नेपालोऽयं ह्रदस्थितः ।
समन्ताच्च परिवृत्त्य कालैश्च पर्व्वतैर्नंनु[४] ॥
पूर्वाञ्च पश्चिमान्तं तु दक्षिणादुत्तरं तथा ।
सप्तक्रोशञ्च आयामं व्यायामञ्च तथा अपि ॥
नानागुणविभूषाङ्गं त्रैलोक्येऽपि सुदुर्ल्लभम्[५] ।
वरुणादय नागेन्द्राः वासितं तत्र सर्व्वदा ॥
त्रयत्रिभिः कोटिनागैः नागलोकाः समागताः ।
तत्र स्थिताः सदा नित्यं तस्मादन्य न गच्छताः[६] ॥
नागराजादयो[७] नागाः विस्मृताश्च स्वभूवनम् ।

---

१ A अमित्रां सुमित्राय । २ B सबान्धवे ।
३ A दयाक्रपामपुरस्कृत्य । ४ D पर्व्वतै ननु । ५ A सुदुल्लभं ।
६ B तस्मादन्यं न गमिता । ७ A नागराजादय ।

१२ स्वयम्भुवः प्रभावेन स्वभुवनञ्च विस्तृतम् ॥
अष्टाङ्गोपेतशलिलैः तद्ध्रदस्य समन्ततः ।
पूरितं विविधं नूनं समन्ततः सुशोभितम् ॥
जलजैः जलजैः पूर्णं अण्डजैः अण्डजैरपि ।
खगजैः खगजैर्वापि पूरितं पूरितं ह्रदः ॥
इत्यादि गुणसंयुक्ते कालीह्रदे विचित्रके ।
तं शम्भुं सर्वथा दृष्ट्वा भूमयञ्च कृतं ननु[1] ॥
[केन च कारणेनापि केनार्थं च कृतं ननु][2] ।
केन च शासिना अत्र केनेत्थं भूमयं कृतम् ॥
केन राज्यादि सम्पूर्णं केन तत्र प्रस्थापितम्[3] ।
केन राज्यं कृतं तत्र केन संस्थापितं प्रजाः ॥
कस्य तथागतस्यापि काले इत्यञ्च भूमयम् ।
तद्ध्रदस्य समन्ताच्च जलञ्च शोषितं ननु ॥
नगरं निगमं ग्रामं[4] राजधान्यञ्च राष्ट्रकम् ।
जनपदादिसंकीर्णं नानादेशैश्च[5] पूरितं ॥
ऋद्धं[6] स्फीतञ्च क्षेमञ्च सुभिक्षं नगर[7] अपि ।
आकीर्णजनमानुष्यं समन्ततः सुपूरितम् ॥
त्रयोविंशति नाकेशाः स्वर्गानां भुवने स्थिताः ।
ते देवाश्च सदा स्थिला[8] पूजिताश्च स्वयम्भुवम् ॥

---

१ A D ननुः । २ B omits this line. ३ B प्रयापितम् ।
४ B ग्रामं निगमम् । ५ A D ०देशश्च । ६ D ऋद्धिं ।
७ D मङ्गलमपि । ८ D ते देवाश्च स्थिता सत्वा ।

चतुर्वर्गादय[1] येऽपि मानुषा दूरतस्थिताः ।
वन्दनाञ्च प्रकुर्वन्ति तस्मै स्वयम्भुवे[2] मुदा ॥
पञ्चदशादिभुवनाः सत्वास्च नारका अपि ।
ते सर्वदा स्वयम्भुं च सुमनाञ्च कृतं कृतम् ॥
अगाढं जलपूर्णञ्च कालीह्रद विचित्रकम् ।
केनेत्थं भूमयं कृत्वा राज्यादयः प्रथापितम्[3] ॥
नाम्नातं नागवासोऽयं जातोऽभूत्कस्य शासने ।
कस्य काले भवत्तत्र ग्रामादिकमशेषतम् ॥
तथागतस्य सकलं वद मे वदताम्बरः ।
तत्सर्वं सर्वथा ब्रूहि शीघ्रं नाथ दयाङ्कुरु ॥
कृपां मयि अनुकम्प[4] सत्वानां पुण्यवृद्धये ।
मोक्षाय च सुभिक्षाय सर्वेषां च हिताय च ॥
कालज्ञो[5] समयज्ञस्च भगवन्[6]मुनिनायकः ॥
तत्सर्वं सर्वथा ब्रूहि लोकानां हितकाम्यया ।
कृपां देहि दयानाथ कुरुष्व साम्प्रतं ननु ॥
सर्वसत्वानुकम्पार्थं मय्यपि[7] च दयाङ्कुरु[8] ।
एवमुक्ते च मैत्रेय भगवान् प्रत्युदाहरत् ॥
कालज्ञः समयज्ञस्च सोऽयं सौद्धोदनी[9] मुनिः ॥
सर्वज्ञस्च जगन्नाथः सर्वविच्च जगद्गुरुः ।

---

१ D चतुर्व्वर्गादये । २ D स्वयम्भुवं । ३ D प्रस्थापितं ।
४ B अनुन्यस्य । ५ A D कालज्ञ । ६ D भगवान् ।
७ B मयीपि च । ८ D कुरुः । ९ D सौद्धोदनं ।

देवासुरमनुष्याणां परमार्थतत्त्वविद्गुरुः॥
१२ नानार्थयुक्त मैत्रेय तत्प्रभावञ्च साम्प्रतम्।
शृणु साधु च सुष्ठु च निश्चयं मनसि कुरु॥
यथैव च त्वया उक्तं तथैव साम्प्रतं ननु।
वाचयामि च[१] भावेन सत्वानां हितकर्म्मया[२]॥
लोकानां वृद्धये पुण्यं धर्म्माय पापकारिणाम्[३]।
धर्म्मार्थीनां[४] च मोक्षाय प्राप्तये मौक्तिनां पदम्[५]॥
अपुण्यानां सपुण्याय अधर्म्माणां सधर्म्मिने।
अकृताणां[६] कृतार्थाय कृतानां फलप्राप्तये॥
अमनस्विनां मनसे मनस्विनां कृताय च।
कृतानां वीजोत्पन्नानां फलवृद्धि फलाप्तये[७]॥
फलानाञ्च सुभोग्याय भोग्यानां मोक्षप्राप्तये।
मोक्षाणां बोधिवीजाय बोधिनां ज्ञानप्राप्तये॥

अपिच शृणु—

लोकानां वृद्धये पुण्य धर्म्माय पापकारिणाम्[८]।
धर्म्मात्मानां समोक्षाय प्राप्तये मुक्तिनां पदम्॥
अनाथानां सनाथाय अत्राणानां त्राणाय च[९]।
अगुरूणां सगुरवे[१०] अराजानां राजाय च॥

---

१ B वाचयिष्यामि। २ D ०काम्यया। ३ A कारिणां। D कारकारिणाम्। ४ B धर्म्मात्मानाम्। ५ D मुक्तिनां प्रदं। ६ B अकृतार्थानाम्। ७ B अफलानां फलाय च। ८ B अपि च मैत्रेय लोकानां पुण्यवृद्धये। ९ D अत्राणां त्राणनाय च। १० B अगुरवे। D सद्गुरवे।

अस्थानानां सस्थानाय अस्वामिकानां[१] स्वामिने ।
[२][अराज्यानां सराज्याय सपुत्राणां सपुत्रये ।
अपुत्रीणां सपुत्रौ च अवंशानां सवंशिने ॥
अप्रजानां प्रजार्थाय अश्वामीनां सश्वामीने ।]
अस्त्रीणाञ्च सपत्न्यै च अधनानां सधनाय च ॥
अगुणीनां सद्गुणये अज्ञानानां सुज्ञानये[३] ।
अमित्राणां समित्राय अदासीनां सदासिने ।
अदासानां सदासाय तत्वविन्मैत्रेय शृणु ॥
अस्मिन्काले च मैत्रेय नेपालमण्डले भुवि[४] ।
कालीहृदे च विख्याते सहस्रदलपङ्कजे ॥
नानारत्नसुसंयुक्ते नानामणिविचित्रके ।
नानागुणविभूषाङ्गे नानालक्ष्मीभि पूरिते ॥
श्रीस्वयम्भुं जगन्नाथं ज्योतिरूपं सरूपकम् ।
सहस्रसूर्य्यादधिकं तेजैश्च परिपूरितम् ॥
स्वयं उत्पन्ननाथञ्च[५] कालीहृदे विचित्रके ।
विश्वकर्म्मादिभिर्देवैः कृतिमञ्च नहि पुनः ॥
स्वर्गजैर्मर्त्यजैः सर्वैः तस्य पातालजैरपि[६] ।
शिवाञ्चकारयामासुः दूरेनाप्यत्रमण्डले[७] ॥

---

१ B अस्वामीनां । २ B has these three additional lines.
३ D अज्ञानाञ्चापि ज्ञानये । ४ B अयं नेपालमण्डले ।
५ B स्वयम्भुवं जगन्नाथं । C स्वयम्भू । ६ A पातारजैरपि
७ A दूरेणापात्रमण्डले ।

१२ तद्ध्रदस्य समन्ताच्च सर्वकालेषु[1] संस्थिताः।
नाकजा मर्त्यजा लोकाः पातालजा अपि पुनः॥
दूरेण सर्वभावेन वन्दिता पूजिता सदा।
प्रतिदिने प्रतिक्षणं तच्छेवायां[2] परा ययुः॥

अपि च।

धृतराष्ट्रो विरूढकः विरूपाक्षः वैश्रवणश्च वै[3]।
गन्धर्वैः कुम्भाण्डैर्वापि नागैर्यक्षैस्तथा अपि॥
इत्थं चत्वार राजानः स्वस्वगणैः परिवृताः।
वासितं[4] सर्वकालञ्च स्वयम्भोः लक्षणाय च॥
इन्द्र यमश्च वरुणः कुवेरश्च तथा अपि।
अग्निनैऋत्य वायुश्च ईशानश्च अपि तथा[5]॥
अध ऊर्द्धं दशभिश्च दिग्भिः[6] पुनः तथा।
स्वस्वगणैस्समावृत्य तस्य लक्षाक्षतं परः॥
त्रयत्रिंशेश्वरो राजा अप्सराभिः परिवृतम्।
अनेकैः[7] पूज्ययोग्यैश्च पूजितं च स्वयम्भुवम्॥
यामेशो यामजा[8] देवाः तुषितेशः तुषित[9] अपि।
निर्माणरतयः चेशः वशवर्त्तयश्च तथा॥
ब्रह्मकायिका ईशश्च[10] ब्रह्मपुरोहिता अपि।
महाब्रह्मा ब्रह्मेशश्च[11] परीत्ताभाः स ईश्वराः॥

---

१ B सर्वे नीलेषु D सर्व्वतीरेषु। २ D च। ३ B घृतपुरिः
४ D वाम्रितं। ५ D तथा अपि। ६ D दिग्भिश्च।
७ B अनेगैः। ८ A D यामये। ९ B तुषितजाः D तुषिता।
१० B D ब्रह्मका ईशश्च। ११ D महाब्रह्मा च ब्रह्मेशु।

अप्रमाणाभाः ईशश्च आभास्वराः सईश्वराः।
परीत्तशुभाः सईशाः[१] अप्रमाणशुभास्तथा॥
शुभकृत्स्नाः कृत्स्नेशश्च अनभ्रकाः सईश्वराः।
पुण्यप्रसवाश्चेशश्च वृहत्फला तथा अपि॥
अवृहा अवृहेशश्च अतपाः सातवेश्वराः।
सुदृशाः सुदृशेशोऽपि सुदर्शना दर्शनेश्वराः॥
अकनिष्ठा कनिष्ठेशः इत्थं स्वर्गलोकजा अपि॥
त्रयो[२]विंशतिलोकानां देवास्तत्र[३] सदा स्थिताः।
श्रीस्वयम्भुव रक्षार्थं[४] पूजार्थञ्च पुनः पुनः॥
स्वभुवनादि अन्यस्मिन्नगच्छन्ति च कुत्रचित्॥
पूर्वविदेहां जम्बुञ्च[५] अपरगोड़ावनी तथा[६]।
उत्तर[७]कुरुमादि च उपद्वीपं चतुर्षु च॥
ये वसन्ति च अष्टासु मर्त्त्यजा मानुषादयः।
प्रयाताः[८] आयाताः सर्वे स्वयम्भुं दर्शनाय च॥
सर्वे[९] देवाश्च मानुष्या स्थित्वा ह्रदसमन्ततः।
पुष्पैर्धूपैश्च दीपैश्च दूरेणापि च पूजितम्॥
प्रतिदिने समायाताः पूज्यं वन्द्यं कृतं ननु।
स्नात्वा स्नात्वा शुचिं कृत्वा प्रयाताश्च पुनः पुनः॥
इति सर्वे च मानुष्याः देवा अपि पुनः पुनः।

---

१ C परीत्ताभाः स ईशाय। २ A त्रय०। ३ A देवान्तत्र।
४ A लक्षार्थम्। ५ D ज्येष्ठञ्च A जंष्ठंच। ६ A गोदानीन्तथा
७ D उत्तरे। ८ A D प्रजायताः। ९ D सर्व्वे०।

यात्रां प्रतिदिने कृत्वा[१] स्वभुवनं ययुः पुनः॥
देवपुत्रद्वयोर्मध्ये एकोऽस्ति[२] च मानुषम्।
द्वयोर्मानुष्ययोर्मध्ये एकमस्ति च देवताम्॥
प्रतिदिने सुसम्पूर्णं यात्रा[३]महं कृतं ननु।
सर्वदेवाश्च मानुष्याः सर्वकालमहं कृतम्॥
इत्थं मानुष्यैर्देवैश्च[४] मिश्रितं संस्थितं सदा।
स्वयम्भुवः प्रभावेन तत्रायांतु नरदुःखकम्[५]॥
सदा सदा समायाताः प्रयाताश्च सदा सदा।
दिने दिने अनेनैवं यात्रया[६] च सुपूरितम्[७]॥
मृदङ्गवादितं कैश्चित् कैश्चिद्दुन्दुभिवादितम्।
पटहं वादितं कैश्चित् वीणाञ्च वादितं तथा॥
घण्टञ्च वादितं कैश्चित् कांशजं वादितं तथा।
टक्का च वादितं कैश्चित् मण्डलं वादितं अपि।
ध्वनञ्च[८] वादितं कैश्चित् मर्दुञ्च[९] डिण्डिमं अपि॥
झर्झलं वादितं कैश्चित् समायाताः दिश दशात्।
जन्तुशृङ्ग[१०] शङ्खं कैश्चित् तूर्य्यं काहालकं अपि॥
भेरिञ्च घोषणां कृत्वा सर्व[११]लोकाः समागताः।
कैश्चित् गीतञ्च गानञ्चोत्साहं कृत्वा प्रतिदिने॥

---

१ A D प्रतिदिने जात्रा कृत्वा। २ A एकास्ति। ३ A जात्रां।
४ D मानुष्यदेवैश्च। ५ D तत्रायान्ति न दुःखकं B यान्ति च दुःखकम्।
६ A जात्रया। ७ B पुरितम्। ८ B धनञ्च। ९ B मद्दुञ्च A मद्दुञ्च।
१० A D जनाशृङ्गं। ११ D सर्व्वे।

दशदिशः समायाता यतिश्च पुरुषा अपि॥
शिखिनः चापि कालेऽस्मिं कालीह्रदे विचित्रके।
इत्थं देवाश्च मानुष्याः उत्साहं कृत्वा प्रतिदिने[1]॥
[2][दशदिशः समायाता च कृतं ननु॥]
प्रति अह्नि प्रतिमासे प्रतिवर्षे पुनः पुनः।
स्वयम्भुवः सार्वकालं यात्रा[3]महं कृतं ननु॥
नारकापि च सर्वेऽथ प्रतिदिने मुदा पुनः।
श्रीस्वयम्भुं जगन्नाथं श्रमणाच्च[4] कृतं कृतम्॥
तथापि च।
संजीवजाः कालसूत्रां[5] सङ्घाता रौरवा अपि।
महारौरवाः तपनाः प्रतापना अवीचिकाः।
अबुदा[6] अटटाश्चापि हहवा ऊऊवास्तथा।
उत्पलाश्चापि पद्माश्च महापद्मा अपि तथा॥
इत्यादि पञ्चदशजाः नारका दुःखभागिनः।
प्रतिदिने अुसेस्मणा[7] कृत्वा तस्मै स्वयम्भुवे मुदा॥
नमो बुद्धाय धर्माय सङ्घाय शरणं[8] सदा।
नारका शरीरां त्यक्ता[9] सुखावतिं[10] गतिं लभेत्॥
मैत्रेय भूतपूर्वेत्थं कल्पेऽस्मिं भद्रसंज्ञके।

---

१ B D उत्साहं च कृतं ननु। २ B D omit this line.
३ A जात्रां। ४ B सुमनाच्च। ५ D ०सूत्रां। ६ D अर्व्वुदाः।
७ D अुस्मणां। सुश्रुषणां? ८ D सरणं। ९ A नाकशरिनान्त्यस्का।
D नाकां शरिरान्त्यक्ता। १० B सुखावती।

निर्वाणे शिखिने बुद्धे दीर्घकाले गते सती ॥
सहस्रषष्टिवर्षेऽस्मिं प्रजामायुषिस्थितौ[१] ।
नोपमायां तदा आसात्कश्चिद्विख्यातपार्थिवः ॥
[२][राज्यञ्चकारयामस स धर्म्मपत्निना सह ।
ऋद्धं स्फीतञ्च क्षेमञ्च आकीर्णजनपूरितम् ॥
बहुमानुष्यसम्पूर्णं सर्वमङ्गलपूरितम् ।
इति उपद्रवाद्दोपञ्च न विज्ञातं च राष्ट्रकम् ॥
सुखदुःखं अभूत्तस्य प्रजानाञ्च तथा अपि ।]
*धर्म्मात्मा गुणवान् विज्ञः कालज्ञः[३] नेमसंयुतः ॥
दयावान्पुण्यवान्विद्वान् सप्तरत्नैः सुसंयुतः* ।
एकपुत्रमिव[४] पितरौ कृतं राज्यञ्च निश्चयं ॥
*तस्य धर्म्मावती पत्नी पुण्यवती सुमङ्गली ।
*स्त्रीलक्षणविभूषाङ्गी स्त्रीरत्नशादृशी सती ॥
*दुःखं सुखं अभूद्यस्य तस्यापि च तथा अभूत् ।
*यथा यस्या अभूद्दापि प्रजानाञ्च तथा अपि[५] ॥
तस्य पुत्र अभूज्जातः सर्वलक्षणमण्डितः ।
द्वात्रिंशल्लक्षणैर्युक्तः अशीतिव्यञ्जनैर्वृतः ॥

---

१ B प्रजानामायुषस्थितौ । D प्रजानां । २ B inserts the portion bracketted after the verse धर्म्मात्मा &c.

३ D कारज्ञः । ४ B एकपुत्रिव । ५ A प्रजानां तथाभवन् । B प्रजानां तत् तथाभवत् । * D repeats two verses तस्य धर्म्मावती पत्नी &c. with the change अपि into भवत् in the repetition.

ब्रह्मविष्णुशिवशक्रैः पूजितः पादपङ्कजे ।
दशभिर्लोकपालैश्च इन्द्रादिचिदशैर्गणैः ॥
कामाचलैश्च सर्वैश्च रूपाचलैस्तथा अपि ।
आरूप्यावचलैः सर्वैः तस्य सेवां कृतं सदा ॥
इत्येवं गुणभूषाङ्गी राज्यञ्च गौरवं ननु ।
बहुस्त्रीभिश्च सम्पूर्णं सर्वलोकैः सुपूरितम् ॥
इत्थं च माङ्गल्यैर्युक्तं राज्यञ्च परिपूर्णकम् ।
गृहं राज्यं परित्यज्य शालमूले प्रविशतु[१] ॥
शालमूले प्रविशित्वा[२] वज्रपर्य्यङ्कसंस्थितः ।
कायवाक्चित्तयुक्तेन समाधि[३]विग्रहं दधौ ॥
देवासुरमनुष्याणां सम्बोधिगुरु[४]नायकः ।
विश्वभूर्मुनिराख्यातं[५] त्रैलोक्यानां अपि गुरुः ॥
सत्यवाक्यानामग्रोऽसौ[६] विश्वभूं मुनिपुङ्गवः ।
निश्चिन्तमनसि ध्यात्वा संबोधिज्ञानमाप्नुयात् ॥
सम्यक् सम्बोधिचित्तं[७] च प्राप्तः[८] सोऽयं मुनिगुरुः ।
देवासुरमनुष्याणां शास्ता च लोकनायकः ॥
सर्वज्ञः सर्वविन्नाथः सर्वसत्वः जगद्गुरुः ।
नारकानां हितार्थाय विशेषलोकनायकः ॥
सस्वर्गानां समर्त्यानां नारकानां तथा अपि ।

---

१ B प्रविशति, D प्रवेशतु । २ D प्रविश्यत्वा । ३ B समाधिं । ४ B ०गुणा० । ५ B विश्वभूमुनिराख्यातः । ६ B सत्यलोकानामग्रोऽसौ । ७ B C ०रित्थं । ८ B D प्राप्त ।

तीर्थ्यञ्च पशुजातीनां तेषां शास्ता च नायकः ॥
अपुण्यानां सुपुण्याय पुण्यानां प्राप्तये फलम् ।
फलीनां[१] मोक्षप्राप्ताय मोक्षिनां[२] परमं पदम् ॥
ईदृशै[३]गुणभूषाङ्गः विश्वभूमुनिनायकः ।
स्वेच्छया सर्वभावेन सत्वोद्धार गुरुः[४] मुनिः ॥
नामेन चापि राज्येन धर्म्मेण च धनेन च ।
नेमेनापि च भावेन[५] ज्ञानेन च बलेन च ॥
पर्वताख्योऽपि राजोऽहं बोधिसत्व भवामि च ।
शिष्यञ्च[६] कारयामास कालेऽस्मिं तस्य पूजते[७] ॥
गुरुपूजा कृतन्तेन[८] सत्कृतो मानितोऽर्च्चितः[९] ।
पिण्डपात्रादिदानेन विश्वभोः पूजनं कृतम् ॥
बोधिसत्वो महासत्वः भिक्षुणी भिक्षुभ्य अपि[१०] ।
[११]सशिष्येभ्यस्य सर्व्वेभ्य[१२] संशेवां च कृतं भवेत् ॥
चीवरपिण्डपात्रादिभैषज्यशयनाशनैः ।
विश्वभुं मुनि आदिं[१३] च तच्छिष्येभ्यस्य सर्वदा ॥
सेवां[१४] च कारयामास सशिष्येभ्यः[१५] पुनः पुनः ।
प्रतिदिनं सार्वकालं मान्यं[१६] पूजां कृतं भवेत् ॥

---

१ A D फलानां । २ D मोक्षानां । ३ D ईदृशै० । ४ B कृतो ।
५ A C नेमेनापि भावेन B नेमेन च भावेन । ६ B शिष्यं ।
७ D पूजिते । ८ B कृतस्तेन । ९ D गुरुपूजाकृतेऽन्ते च नमस्कृतार्च्चमानितः ।
१० D भिक्षुभ्यः भिक्षुणी अपि । ११ D सशिष्येभ्यस्य संशेवां च कृतं भवेत खलुस्तया । १२ A C omit सर्व्वेभ्यः । १३ B मुनिमादिञ्च ।
१४ B शेवां । १५ D adds च । १६ B मान्य ।

तच्छ्रुत्वा शास्त्रयम्भोश्च प्रभावं च मया श्रुतम्।
दर्शनपूजनयोश्च[1] फलञ्च[2] अधिकं श्रुतम्॥
दर्शनं सर्वभावेन विश्वभोश्च प्रसादतः[3]।
श्रीस्वयम्भुं जगन्नाथं[4] दर्शयामि मुदा च वै॥
इति सर्वं च मैत्रेय धर्म्मधातोः स्वयम्भुवोः[5]।
महिमां च प्रभावं च वक्ष्यामि[6] तत्त्वतः शृणुः॥

अपि तु

विश्वभूर्गच्छति यत्र सर्वैः शिष्यैः परिवृतः।
तत्पृष्ठतश्च तदाहं[7] गच्छामि सर्वत्र[8] मुदा॥
विश्वभु[9]नायक काले तस्मिं नेपालमण्डले।
आगतोऽहं गुरोः पृष्ठः स्वयम्भू दर्शनाय[10] च॥
श्रीस्वयम्भुं जगन्नाथं मया[11] दृष्ट्वा मुदा पुनः।
विश्वभोश्च प्रसादेन तस्य सेवां कृतं भवेत्॥
सद्गुरुं शम्भु[12]नाथञ्च पूजयामि सगौरवम्।
वन्दयिष्यामि भावेन स्तोत्रयामि च सर्वदा॥
बोधिसत्त्व महासत्त्व भिक्षुभिक्षूणीणां[13] अपि।
उपाशको[14]पाशिकानां सर्वेषाञ्च हिताय च॥

---

१ A D ०पूजनेनायाश्च। D omits च। २ A omits च। ३ B प्रशादतः।
४ B नाथनाथं दर्शयामि मुदाय वै। ५ B स्वयम्भुवे। ६ D वक्षामि।
७ B तत्राहं गच्छामि सर्व्वदा। ८ D सर्व्वतस्सदा। ९ B विश्वभूं।
१० D दर्शये ततः। ११ B यमं। १२ D सम्भु०।
१३ A D ०भिक्षुणामपि। १४ D उपासक०।

सुखाय च समोचाय देशयिष्यति साम्प्रतम् ।
तस्य स्वयम्भूनाथस्य महिमां उपदेशकम् ॥
श्रीस्वयम्भूं देवनाथं[१] पूजितं मानवादयः ।
तस्मिं ह्रदे च ये स्नात्वा सुखावतिपदं लभेत् ॥
सर्वेषामपि तीर्थानां गङ्गायापि सगौरवम्[२] ।
मन्दाकिन्या अपि[३] चासौ[४] सर्वत्र भुवनेष्वपि ॥
त्रिसाहस्रे महालोके त्रैलोक्येऽपि विशेषतः ।
तद्ध्रदेन शादृश्यं सर्वतीर्थानां च नहि ॥
इति मत्वा च सर्वेऽपि देवासुरनरादयः ।
प्रतिदिने प्रतिस्नात्वा[५] तस्य सेवां[६] कृतं भवेत् ॥
सर्वेषामपि सत्वानां कलिमलविनाशनम्[७] ।
तस्मिं च स्नानपुण्येन सर्वपापदूरीकृतम् ॥
दशा[८] कुशलजं पापं दूरीकृतं पुनर्भवेत् ।
दश[९]कुशलजं पुण्यं फलञ्च लभ्यते ननु ॥
[१०]आपञ्च पूर्वजन्मानां अपरं पञ्चजन्मनाम् ।
दशानामित्थं जन्मानां[११] पाप दूरीकृतं ननु ॥
इति मत्वा च मानुष्याः देवा दैत्या अपि तथा ।
स्नात्वा स्नात्वा शुचिं कृत्वा भक्त्या प्रतिदिने गताः[१२] ॥

---

१ B जगन्नाथम् । २ B सुगौरवं । ३ B मण्डाकिन्याश्चापि । ४ D वासौ ।
५ B विधिस्नात्वा । ६ A शैवां । ७ B कलीमलविनासनं । ८ A दशां ।
९ A दशां । १०·B आ पञ्च पूर्व्वजन्मानां आपञ्च परजन्मनाम् ।
११ B जन्मनां । १२ A omits भक्त्या । B प्रतिदिने गता इतम् ।

इत्थं सर्वत्र मानुष्याः गुरुणा सह सङ्गमाः[१] ।
तच्छ्रेत्रां च मुदा कृत्वा अन्यत्रेत्रं[२] गमिष्यति ॥
क्वचित्स्वक्षेत्रं गत्वाच अन्यक्षेत्रं[३] क्वचित् गताः ।
क्वचित् स्थित्वाचगुरुणा क्वचित्तत्र सदास्थिताः ॥
स्थविरादिभिः[४] शिष्यैश्च बोधिसत्वगणैरपि ।
भिक्षुभिः भिक्षुणीभिश्च उपासकोपासकैः[५] ॥
चैरकैश्चैरकाभिश्च[६] सशिष्यैश्च पुनः मुदा ।
राजामात्यसपौरैश्च अनेकैर्जिनसेवकैः ॥
श्रावकैः जिनशिष्यैश्च सार्द्धं तत्रागत गुरुः ।
अनेकैर्देवनागैश्च यचकिन्नरनायकैः ॥
एतैः कस्मिंद्दिनं[७] वापि तत्र स्थित्वा जगद्गुरुः ।
शिष्यैः सार्द्धमपि सर्व्वैं स्वयम्भूपूजनाय च[८] ॥
श्रीस्वयम्भुं जगन्नाथं दर्शनार्थं समागताः ।
नानापूज्यादिहस्तैश्च[९] स्वयम्भु[१०]पूजनाय च ॥

अपिच ।

शृणु मैत्रेय कालेऽस्मिं अयं नेपालमण्डले ।

१ B सर्व्वेऽपि......सङ्गताः । २ A अन्यत्रं D अन्यत्रञ्च ।
३ D अन्यत्त्रेत्रं B अन्यत्क्षेत्र प्रगच्छते । ४ B स्थवीरादिभिः ।
५ D उपासको उपासिकाः । B उपासकोपासिकैः ।
६ B चेरकैस्चेलकाभिस्च । ७ B क्वचित्
८ A शिष्यैः साद्धम्पि सर्व्वैस्च स्वयम्भू पूजनाय । B साद्धञ्च सर्व्वैस्च ।
शिष्यैः साद्धं सर्व्वैस्चापि । ९ B ०हस्तै च । १० A D स्वयम्भू० ।

कालीह्रदसमाख्याते स्वयम्भू संप्रतिस्थितम्[१] ॥
श्रीस्वयम्भुं विश्वनाथम्[२] दूरेणापि स सद्गुरुः ।
दृष्ट्वा सर्वैश्च शिष्यैश्च सर्वैस्साद्धं समागताः ॥
तत्र कालीह्रदे सिद्धौ स्वयम्भूं च जगद्गुरुम् ।
दृष्ट्वा[३] तद्ह्रदसामन्त[४] स्थित्वा पूज्यं कृतश्च ते ॥
धूपैश्च दीपैस्स तं शम्भूं पूजनं कृतम् ।
स्तुतिं चापि प्रमोदेन चचार मुदा पुनः[५] ॥
तद्ह्रदं च समन्ताच्च सर्वैः प्रदक्षिणां कृतम् ।
वाद्यैश्च विविधै युक्तैः स्तोत्रैः पाठैश्च भाषजैः ॥
गीतैगानैश्च उत्साहैः मोदैः सर्वैः कृतं कृतम् ।
समायाता प्रयाताश्च पुनः पुनः प्रतिदिने ॥
पश्चाष्टाङ्गेन योगेन प्रणिपत्य पुनः पुनः ।
तद्ह्रदस्य तीरे स्थित्वा सर्वे शिष्यगणा अपि ॥
धारणीभिश्च पाठैश्च गाथाभिश्च मुदा अपि ।
प्रतिदिने स्तुतिं कृत्वा गता[६] गुरु सह ॥
आगताश्च गता येऽपि मनुजादय मानुषाः ।
दिने दिने च ते सर्वे सङ्ख्या अपि न विद्यते ॥
बहुशिष्यगणैः साद्धं प्रत्यागत अयं जिनः ।
सर्वत्र भुवने चापि नाके चापि रसातले ॥

---

१ D संप्रतिष्ठितम् । २ A D विश्वभूनां । ३ D omits दृष्ट्वा
४ D सामन्ता । ५ B न चकात मुदा पुनः । D संमुदा ।
६ B D प्रत्यागता ।

दिने दिने प्रगच्छन्ता उद्धारं च कृतं कृतम् ।
स्वर्गे मर्त्ये च पाताले सर्वत्र भुवनेषु च ॥
अन्वाहिण्ड्य[1]समन्ताच्च शिष्यै सह तथागतः ।
इत्येवं गुणभूषाङ्गी विश्वाभू मुनिनायकः ॥
नाकजानामपि मध्ये मर्त्यजानां तथा अपि ।
पातालजानां सर्वेषां लोके शास्ता प्रकिर्त्तिताः ॥
तस्मिन् काले च मैत्रेय चोत्तरापथमध्य भौ[2] ।
महाचीनस्य विषये मञ्जुश्री नाम पर्वतः ॥
नाम्ना पुरा पञ्चशिषः[3] सर्वलोके प्रकीर्त्तिता ।
अतीतैरपि बुद्धैरनागतैः[4] प्रत्युत्पन्नकैः ॥
बोधिसत्वैर्महासत्वैः स्थवीरस्थवीरादिभिः[5] ।
भिक्षुभिर्भिक्षुणीभिश्च उपासक उपासकैः[6] ॥
प्रत्येकैरपि बुद्धैश्च राजामात्यसपौरजैः[7] ॥
धनिभिस्सार्थवाहैश्च सर्वैश्च जिनसेवकैः ।
हिमालयनिवासिभि नेपालवासिभिस्तथा[8] ।
मध्यदेश वासिभिः[9] सर्वैश्च देशवासिभिः ॥
तैस्सर्वैरपि लोकैश्च प्रसिद्धं ख्यापितं ननु ।
देवैर्नागैश्च गन्धर्वैः पातालजैश्च मर्त्यजैः ॥

---

१ B अत्याहिण्ड्य० । २ D मध्यभे । ३ B पञ्चशीर्षः । D
४ B D ०श्चानागतैः । ५ B D स्थविरस्थविरादिभिः ।
६ B उपासिकैः । D उपासिकैः । ७ B राजामात्या ।
८ D वासिभिः । ९ B D मध्यदेशसुवासिभिः ।

अनेकैः सर्व्वलोकैश्च अनेकभुवनवासिभिः ।
अनेकदेशवासीभिः[१] तैः सर्वैश्च[२] पुनः पुनः ॥
पञ्चशिषः मञ्जुश्री नाम पर्वत ननु[३] ।
अनेकैर्देवलोकैश्च वासितं तत्र सर्वदा ॥
आयामं चापि व्यायामं नासास्तानां[४] सुविस्तरम्
सप्तभि परिखाभिश्च प्राकारैः सप्तभिर्वृतम् ॥
तत्सर्वं चीनदेशञ्च समुद्रेण परिवृतम् ।
अनेकै जलजन्तुभिः नक्रैश्च पूरितं च तत् ॥
चीनप्रदेशभूमिं च समन्तत परिवृतम् ।
अगाढेन समुद्रेण तत्प्रदेशं परिवृतम् ॥
नेपालमन्यन्तले[५] स्थाने बहूनि पर्वतानि च ।
ग्रामाणि अपि राष्ट्रानि राज्यानि विविधानि च ।
पट्टनानि नगराणि क्षेत्राणि निगमानि च[६] ॥
सर्वेषामपि राज्यानां राजधानीं च वर्त्तते ।
कुकुटसम्पातमात्रेण[७] ग्रामेण परिवृतः[८] ।
तस्मिं चीनप्रदेशे च सर्वलोकैः सुपूरितम् ॥

---

१ D अनेकै देशवासीभिः । २ B सर्व्वैः तैश्च ।
३ B पञ्चशीर्षः मञ्जुश्रीश्च नामव पर्व्वतं ननु । D पञ्चशीर्षाभिधानः श्री मञ्जुश्री पर्व्वतः खलु । ४ B मासाष्ठानां । ५ B तेषामन्य० D मन्यन्तरे ।
६ A निगमानि । ७ C कुक्कुट संप्राप्तमात्रेण । B कुक्कुटपात्र० ।
D कुक्कुट संपातमात्रेण । ८ D परिपूरितः ।

ब्रह्मभिः क्षत्रियैः वैश्यैः शूद्रादिदेशजैरपि ।
अनेकैः सर्वलोकैश्च सुस्थितः तत्र सर्वदा ॥

[1][इति गच्छति —

---

१ B has the following for the portion bracketted.

इत्थं ऋद्धञ्च स्फीतञ्च अनेकजनपूरितम् ।
इति उपद्रवादिञ्च न जातं सर्व्वदा पुनः ॥
शुभैः संयुक्तमित्येवं कल्याणैर्मङ्गलैरपि ।
सर्व्वदा सर्व्वकालञ्च भवति सुखिनः प्रजा ॥
दयावान् पुण्यवान् विद्वान् मञ्जुश्रियः सुशिष्यकः
मञ्जुश्रियं गुरुं मत्वा सधर्म्मपत्निना सह ॥
प्रतिदिने त्रिभिस्कारं मञ्जुश्रियः सेवां कृतम् ।
नाम्ना च धर्म्मराजोऽयं पत्नीभ्यः सह संयुतम् ॥
यस्मिन् देशे प्रतिस्थित्वा पालितपुत्रवत् प्रजा ।
एकपुत्रमिव लक्षितञ्च पुनः पुनः ॥
तस्मिन् चीनप्रदेशे च मध्यस्थाने विशेषतः ।
पञ्चशीर्षनामयुक्तं अस्ति च एक पर्व्वतम् ॥
अस्मिन् मणिमये युक्ते पर्व्वते पञ्चरत्नके ।
नानागुणविभूषाङ्गे लक्षिभिः संप्रपूरितम् ॥
शृङ्गैश्च पञ्चभिर्युक्तैः पञ्चशीर्ष इति श्रुतः ।
प्रथमं वज्रशृङ्गञ्च द्वितीयमिन्द्रनीलकम् ॥
माणिक्यं तृतीयञ्चैव चतुर्थं नार्जलं मणिम्
वैदूर्य्यं पञ्चमञ्चैव एतैश्च पञ्चरत्नकैः ॥
प्रथमं मुक्तिशृङ्गञ्च द्वितीयं विद्रुमं तथा ।
तृतीयञ्चापि सौवर्णं रजतञ्च चतुर्थकम् ॥
पञ्चमं अश्मगर्भञ्च रत्नैर्नानाभिशृङ्गकैः ।
एतेषामुपरि मध्ये एकं ह्रदं प्रतिष्ठितम्

कह्लारैः[१] कुमुदैः पद्मैः पुण्डरीकैश्च[२] पूरिते ।
नीलोत्पलादिजलजैः नानापुष्पैः प्रपूरितम्[३] ॥
क्रौञ्च आदिभिः कारण्डजैः[४] चक्रवाकैर्वकै[५]स्तथा ।
राजहंसादिभिर्जातैः पक्षिभिश्च सुपूरिते ॥
सप्तक्रोशञ्च आयामं व्यायामं च तथा अपि ।
पर्वतैश्च परिवृत्तो समन्ततः सुशोभिते ॥
इत्थं गुणमयं युक्ते कालीह्रदे विचित्रके ।
नानागुणसुसंयुक्ते शलोरत्नप्रतिस्थिते ॥
तस्मिं कालीह्रदे स्वर्णं शरजरत्नजमपि ।
रत्नकिञ्जल्कैः संयुक्तं वीजकोषं जाम्बुनदम् ॥
वीजं सु इन्द्रनीलञ्च नाड़मपि वैदूर्य्यकम् ।
पञ्चरत्नमयमित्थं पद्मरत्नं प्रतिस्थितम् ॥

---

तत् ह्रदस्य समन्ताच्च शिलोच्चरै परिवृतम् ।
रत्नपाषाणयुक्ताश्च रत्नवृक्षैश्च संयुक्ते ॥
स्वर्णरूप्यादिभिः संयुक्ते नानाधातुभि चित्रकैः ।
नानारत्नादिभिर्युक्तैः शृङ्गैश्च परिवृतः ॥
पट्टदूष्यादिभिर्वस्त्रैर्नैर्काशिकपावनैः ।
नानावस्त्रादिभिर्वस्त्रैर्भवन्ति शोभित श्रयम् ॥
नानारत्नादिवृक्षैश्च केयूरकुण्डलादिभिः ।
हारार्धहारकटकैः रोपूर मुक्तादिभि ॥

१ A कङ्कालैः ।　　२ A पुण्डलीकैश्च ।　　३ D सुपूरितम् ।
४ D कारण्डैः ।　　५ D वटैः ।

अस्मिंं च शरजरत्ने कर्णिकायां प्रतिस्थितम्[१] ।
श्रीस्वयम्भुं जगन्नाथं ज्योतिरूपस्वरूपकम्[२] ॥
एकहस्तप्रमाणञ्च चैत्यरूपं स्वयम्भुवम् ।
त्रिसाहस्रमहालोके तच्छादृशं न विद्यते ॥
सहस्रसूर्य्यादधिकं श्रीभिश्च संप्रपूरितम् ।
चन्द्रमसस्सहस्राच्च लोके अधिकगौरवं ॥
ईदृशैर्गुणसंयुक्तं श्रीस्वयम्भुजगद्गुरुम् ॥
दृष्ट्वा मुदा दूरेणापि उत्पन्नं गौरवं भवेत् ।
तस्य च [३][दर्शनाज्जातं मनसि एकचिन्तकम् ॥
निश्चयञ्च मतिर्जातं स्वयम्भोः पूजनाय च ॥
मञ्जुदेव अथ शास्ता विचार्य्यं क्रियताम्[४] मुदा ।
मनसा एकचिन्तेन स्वयम्भोः गौरवाय च[५]] ॥
इत्थं जलमये अत्र केषां तत्पूज्य गोचरम् ।
देवासुरमनुष्याणां कस्यापि गोचरं भवेत् ॥
इति विचिन्त्य मञ्जुश्रीः स्वयम्भुवः प्रसादतः ।
सदेवमानुषाणाञ्च अर्थाय तत्र वासिनाम्[६] ॥
सर्वेषामपि सत्वानां हिताय च सुखाय च ॥
श्रीस्वयम्भुं जगन्नाथं निश्चयमिति गोचरम् ।
तत वसन्ति ग्रामञ्च नगरं निगममपि ॥

---

१ D प्रतिष्ठितम् । २ A सरूपकम् ।
३ C omits the portion bracketted. ४ A क्रियता ।
५ D स्वयम्भु गोचराय च । ६ A वाश्निनाम् ।

राजधानीञ्च राष्ट्रञ्च क्रमेण परिवर्त्तकम् ।
[यद्यादिभिः ।]
रत्नादिविविधैर्माल्यैः मुक्तैश्च विद्रुमैस्तथा ।
इत्यादि रत्नजैर्द्रव्यैः शोभितं तेषु सर्वदा ॥
[तेषु शृङ्गेषु मध्यकं[१] ह्रदरत्न प्रतिस्थितम् ।
अनेकैर्जलजैः पुष्पैः शोभितं भवति सर्वदा ॥
पुण्डरीकादिभिः पद्मैः कुमुदादिभिरुत्पलैः ।
नानापुष्पैः सुवासैश्च रत्नपुष्पैः सुशोभितम्[२] ॥]
अनेकैर्जलजन्तुभिः पक्षिभिर्वासितं सदा ॥
राजहंसादिभिः क्रौञ्चैः मत्स्यमङ्गल[३]कच्छपैः ।
इत्येवमादिभिः सत्वैः पूरितं तत्र सर्वदा ।
वज्रवैदूर्य्य[४]शङ्खैश्च नानारत्नैः सुपूरितम् ॥
तस्मिंं च ह्रदमध्ये तु महां[५] राशिं च विद्यते ।
चतुरस्रकविस्तारं विस्तीर्णं च सुशोभितम् ॥
त्रयस्त्रिंशादिभिर्लोकैः विशेषैर्मर्त्त्यमण्डले ।
पाताले सर्वलोकेषु तद्ध्रदसादृशं न हि ॥
शुचि इत्थं पवित्रञ्च शिलारत्नं प्रतिस्थितम्[६] ।
प्रसिद्धञ्च पवित्रञ्च ह्रदमध्ये स्वयं स्थितम् ॥
तस्यां शिलायां मध्ये तु प्रासादैकोऽस्ति शोभितम् ।

---

१ D मध्येकम् । २ D omits the portion bracketted.
३ B D ०मकर० । ४ A ०वैडूर्य्य० । ५ B महाशीला । D महा०
६ D प्रतिष्ठितम् ।

विश्वकर्मादिभिर्देवैश्च सप्तरत्नैः सुसंस्कृतम्॥
चतुरस्रं चतुर्द्वारं चतुस्तोरणशोभितम्।
आयामं अथ व्यायामं उच्चं सर्वत्र मण्डितम्॥
पञ्चभि रत्नखचित[1]द्वारगवाक्षतोरणैः[2]।
हर्म्यस्तम्भादिभिर्युक्तं नानारत्नैः सुसंस्कृतम्॥
छत्रध्वजपताकादि[3]वितानैश्च सुमण्डितम्।
घण्टाश्रेणिभिः संयुक्तं चामरैश्च प्रलम्बितः[4]॥
पट्टदूष्यादिभिर्वस्त्रैः पुष्पमाल्यैरलङ्कृतः।
विद्रुमैर्मुक्तिकैर्दामैः रत्नमाल्यैरलङ्कृतः[5]॥
सुगन्धिवारिभिः सिक्तः[6] पुष्पैरपि प्रच्छादितः।
सुगन्धैर्धूपनैर्युक्तः किंकिणीभिः प्रच्छादितः॥
कलशादिभिर्दीपैश्च नानामङ्गलभूषितः[7]।
पञ्चताडादिभिर्वाद्यैः नानावाद्यैस्सुमण्डितः॥
मृगेन्द्रासन[8]रत्नञ्च तत्रास्ति भद्रपीठकम्।
जाम्बूनदेन रचितं नानामणिविभूषितम्॥
तद्द्वारपार्श्वयोः स्थाप्यौ[9] सिंहशार्दूलकावपि।
ईदृशं गुणभूषाङ्गं त्रैलोक्ये नास्ति कुत्रचित्॥
चत्वारश्च महाराजाः लोकपालादयः गणाः।
देवा नागासुरा यक्षाः वासितं[10] तत्र सर्वदा॥

---

१ D रत्नखचितैः। २ B ०स्तोरणैः। ३ A ०पटाकादि०।
४ D प्रलम्बितम्। ५ B अलङ्कृतम्। ६ A D शिक्तः।
७ B ०भूषितं। ८ A D मृगेन्द्राशन०। ९ A स्था द्वौ। १० A D वाशितं।

ब्रह्माविष्णुशिवशक्रनानादेवादयः गणाः ।
वाशितं सततं[1] तत्र मेरोरधिकगौरवम् ॥
ईदृशैर्गुणसंयुक्तं बौद्धक्षेत्रे विशेषतः ।
अनेकगुणप्रासादः[2] वैजयन्त इव स्थितः ॥
तत्र अस्ति गुरु[3] शास्ता मञ्जुदेवः तु नाम च ।
आचार्य्य सर्वविद्नाथः मञ्जुश्रीप्रतिरूपजः ॥
द्वात्रिंशल्लक्षणधरं अशीतिव्यञ्जनैर्युतः ।
सदेवमानुषाणां च लोके शास्ता जगद्गुरुः ॥
सहस्रसूर्य्यादधिकं तेजसा च सुपूरितम् ।
चन्द्रमसः[4] सहस्राच्च अधिकं कोमलं ततः ॥
इत्थं गुणमयं अज्ञः सर्वज्ञः[5] सर्वविद्गुरुः ।
पञ्चाभिज्ञो[6] मञ्जुदेवः ख्यातः साहस्रलोकके ॥
शिल्पतुलादिउद्धारे शास्त्रादिवेदपारगः ।
नानाधातुकलाभिज्ञः भाषागाथादिगानवित् ॥
वेदवेदाङ्गविन्नाथः ब्रह्मज्ञानविदाम्बरः ।
शून्यताशून्यतानाथः बोधिज्ञानविदाम्बरः ॥
योगीनां[7] योगविन्नाथः ज्ञानीनां ज्ञानपारगः ।
सर्वज्ञज्ञानविन्नाथः सर्वविद्यासुपारगः ॥
तत्वानां तत्वविन्नाथः तन्त्राणां तन्त्रपारगः ॥

१ D शततं । २ B ०प्रासाद । ३ B तत्रास्ति च गुरुः ।
४ B चन्द्रमस । ५ D सर्व्वज्ञ । ६ A पञ्चाभिज्ञा
७ D योगी ।

एवमादिगुणैर्युक्तः मञ्जुश्रीरिव शादृशः।
सर्वेषामपि विद्यानां सच्छास्ता च जगद्गुरुः॥
विश्वकर्माभिव ख्यातः मञ्जुश्रियस्य गौरवम्।
सर्वेषां देवलोकानां मर्त्यानां च तथा अपि॥
पातालजानां लोकेषु सर्वविद्यासु सद्गुरुः।
प्रज्ञापारमितानाञ्च अर्थं सत्वाय देशकः॥
एकपुत्रमिव[1] पितरौ त्रिदिवं लक्षितं[2] सदा।
अथाभूत्तस्य पत्नी द्वौ वरदामोक्षदाह्वयः॥
नामार्थयुक्ति[3] धर्मा च सत्सती पुरुषव्रती[4]।
द्वात्रिंशल्लक्षणधरी अशीत्या[5]चानुव्यञ्जनी॥
देवीनाञ्च मनुष्यानां[6] स्त्रीरत्नमिव शादृशी।
दयी शीली[7] क्षमी वीर्या ध्यानी प्रज्ञापि पारिणी॥
गुणी मन्त्री[8]वती ज्ञानी सत्वानां चोपकारिणी।
देवानाञ्च मनुष्यानां किन्नराणां तथैव च॥
जननी सर्वसत्वानां सिद्ध[9]विद्याधरर्षिणाम्।
या देवी वरदाख्यापि केशिनी प्रतिरूपजा॥
सा देवी सर्वसत्वानां वरदाने सदा स्थिता।
या देवी मोक्षदाख्या चोपकेशी[10] प्रतिरूपजा[11]॥

---

१ D एकपुत्रैव। २ B रक्षितं। ३ B ०युक्ती। ४ A D ०व्रता।
५ B अशीति०। ६ B मानुषीनां। ७ B दयाशीली।
८ B सती। ९ A सिद्धि०। १० B मोक्षदा चोपकेशी।
११ D परिरूपजा।

सा देवी सर्वलोकानां मोक्षदाने प्रतिस्थिता ।
वरदा मोक्षदा देवी देवकन्या स्वरूपिणी ॥
नन्दनवनचारी च सचि इव सुरूपिणी ।
इत्यादिभिर्गुणैर्युक्ता तस्य पत्नीति ख्यापिता[१] ॥
सर्वासां नरनारीणां विद्या माता वभूव च ।
किन्नरीणां च यक्षीणां[२] राक्षसीनां तथैव च ॥
देवीनां चासुरीणां[३] च अप्सराणां तथैव च ।
कूर्म्मादीनाञ्च नागीणां सर्वासां नारीणामपि[४] ॥
नारीविद्यासु सर्वासु गुरुमाता प्रकीर्त्तिता ।
ताभ्यां सार्द्धं समायान्तु[५] पञ्चशीर्षाख्यपर्वतात्[६] ॥
मञ्जुदेवो[७] गुरुः शास्ता अस्ति नेपालमण्डले ।
चक्षुषा दिव्यज्ञानेन श्रोत्रेण च प्रजानितः[८] ॥
स्वयम्भूपूजनार्थं[९] च सत्कारार्थं मुदागतः[१०] ।
अन्यचित्तं[११] विहाय सः[१२] स्वबुद्ध्यागत सद्गुरुः ॥
राजहंस इव ऋद्धीसः खपथेन समागताः ।
इत्थं ऋद्धञ्च स्फीतञ्च अनेकजनपूरितम्[१३] ।
इति उपद्रवादिञ्च[१४] न जातं सर्वदा पुनः ॥

---

१ D विश्रुता । २ B यक्षाणां । ३ B चासुराणाञ्च ।
४ B नारिणामपि । ५ D समायातु । ६ B पञ्चशीर्षाच पर्व्वता,
A पञ्चशीर्ष पर्व्वतात् । ७ B D मञ्जुदेव । ८ D प्रजापतिः ।
९ D ०जगतार्थञ्च C ०पजनार्थञ्च । १० B सुमागतः । ११ A अन्यचिन्तं ।
१२ D असौ । १३ A राजहंस इवेधीसः खपथेस्थं ऋद्धञ्च स्थितञ्च
अनेगजनपूरितं । B राजहंस इव ऋद्धीसः खपथेन समागतः ।
१४ D उपद्रवादीञ्च ।

शुभैस्संयुक्तमित्येवं कल्याणैर्मङ्गलैरपि ।
सर्वदा सर्वकालञ्च भवन्ति सुखिनः प्रजाः ॥
दयावान्पुण्यवान्विद्वान् मञ्जुश्रीयः सुशिष्यकः ।
मञ्जुश्रियं गुरुं नत्वा स धर्मपत्निना सह ॥
प्रतिदिने त्रिभिस्कालं मञ्जुश्रियः शेवां कृतम् ।
नाम्ना च धर्मराजोऽयं पत्निभ्यः सह संयुतः ॥
यस्मिन्देशे प्रतिस्थिला[1] पालितः पुत्रवत्प्रजाः ।
एकपुत्रमिव पितरौ रक्षितश्च पुनः पुनः ॥
तस्मिन् चीनप्रदेशे च मध्यस्थाने[2] विशेषतः ।
पञ्चशीर्षनामयुक्तं अस्मिं च एक पर्वतम् ॥
अस्मिन्मणिमये युक्ते पर्वते पञ्चरत्नके ।
नानागुणविभूषाङ्गे लक्ष्मीभिः संप्रपूरिते ॥
शृङ्गैस्च पञ्चभिर्युक्तं पञ्चशीर्षं इति स्मृतम् ।
प्रथमं वज्रशृङ्गं च द्वितीयमीन्द्रनीलकम् ॥
माणिक्यं तृतीयं चैव चतुर्थं तार्चलं[3] मणिम् ।
वैदूर्य्यं पञ्चमं चैव एतैश्च पञ्चरत्नकैः ॥

अपितु ।

प्रथमं[4] मुक्तिशृङ्गं च द्वितीयं विद्रुमं तथा ।
तृतीयञ्चापि सौवर्णं रजतं च चतुर्थकम् ॥
पञ्चमास्मगर्भञ्च रत्नवृन्दैस्च संयुतैः ।

---

१ D प्रतिष्ठिला ।  २ D मध्ये स्थाने ।  ३ D तार्च्चरं ।
४ A प्रथम ।

[1][एतेषां सुपरि मध्येऽष्टकं ह्रदं प्रतिष्ठितम् ।
तद्ध्रदस्य समन्ताच्च शिलोच्चयैः परिवृतम् ॥
रत्नपाषाणयुक्तैश्च रत्नवृत्तैश्च संयुतम् ।]
स्वर्णरूप्यादिभिर्युक्तैः नानाधातुभिश्चित्रकैः ॥
नानारत्नादिभिर्युक्तैः घटैस्तत्र परिवृतः ।
पट्टदूष्यादिभिर्वृत्तैः चीनैं काशिकपावनैः ॥
नानावस्त्रादिभिर्वृत्तैः भवति शोभित अयम् ।
नानारत्नादिवृत्तैश्च केयूर[2]कुण्डलादिभिः ॥
हालार्द्धहारकतकै नूपुरमुकुटादिभिः[3] ।
आचार्य्यै आचार्य्यानीभि[4]र्बहु प्रत्येकबुद्धकैः ॥
श्रावकैः जिनशिष्यैश्च स्थवीर स्थविरादिभिः ।
भिक्षुभिर्भिक्षुणीभिश्च उपाशक उपाशकैः[5] ॥
राजामात्य सपौरैश्च चीनजैः देशजैरपि ।[6]
केचिद्दीपात्सुसंगृह्य केचित् गन्धान्तथा अपि ॥
केचिन्नैवेद्यजान्[7] गृह्य दुकूलानपि च तथा ।
केचिद्वस्त्रान्परिगृह्य केचिच्च पट्टकानपि ॥

---

१ D has these three additional lines. २ A केयूल० ।
३ A नुरकुटान्समागतः । ४ A D आचार्य्यनिभिः ।
५ D उपासक उपाशिकैः । ६ B has these three additional lines here, सर्व्वलोकैः परिवृत्य समायात जगद्गुरुः ।
मञ्जुश्रियः प्रभावाच्च सर्व्वे च खपथात् गता ॥
केचित् पुष्पान् सुसंगृह्य केचित् धूपान् तथा अपि ।
७ A D केचिन्नैवेद्यान् ।

केचित् वाद्या[1]न्परिगृह्य केचित् गीतांश्च गायते ।
केचित्पाठांश्च भाषांश्च पठन्[2] सर्वे समागताः ॥
मञ्जुदेवप्रभावाच्च इत्थं सर्वे सुशिष्यकाः ।
तत्पृष्ठतः समायाताः स्वपथा च[3] पुनः पुनः ॥
अथ सर्वे समायाताः चीनदेशज[4] मानुषाः ।
तस्य स्वयम्भुवो नित्यं दर्शनञ्च कृतं ननु ॥
स आगत्य इमं दृष्ट्वा करुणाविष्टमानसः[5] ।
तं शम्भुं सर्वथा दृष्ट्वा मनोश्चिन्ता[6] बभूव तु ॥
अस्मिन् कालीह्रदे चित्रे जलजन्तुभिरावृते[7] ।
मत्स्यमकरकच्छपैः शुचादिभिः परिवृतः ॥
दक्षिणावर्त्तकं शङ्खैः[8] शुक्तिभिश्चापि मण्डूकैः
सर्पादिविविधैर्जातैः जलजन्तुभिः पूरितैः ॥
वज्रवैदूर्य्य[9]मणिभिः इन्द्रनीलं च विद्रुमैः ।
हिरण्यादिभिः रत्नैश्चः समन्ततः प्रपूरितैः ॥
वरुणादिनागराजैः अनन्ततक्षकं तथा ।
कर्कोटकश्च पद्मश्च महापद्ममपि तथा ॥
शङ्खपालं वासुकिं च कुलिकं च तथा अपि ।
इत्येवं आदिभिर्नागराजैश्चापि सुपूरिते ॥
त्रयस्त्रिभिर्कोटिनागैस्सर्वनागैः सुपूरितः ।

१ B वाद्य । २ A D पठ । ३ B स्वपथाच्च । ४ B ०देशजा ।
५ A ०मासः । ६ B मनश्चिन्ता । ७ A D परिवृते ।
८ B ०वर्त्तकशङ्खैः । ९ A वैडूर्य्य० ।

स्वयम्भुवः प्रभावाच्च तस्मादन्यन्न गच्छताः[१] ॥[२]

---

१ B अन्यत्रं नापि गच्छति ।

२ B has the following additional verses here,

कल्हारैः कुमुदैः पद्मैः पुण्डरीकैश्च पूरिते ।
नीलोत्पलादिजलजै नानापुष्पैः प्रपूरिते ॥
क्रौञ्च आदिभि अण्डजैः चक्रवाकैर्वकैस्तथा
राजहंसादिभिर्जातैर्पक्षिभिश्च प्रपूरिते ॥
सप्तक्रोशश्च आयामं व्यायामश्च तथा अपि ।
पर्व्वतैश्च परिवृते समन्ततः सुशोभिते ॥
इत्थं गुणमययुक्ते कालीह्रदे विचित्रके ।
नानागुणसुसंयुक्ते सलोरत्ने प्रतिष्ठिते ॥
तस्मिन् कालीह्रदे स्वर्णसलज रत्नजमपि ।
रत्नकिञ्जल्कैः संयुक्तं वीजकोषं जाम्बुनदम् ॥
वीजन्तु इन्द्रनीलश्च नालमपि वैदुर्य्यकम् ।
पञ्चरत्नमयमित्थं पद्मरत्नं प्रतिष्ठितम् ॥
अस्मिन् सलजरत्ने कर्णिकायां प्रतिष्ठितम् ।
श्रीस्वयम्भूजगन्नाथं ज्योतिरूपस्वरूपकम् ॥
एकहस्तप्रमाणञ्च चैत्ररूपं स्वयम्भुवम् ।
त्रिसाहस्रे महालोके तच्छादृशं न विद्यते ॥
सहस्रसूर्य्यादधिकं श्रीभिश्च सुप्रपूरितम् ।
चन्द्रमस सहस्राच्च लोके अधिक गौरवम् ॥
इदृशैर्गुणसंयुक्तं श्रीस्वयम्भुं जगद्गुरुम् ।
दृष्ट्वा मुदा दूरेणापि उत्पन्नं गौरव भवेत् ॥
तस्य च दर्शणात् जातं मनसि एकचित्तकम् ।
निश्चयश्च मतिर्जातं स्वयम्भूपूजनाय च ॥
मञ्जूदेव अथ शास्ता विचार्य्यं क्रियतां मुदा ।

नास्फीतं[1] हि चमं चापि[2] शुभिचं जनपूरितं ।
आकीर्णं जनमानुष्यं सर्वत्र नगरेषु च ॥
ब्रह्मभिः चत्रियैर्वैश्यैः शूद्रैश्चापि तथान्यजैः ।
अन्यदेशात्समायाताः अत्र स्थिताः भविष्यति ॥
पूर्वाच्च दक्षिणाच्चापि पश्चिमादुत्तरादपि ।
अग्न्याश्च नैऋत्याद्वायोः[3] ऐशानादध ऊर्द्धकात् ॥
दशदिग्भ्यः समायाताः देवा दैत्याश्च मानुषाः ।
गन्धर्वा किन्नरा यचाः नागाः कूर्म्माण्डका अपि ॥
वासिताश्च भविष्यन्ति अत्र नेपालमण्डले ।
शुभिचं सुजनोपेतं[4] सर्वमाङ्गलपूरितम् ॥
वरुणादिनागराजैः च[5] अनन्ततचकेन च ।
कर्कोटकेन पद्मेन महापद्मेन च अपि ॥

---

मनसा एकचित्तेन स्वयम्भो गोचराय च ॥
इत्थं जलमये तत्र केषां तत्पूज्य गोचरम् ।
देवासुरमनुष्याणां कस्यापि गोचरं भवेत् ॥
इति विचिन्त्य मञ्जुश्री स्वयम्भुव प्रसादतः ।
सदेवमानुषानाञ्च अर्थाय तत्र वासिनाम् ॥
सर्व्वेषामपि सत्त्वानां हिताय च सुखाय च ।
श्रीस्वयम्भुं जगन्नाथं निश्चयमिति गोचरम् ॥
तत्रैवं स ग्रामञ्च नगरं निर्गममपि ।
राजधानीञ्च राष्ट्रञ्च क्रमेण परिवर्त्तकम् ॥

१ D नास्फीटं ।    २ B ऋद्धं स्फीतञ्च चेमञ्च ।    ३ A D नैऋत्यद्वयोः ।
४ A D सुजनोऽप्येतं ।    ५ A omits च ।

शङ्खपालेन वासुकिना कुलिकेनापि च तथा ।
इत्येवं नागराजैश्च नागलोकैस्सुपूर्णकम्[1] ॥
नेपाले मण्डले अस्मिं कालेऽकाले दिने निशि ।
वृष्टिपूर्ण[2]समन्ताच्च भविष्यति न संशयः ॥
वसुन्धरा पृथ्विमाता शस्यैः पूर्णमही[3] कृतम् ।
धान्यादिव्रीहिजातैश्च अन्नैः[4] पूर्णं भविष्यति ॥
वनदेवता अनेकैः च फलमूलस्कन्दपत्रकैः ।
नानायुक्तैः सुपुष्पैश्च करिष्यन्ति सुपूर्णकम् ॥
इति चिन्त्य मञ्जुश्रीः ताभ्यां वचनमब्रवीत् ।
वरदे मोक्षदे देवी प्रभावं मे मते शृणु ॥
स्वयम्भूदर्शनाज्जातं करुणाविष्टमानसम् ।
तस्य स्वयम्भूनाथस्य गोचरं निश्चयं कृतम् ॥
निश्चिन्त शृणुयां[5] देव्यौ कुर्वाथा मनसि अपि ।
अन्यचिन्तं परित्यज्य पुण्यचिन्तं च[6] साम्प्रतम् ॥
करिष्य शम्भुनाथस्य प्रीतये महिमां च वा[7] ।
सर्वेभ्योऽपि च शिष्येभ्यः सत्वेभ्योऽपि पुनः पुनः ॥
वरदा मोक्षदा[8] देव्यौ शिष्यैः सह परिवृता ।
मञ्जुदेवं जगन्नाथं अवोचतस्मि गौरवम् ॥
मञ्जुदेव देवनाथ यथेष्टं साम्प्रतं कुरु ।

१ D सुपूरितम् । २ A विष्टिपूर्णं । ३ A D महिं
४ A D अन्नैः C अन्न । ५ B शृणुवथ । ६ B पुण्यचित्तश्च ।
७ B वः । ८ B मोक्षदे

आवार्य्यां न हि कार्य्या च[1] स्वयम्भोः पूजनाय च ॥
देवानाञ्च मनुष्याणां चासुराणामपि तथा।
सर्व्वेषामपि सत्वानां हिताय च सुखाय च ॥
एवमुक्ते मञ्जुदेव साम्प्रतं निश्चयं कृतम्।
कालीह्रदच्छेदनाय मन चिन्ता वभूव तु ॥
च्छेदनं केन शस्त्रेण करिष्यामि अहमपि।
तद्ध्रदस्य समन्ताच्च जलानि शोषिताय च ॥
पूर्वाच्च दक्षिणाच्चापि पाश्चिमा उत्तरादपि।
अग्न्यांश्च नैऋतौ चापि[2] वायोः ईशानमेव च ॥
दिग्विदिक्षु परिवृत्य समन्ततः[3] पुनः पुनः।
अन्वाहिण्डान्विदित्वा च विचार्य्य मनसिकृतम् ॥
इति चिन्त्या[4] मञ्जुदेवः मनसि निश्चयं कृतम्।
जगन्नाथ स्वयम्भोश्च गोचराय मनः[5] दधे ॥
स्याद् यथार्थं करिष्यहं जलनिर्ग्गणे[6] मतिम्।
इति कृते श्रीभगवान् पूजनीयो भविष्यति ॥
देवानाञ्च मनुष्याणां दैत्यानाञ्च तथा अपि।
यक्षाणां किन्नराणाञ्च नागानाञ्च तथा अपि ॥
[7][कुम्भाण्डानाञ्च सिद्धानां गन्धर्वाणाञ्च रक्षसाम्।
विद्याधर ऋषीणाञ्च तेषु मध्येषु नायकाः ॥
चतुराज कायिकानां चायत्रिंशानाञ्च अपि।]

१ B कार्य्यञ्च। २ C नैऋतावापि। ३ A समन्तः।
४ D चिन्त्य। ५ A D नमः। ६ C निमग्नने। D निर्गमने।
७ B omits the portion bracketted.

यामानान्तुषितानाञ्च निर्म्माणरतिनां तथा ॥
परनिर्म्मितवशवर्त्तीणां कामावचराणामपि[१] ।
अकनिष्ठादि[२]देवानां शास्ता नायकनायकः[३] ॥
ब्रह्मकायिक पुरोहितानाञ्च तथा[४] ।
महाब्रह्माणाञ्च अपि आभास्वराणाञ्च अपि ॥
इति रूपावचराणाञ्च[५] स भूयं प्रतिसंस्थितः ।
तेषां सर्व्वेषां मध्ये च एकशास्ता जगद्गुरुः ॥
सदृशानाञ्च देवानां सदर्शना तथापि च ।[६]
अकनिष्ठानां देवानां मध्ये श्रेष्ठः स सद्गुरुः ॥
आरूप्यवचराणाञ्च[७] ज्योतिरूपप्रतिस्थितः[८] ।
एकः श्रेष्ठो जगच्छास्ता त्रैलोक्ये सुरनायकः ॥
इत्यञ्च स्वर्गलोकानां त्रयोदशादीनामपि ।
एक मोक्षगुरु शास्ता स्वयम्भूर्जगदीश्वरः[९] ॥
मनुजादिमानवानां दैत्येन्द्राद्यसुरादिनां ।
मर्त्यपातालजानाञ्च एकनाथो[१०] जगद्गुरुः ॥
सत्वानामपि सर्व्वेषां शम्भुनाथ स्वयम्प्रभुः ।
वन्दनीयार्च्चनीयाश्च पूजनीयो[११] विशेषतः ॥
माननीयश्च देवानां करणीयस्तथापि सः[१२] ।

---

१ B कामाचराणान्तथा । २ A अस्यनादि । B कनिष्ठादि । C अघ्नरादि ।
३ B नाकजनायकः । ४ D तथा अपि । ५ B इति रूपाचराणां ।
६ A D सुदृशानाञ्च देवानां सुदृशानां कथापि च । ७ B आरूपाचराणां ।
८ D ०प्रतिष्ठितः । ९ B स्वयम्भूजगदीश्वरः । १० B एकनाथ ।
११ B सेवनीयो । १२ B करणीयस्तथा अपि ।

करणीयगुरुत्वासौ[1] भविष्यति इति[2] सर्वथा ॥
इति मत्वा स आचार्य्यः जलनिर्ग्रहणे मतिः[3] ।
लोकानामनुकम्पार्थं सत्त्वानां पुण्यवृद्धये ॥
देवानाञ्च मनुष्याणां हिताय च सुखाय च ।
अपुण्यानां पुण्यार्थाय पुण्यानां फलप्राप्तये ॥
इति सञ्चिन्त्य भूयोऽपि आचार्य्येण सुबुद्धिना ।
नामेन मञ्जुदेवेन मञ्जुश्रियेव[4] शादृशा[5] ॥
तीक्ष्णतरं चन्द्रहासं खड्गं गृह्णाति सर्वथा ।
खड्गरत्नमिव सिद्धं[6] त्रैलोक्येऽपि सुदुर्लभम् ॥
चन्द्रनं सादृशं खड्ग चन्द्रहासं इति स्मृतम् ।
श्रिया लक्ष्म्या च तीक्ष्णेण शोभितेन च शाविव[7] ।
यदा च मञ्जुदेवेन खड्गं गृह्णाति स्वेच्छया ।
तदा शास्ता गुरु नाथ मञ्जुश्रीरिव[8] शोभितम् ॥
यस्मिञ्च मञ्जुदेवेन खड्गं गृह्णाति तत्क्षणात् ।
पूर्णमायाः सायंकाले[9] सूर्य्यचन्द्रमसमिव[10] ॥
पञ्चबुद्धमुकुटेन भूषितं शिरस्युपरि ।
नानारत्नैविभूषाङ्गी[11] केयूरकटकुण्डलैः ॥
रत्नदामानां हारैश्च भूषितं गात्रशोभितम् ।

१ D गुरुस्वासौ । २ A omits इति । ३ D जलनिर्गमनमतिः ।
४ A मञ्जुप्रियेव । ५ D सादृशा । ६ A D सिद्ध ।
७ A D शाविना । ८ B श्रीरति० । ९ B शायंकाले ।
१० D सूर्य्ये चन्द्रमसमिव । ११ B D नानारत्नविभूषाङ्गी ।

पट्टवस्त्रादिभिश्चान्यैः[१] भूषितं शोभितं अपि ॥
सव्यहस्तेन संगृह्य कृपाणं चन्द्रहासकम्।
वामेन पुस्तकं धृत्वा[२] प्रज्ञापारमितामपि ॥
सिंहशार्दूलयोपरि संस्थितं भद्रपीठके।
खपठो गच्छतः[३] नाथः याम्यदिशं प्रगच्छति ॥
प्रगच्छत्यपि[४] अयं याम्यं तेजासा परिपूरितः।
प्रातःकालस्थ[५] सूर्य्यवत्[६] अत्यर्थं शोभितं भवेत्॥
अथवा गच्छ[७] समये श्रिया च परिपूरितः।
पूर्णमास्याः सायांकाले चन्द्रमा इव शोभितम् ॥
गृहीते[८]ऽस्मिं स आचार्य्यः मनः चिन्तापरमभूत्[९]।
विदिक्षु दिक्षुतितेन[१०] जलपन्था न कारितम् ॥
पण्ठा च एक[११] वा द्वौ वा बहवो वापि कारिताः।
कृतश्च निश्चयं कृत्वा चिन्तयामास सद्गुरुः ॥
मञ्जुश्रीरथ आचार्य्यः दृष्ट्वा चिन्ता विचारितः।
कालीहृदस्य सम्पूर्णं पयस्तेन सुशोष्यतु[१२] ॥
याम्येनाथ दिशेनापि पाषणेनापि सद्गुरुः[१३]।
मनसा एकचित्तेन करोति जलनिर्गमम् ॥

---

१ B चीनैः। २ A D ध्यात्वा। ३ B खपठा गच्छति C खपथा D खपठात्। ४ B प्रगच्छत्वापि। ५ D प्रातर्कालस्य। ६ B सूर्य्येव। ७ B गच्छति। ८ B गृह्निते। ९ B ०पर अभूत्। १० A दिक्ष्विति के। ११ D एकं। १२ B सुशोषति। १३ B पाषाणे नाद्रिणा गुरुः।

चन्द्रहासेन खड्गेण निशितेनाच्छिदद्विभुः।
सर्वतं जलसंघातं वाहयामास धीरधीः॥
कापोतलञ्च प्रथमं पर्वतोपत्यकाः ततः।
गन्धावत्योपत्यकाञ्च क्रमेण च्छेदितं भवेत्॥
मृगस्थलिं ततश्चापि पश्चात् गोकर्णच्छेदितम्।
तत पश्चाद्दरपुं नाम तन्त्राचवत्यां उपर्य्यपि[1]॥
यत्र यत्रैव पाषाणं रुन्ध्यरुन्ध्यजला स्थिताः।
च्छिलाच्छिला च तां चक्रे नदीशोचान्यनेकशः॥
अहोरात्रं द्विभिस्त्रिभिश्चतुर्भिर्वा समन्ततः।
तद्ह्रदमस्य जलसर्वं शोषितं भवति इति[2]॥
जलशोषादनन्तरं कालीह्रदशेषं पयः।
स्थापयामास नियतं ह्रदमेकं मनोरमम्॥
मञ्जुदेवेनाचार्य्येण एकं ह्रदं प्रस्थापितम्।
[3][स्वच्छं सुशीतलं गन्धं भुक्तं जीर्णकरि[4] लघु॥]
[5]नेपाले मण्डले अस्मिं याम्यं दिशिविशेषतः।
गन्धावत्या पर्वताच्च याम्ये[6] दिशि विशेषतः॥
स्थलप्रदेशेन ऊल[7] ह्रदमेकं प्रस्थापितम्[8]।
स्वच्छं सुशीतलं गन्धं भुक्त जीर्णकरि लघु॥
मधुरं दीर्घ आरोग्यं अष्टाङ्गगुणसुवारिणा।

---

१ B तत पश्चाद्दरपुष्पं नाम तत रत्नावत्यामुपर्य्यपि।  २ D भवतीति च।
३ B omits the portion bracketted.  ४ D ०करी।
५ A D add here a broken verse मधुरं दीर्घ औ।
६ D याम्यां।  ७ B दूरे D दूर।  ८ B प्रथापितं।

इत्थं सुवारिणा अत्र[1] महाह्रदे प्रख्यापिते।
समन्तत[2] परिवृते जलेन पूरितं भवेत्।
: हंसैश्चक्राख्यैश्च प्रकूजितैः[4] ॥
पक्षिभिः राजहंसैश्च वासितं तत्र सर्वदा।
कलहंसैर्वलाकाभिः मल्लिनैः शितितरै[5]र्बकैः ॥
लक्षणाभि[6]र्जलभाभिः क्रौञ्चादिभिः सदा स्थितः।
मानादिभिस्सफलिभिः नक्रैर्जलस्च पूरितः[7] ॥
शूच्चैर्मकरैः कूर्मैश्च जलजन्तुभिरावृतः।
[8]क्षुद्रग्रैषैः गौधेयैश्च मणीभिश्च मण्डूकैः[9] ॥
कुम्भीरैर्मद्गुरैरुद्रैः दुर्नामाभिः परिवृतः।
शुक्तिभिः शम्बूकैः[10] शङ्खैः मण्डूकैः गण्डकैः च्छकैः[11] ॥
शकुलैः कुलिलैः शालैः एताभिः सम्प्रपूरितः।
इत्थमादिभिर्वन्द्यैश्च जलपक्षिभिरावृतः ॥
जलजन्तुभिः सर्वैश्च अत्र च[12] वाशितं मुदा।
इन्दीवरैः कुवलयैः सौगन्धिकैः वलैः[13] ॥

---

१ B तत्र। २ A समन्त।
३ B कारण्डवैश्च हंसैश्चापि प्रकूजितैः।
पक्षिभि राजहंसैश्चापि प्रकूजितैः ॥
४ D चक्राख्यकूजितैः। ५ B शितितलैः। ६ B लक्ष्मणाभि
७ B सफलीभिर्भक्रैश्च जलजैश्च पूरितः। ८ D क्षुद्रशङ्खैः।
९ B क्षुद्रग्रावैः गौधेयैश्च कमठीभिश्च मण्डुकैः। १० D स्यम्बूकैः।
११ B गड्कैमकै। A गण्डकैः। १२ B D अत्रैव।
१३ B D सौगन्धिकैश्च कैवलैः।

अरविन्दैः पद्मिनीभिः नीलोत्पलैः कुशेशयैः ।
पुण्डरीकैश्च कमलैः रक्तोत्पलैः सुपूरितः ॥
सम्वर्त्तकैः[१] वीजकोषैः किञ्जल्कपत्रकेशरैः[२] ।
इत्यञ्च पुष्पैः जलजैः[३] नानापुष्पैः प्रपूरितः ॥
नानागन्धैस्सुसंयुक्तः तद्ध्रदस्य समन्ततः ।
वहुभिः कोणैभिर्युक्तः[४] समन्ततः परिवृतः ॥
यत्र ये[५] स्थिलातदृत्र त्रिकौणं प्रदर्शितं ।
स्वच्छैश्च वारिभिः पूर्णं काधाराख्यह्रदः शुचिः[६] ॥
तत्प्रदेशस्थिताः लोकाः स्त्रियः पुरुषदारकाः ।
ब्राह्मणक्षत्रियाः वैश्याः शुद्राश्च अन्यदेशजाः ॥
नैपालजाश्च सर्वेऽपि अत्यर्थं मानितं भवेत् ।
नाकजा मर्त्यजा लोकाः पातालजा अपि मुदा ॥
ते सर्वे सर्वकालञ्च अत्यर्थं मानितं भवेत् ।
कालेद्यास्मिं जनाः सर्वे ब्रुवन्ते तद्ध्रदाख्यया ॥
खनाद इति तन्नाम[७] नागकर्क्कोटकालयः ।
त्रयस्त्रिंशाद्य देवाः साप्सरांशगणावृताः ॥
इन्द्रेण सार्द्धमायाताः तस्मिं ह्रदे शदासदा[८] ।
पूर्वदिशात् समायात धृतराष्ट्रो महाद्युतिः[९] ॥

---

१ D संवर्त्तिकै । २ A सवर्त्तिकैताकोषैः किञ्जल्कैः केशरैः ।
३ A D तलजैः । ४ A कोणैयुक्तः । ५ B यत्र यत्र ।
६ A D स्वच्छवारिपरिपूर्णा काधीराख्यहुदः सुचिः ।
७ B इति नाम्ना तत् । ८ B D ह्रदे च सर्व्वदा ।
९ A B धृतराष्ट्रमहद्युतिः ।

गन्धर्वैः स्वगणैः सार्द्धं स्नानार्थं तत्र आगतः ।
विरूढक दक्षिणाच्च कुम्भाण्डैश्च परिवृतः ॥
पश्चिमाच्च विरूपाच्च नागैः सार्द्धं समागतः ।
वैश्रवणोपि[१] उत्तरात् यक्षगणैः परिवृतः ॥
पूर्वदिग्स[२]मायाताः स्नानार्थञ्च मुदासदा ।
केचिद्वीणा प्रवाद्यन्ति केचित् वंश च नोदितः[३] ॥
केचिद्दुन्दुभ नादन्ति[४] केचिच्च मुरजं अपि ।
केचिच्च कांश्यजं वाद्यं ताड़ितं[५] वाद्यकामपि ॥
केचित् गीतञ्च गायन्ति[६] स्वस्वदेशजभाषजैः ।
इत्येवं माङ्गलैर्युक्तं उत्साह च कृतं मुदा ॥
कालेदिने[७] समायाताः स्नानार्थं सर्वत दिशात्[८] ।
वेमचित्रादयोदैत्याः पातालवासिन अपि ॥
स्नानार्थञ्च समायाताः कालेकाले दिनेदिने[९] ॥
मनुजादय[१०] मानुष्याः सर्वे च मर्त्यजा अपि ।
आगताः पर्वते प्राप्ते[११] स्नानं कृतं मुदा अपि ॥
यथा कालीह्रदं लोके तथा तद्ह्रदं गौरवम् ।
स्वर्गे मर्त्ये च पाताले सर्वत्र भुवने अपि[१२] ॥

---

१ B वैश्रवोऽपि । २ B पूर्व्वदिने । ३ B वंशं च नोदितं D नादितं । ४ B दुन्दुभिर्नाद्यन्ति । ५ B ताड़न्ति । ६ D गायन्ती । ७ B काले काले । ८ D सर्व्वतः सदा दिशात् । ९ B समायाता कालेऽपि च दिनेऽपि च । १० B मनुजादयो । ११ B आगता पर्व्वसम्प्राप्ते । १२ B भुवनेष्वपि ।

इत्थं देवाश्च दैत्याश्च तद्ध्रदे स्नानकं कृतात् ।
प्रतिदिने समायाताः स्वयम्भोः दर्शनाय च ॥
श्रीस्वयम्भुदर्शनञ्च[1] कृत्वा पञ्चोपचारकैः ।
पूजयामासुरत्यर्थं त्रयलोकजजातयः[2] ॥
सो ह्रदोऽस्तिति अद्य[3] दीर्घकालञ्च स्थास्यति ।
एवं मैत्रेय विश्वभोः कालेकृतः ससद्गुरुः[4] ॥
भवन्ति तत्र मैत्रेय मानव[5] मानवा कृताः ।
स्नानध्यानादि जापादिन् कृत्वाचरति सर्व्वदा[6] ॥
[त्रीह्यादीत्वप्रनान्द्रत्व्यान् याचकेभ्य ददन्ति च[7] ।
स्नानध्यानादि जापादीन् पुष्पौ चरपि च[8] ॥]
तेन[9] पुण्यानुभावेन लभन्ति विविधान् धनान् ।
सोऽयं ह्रदश्च नामेन अर्थेन सादृशः परः ॥
धनसम्पत्तिं च[10] दत्तेन धनाद इति[11] ख्यातवान् ।
मानवैः मानधीभिश्च धनसम्पत्तिमिच्छया ॥

---

१ A omit च, D श्रीस्वम्भुं दर्शनं कृत्वा पञ्चोपचारकैः मुदा ।
२ B तयलोकयजातयः । ३ D सोऽह्रदास्तीति अद्यादि B अद्येऽपि ।
४ B कालेऽस्मिन् कृतः सद्गुरुः । ५ B मानव्या ।
६ A पुष्पै चरविपर्य्ययोः, B कृत्वा चरन्ति सर्व्वदा, C कृत्स्नौ चरतिपि चरत् । ७ A ददन्ति मानवा कृताः, B त्रीह्यादिवसनान् रत्नान्, D त्रीह्यानित्वन् याचकेभ्यः ददन्ति मानवा कृताः ।
८ C omits the lines bracketted. B omits the second line only, D स्नानध्यानादि जपादीन् पुष्पै धूपादि अर्च्चयेत् ।
९ A D तस्मात् । १० B omit च । ११ D धनादह्रेति ।

तद्ध्रदश्च समासाद्य कुर्वन्ति स्नानदानकम् ।
यच्च ह्रदमध्ये तु शरजरत्नं प्रतिस्थितम्[१] ॥
मञ्जुदेवप्रभावाच्च पश्चिमं दिशमागम्[२] ।
उत्पन्न जरज[३] रत्नं यत्र च ख्यापितं ननु ॥
मध्यलखच्च आख्यान[४] नेपालवासिभि[५]र्जनैः ।
इत्थं नामेन च सर्वैः नेपालजैर्जनैरपि ॥
तस्य ह्रदस्य मध्येन मध्यलखं प्रकीर्त्तितम् ।
अतीतैरपि सर्वैश्च प्रत्युत्पन्नैरनागतैः ॥
मानवादिभिर्मानुष्यैर्ख्यापितं तत्र सर्वदा ।
अतीतानगतैर्बुद्धैः प्रत्युत्पन्नैस्तथागतैः ॥
स्थविरादिभिः शिष्यैश्च कठितं तत्र सर्वदा ।
दिवोकसैरपि सर्वः मर्त्त्यजैः सर्वलोकजैः ॥
पातालवासिभिः सर्वैं रत्यर्थं ख्यापितं सदा ।
जलशोषादनन्तरं वायुः पूर्वात्समागतः ॥
मञ्जुदेवप्रभावेन विपरितागतोऽनिलः[६] ।
युत्पहेषं[७](?) पवित्रञ्च माङ्गलैःश्चिक्तिं भवेत् ॥
तत्प्रदेशे प्रतिस्थाप्य[८] स्वयम्भू जन्म पङ्कजम् ।
मञ्जुश्री पर्वतस्थाने[९] एक ह्रद प्रख्यापित ॥

---

१ D यच्च ह्रदमधौतुच्च शरजरत्नं प्रतिष्ठितं । २ A D आगतां ।
३ B जलजं । ४ B मध्यल खलु आख्याया । ५ A °वासिनीभिः ।
६ C विपरीतानिलः कविः । ७ A युत्पहृष्य पवित्रञ्च मागिलैः,
D युत्पूहृष्य पवित्रञ्च मागिलै । ८ D प्रतिष्ठाप्य । ९ B स्थानौ ।

तस्मिं च ह्रदमध्ये तु शम्भोः शरजरत्नकम् ।
तस्मादनन्तर[१] नूनं शम्भोः या धीरभूस्वसा[२] ॥
मञ्जुदेवस्य[३] च्छ्या च पर्वसं[४]जातमुत्तमम् ।
मनशिरादिभिर्धातु नानाधातुभिर्मण्डितम् ॥
जाम्बूनदैः सुवर्णैश्च रजतैरश्मगर्भकैः ।
विद्रुमैर्मूर्त्तिकैर्वज्रैः मुसारैर्मकटैरपि[५] ॥
पुष्परागैः माणिक्यैः च नानारत्नै प्रपूरितम् ।
दामिभिः[६] कटकिभिर्केयूरिश्च कण्ठिभिः ॥
मुकटिभिः[७]कुण्डलीभिश्च रत्नवृचैरलंकृतः ।
अग्निशैरादिकैवृचैः पट्टदूष्यादिभिस्तथा ॥
चीनैश्च काशिकैवस्त्रैः पट्टवृचैः[८] सुशोभितम् ।
इत्यादिभिर्गुणैर्युक्तं मञ्जुदेवप्रभावतः ॥
मञ्जुश्रीपर्वतमध्ये[९] एकञ्च पर्वतं कृतम् ।
नानारत्नैश्च संयुक्तः[१०] रत्नवृचैरलंकृतः ॥
अत्यर्थं शोभितं चित्रं मेरोरधिकगौरवम् ।
ईदृशैर्गुणसंयुक्तं वृचञ्च पर्वतं कृतम् ॥
मञ्जुदेवप्रभावाच्च रत्नगिरिरेव[११] स्थितम् ।

१ A D तस्यादनत । २ B धारभूस्व सा । ३ A D मञ्जुदेव मा
४ B अर्व्वतं । ५ B मर्कटैरपि । ६ A D मूकपिञ्चि ।
७ A D सदासिभिः । D दासिभिः कुण्डलीभिञ्च रत्नङ्कृतप्रपूरितं ।
८ C ०वस्त्रैः । ९ B ०सन्धौ । १० B संयुक्तां......अलङ्कृतं ।
११ C ०व्यवस्थितं । D रत्नगिरीववस्थितं

पर्वतस्योपरि तस्मिं एवं ह्रदं प्रतिस्थितम् ॥
[1]तस्मिं ह्रदमध्ये तु शरजरत्नं प्रतिस्थितम्[2] ।
ह्रदे समन्ताच्च जलपुष्पैः सुमण्डिते[3] ॥
नीलोत्पलादिभिः पद्मैः कुमुदैश्च सुमण्डितम् ।
यथा कालीह्रदशोभं तथा तद्वत् प्रशोभितम् ॥
अधिकेन घनादाच्च अत्यर्थं शोभितं भवेत् ।
ईदृशं ह्रदरत्नञ्च त्रैलोक्येऽपि सुदुर्लभाम् ॥
मञ्जुदेवप्रभावाच्च विशेषेण स्वयम्भुवः ।
तस्माद्धेतोः परं ख्यातं[4] पद्मगिरिः च आख्यया ॥
गिर्य्युपरि सुसंस्थिता तल्लोके भवति ख्यातवान् ।
योऽयं ह्रदस्य मुर्च्छा[5]भूः सोपच्छन्द्रोहका भव[6] ॥
तानिर्जलत्वास्य[7] समन्ताच्च[8] ह्रदभूमिसमन्ततः ।
तच्चकोऽपि शिखिंश्चैव[9] शङ्खपालं अनुपिवा[10] ॥
कुलिक अपरारश्च[11] नन्दोपन्दका पि ।
वासुकिवारुणश्चापि पद्मोऽपि महापद्मक[12] ॥
[13]श्रीकान्यादय नागा यः[14] स्वस्वस्थाने प्रतिस्थिता ।

१ D तस्मिन् ह्रदे च मध्ये तु । २ D प्रतिष्ठितं । ३ B
४ B ख्यातः । ५ B मुर्च्छा । ६ B भवत् ।
७ D तानिर्ज्जरत्वास्य । ८ B निर्गलत्वात् समन्ताच्च
९ D omits °श्चैव । १० B सुरुरपि । D सुरूपकः ।
११ D कुलिलश्चोपलालश्च......ऽपि च । १२ D पद्माभिधस्तथैव च ।
१३ D महापद्माभिधकान्ती स्वस्वस्थाने प्रतिष्ठिताः । १४ B omits यः ।

[1][पुत्र पुत्रादिभिर्युक्तः पत्नीभिर्दासदासिभिः ॥
यत्र यत्र प्रतिष्ठन्ति तत्र तीर्थं प्रकथ्यते ।
द्वादशनागराजैश्च यत्रापि वासितं भवेत् ॥
तत्रापि तानि तीर्थानि द्वादशानि प्रकीर्त्तिताः ।]
त्रिभि[2]स्त्रिभिर्कोटिनागैः सदासर्वं सुसंस्थितः[3] ॥
तस्माच्च वासितं तत्र सर्वकालं सुसंस्थिताः ।
काले वेले[4] प्रतिवर्षे मासे मासेऽथवा अपि ।
वृष्टिकृतं समन्ताच्च विशेषैस्तत्र मण्डले ॥
तस्माच्चापि सुभिक्षञ्च सठं पूर्णञ्च मङ्गलम् ।
आकीर्णजनमानुष्यं त्रैलोक्येऽपि सुदुर्लभम्[5] ॥
हिमालयाख्या भूमौ सा पर्वतैश्च परिवृता ।
नानावृक्षादिभिस्त्रिचैः नीलवर्णैः सुशोभितम् ॥
समन्तात्तत्परिवृत्य नीलैश्च पर्वतैर्ननु ।
चित्रैर्विचित्रैः[6] वृक्षैश्च समन्ततः सुशोभितः ॥
कैश्चिद्दरैः शृङ्गैर्वापि कैश्चिच्च निर्झलैरपि[7] ।
कैश्चित्पिङ्गकलैश्च[8] कश्चिदलैः परिवृतः ॥
कैश्चित्फलवृक्षैश्च कैश्चिच्च पुष्पवृक्षकैः ।
कैश्चिच्च वेणुभिः पत्रैः नानावृक्षैः सुमण्डितैः ॥

---

१ C D omit the portion bracketted.

२ B त्रय, D प्रकीर्त्तितास्त्रिभिकोटिनागैः । ३ B परिजनैः सदास्थितः ।

४ B काले । ५ A D सुदुर्लभां । ६ B चित्रैर्नानात्रैः ।

७ A D निर्मलैरपि । ८ D पिङ्गलिकैः ।

नानाधातुभिरद्रीभिः गैरिकैस्तु विशेषतः ।
नानाविधैश्च खनिभिः युक्तैश्च पर्वतैर्वृतः ॥
मार्ज्जारै[१]र्जम्बुभिर्व्याघ्रैः ऋचाभिर्मर्कटैरपि ।
तरक्षुभिः शूकरैश्च युक्तैश्च पर्वतैरपि ॥
[२]शुकैः शालिकैः मयूरैः कपोतैस्तित्तिलैरपि[३] ।
करविकै[४]श्चातकैश्च खेचलैश्च[५] सदा स्थितैः ॥
आतायिभिर्गृध्रैश्चापि वकैश्च वायसादिभिः ।
दार्वाघातैः कोकिलैश्च उलूकैः सारसैरपि ॥
झिल्लीकाभिर्भ्रामरैश्च सरघाभिश्च दंशिभिः ।
वरटाभिः[६] मक्षिकाभिः मधुमक्षिकाभि[७]स्तथा ॥
समुरिभिश्चमरीभिर्कृष्णसारै[८]र्मृगैरपि ।
हरिणीमूषिकाभिश्च[९] वनजन्तुभिरावृतः ॥
इत्येवमादिभिः वन्दैः खेचरै[१०]र्भूचरैरपि ।
कीटादि[११]जन्तुभिर्युक्तैः पर्वतैश्च परिवृतः ॥
समन्ताच्च परिवृत्य[१२] सम्बलाकारमण्डला[१३] ।
सुदुर्ज्जयाभूत्समाख्याता[१४] संज्ञानोत्पादकारिणी ॥

---

१ D मार्ज्जालैः । २ D शुकैश्च शालिकैश्चिनैः । ३ D तितिलैरपि ।
४ B करविङ्कैः । ५ D खेचरैश्च । ६ B वरताभिः ।
७ D ०मक्षिकाभिः । ८ A ०शालैः । ९ A हरिणैः मूषिकाभिश्च, D हरिणैर्मधुकाभिश्च । १० A खेचलैः । ११ A कीयदि D कपदि ।
१२ A D समन्तान्तत्परावृत्य । १३ D सम्बराकार० ।
१४ D समाख्याता ।

दृशपीठानां[१] मध्येऽपि उपच्छन्दोहका भवत्[२] ।
सर्वसिद्धिप्रदाता च सा भूमौ सम्प्रकीर्त्तिता ॥
चतुर्विंशतिपीठानां विशेषेणापि कथ्यते ।
हिमालयाख्या भूमौ सा मोक्षा सिद्धिप्रदायका ॥
हिमालया प्रसिद्धा भूः हिमेनापि प्रच्छादिता ।
नीहारेणापि संछन्ना योगीयोगिनीसेविता ॥
सम्बला[३] मण्डलाकारा देवी देवैः प्रपूरिता[४] ।
अनेकैर्पीठिभिः[५] पूर्णा मातृकादिगणैर्गणैः[६] ॥
भैरवादिभिरनेकैः क्षत्र[७]पालादिभिर्गणैः ।
सिद्धाभिरपि नागैश्च वृक्षैर्मेघैः शिवै भयैः ॥
प्रेतभूतैः[८] पिशाचैश्च यक्षैर्यक्षिणीभिरपि ।
वेताडैर्डाकिनीभिश्च साकिनीभि[९]स्तथा अपि[१०] ॥
सिद्धैर्विद्याधरैश्चापि खेचरै भूचरैस्तथा[११] ।
गणैः श्रेष्ठ[१२]देवताभिः विविधैश्चसमन्ततः[१३] ॥
नेपाले मण्डले अस्मिन् परिपूर्णं विशेषतः ।
एवमादिगुणैर्युक्ता साभूमी मोक्षदा बला ॥
त्रिसाहस्रे महालोके[१४] तत्तुल्यं शादृशं महि ।

---

१ D दृशपीयानां । २ A उपच्छन्द्रोहका भव वत । ३ D सम्बरा ।
४ B देवदेवी प्रपूरिता । ५ D पीठभिः । ६ B ०गणैरपि ।
७ D क्षेत्र० । ८ A D चैत्यैर्भूतैः । ९ A omits साकिनीभिः ।
१० D सिद्धै विद्याधरैस्तथा । ११ D खेचरैः भूचरैः श्रेष्ठैर्देवताभिः समन्ततः । १२ B गुणैः श्रेष्ठः । १३ D omits the line.
१४ D त्रिसाहस्रमहालोके ।

त्रयस्त्रिंशेषु लोकेषु[१] कुत्रास्ति विद्यते ननु ॥
पवित्रेण[२] सुपुण्येन चत्रगुणविशेषतः ।
मञ्जुदेवस्थापितेन मञ्जुराज्यं भवेत् समौ[३] ॥
देव्यादिभिः सदा स्थिता देवीराज्येति कीर्त्तिता ।
तद्देशवासिभिः लोकैः देवैस्त्रैलोक्यवासिभिः ॥
सेन्द्रोपेन्द्रादिभिर्द्देवैः[४] मानुष्यैरसुरैरपि ।
देवी राज्य[५]प्रसिद्धा सा कीर्त्तिता वर्णिता सदा ॥
दशभूमीनां मध्यानां सुदुर्ज्जया प्रकीर्त्तिता ।
सार्वज्ञैर्बोधिसत्त्वैश्च भवन्ति सेविता[६] सदा ॥
सप्तत्रिंशद्बौद्धधर्म्मसंज्ञा[७]नोत्पादकारिणी ।
वीर्य्यसम्बोध्यङ्गज्ञान[८]दायिनी सा शुभप्रदा ॥
श्रावकजिनशिष्याणां भिक्षुणीभिक्षुणामपि ।
वौद्धानां बोधिसत्त्वानां सर्वज्ञानोत्पादनी च सा[९] ॥
वाह्या चाभ्यन्तरे वापि मोक्षदा सिद्धिदा इति ।
वरदा ज्ञानदा तस्मात् पीठेषु दशभूमिषु ॥
भूमीनां दशमीनाञ्च मध्यमैका प्रकीर्त्तिता ।
बोधिज्ञानप्रदातासु बोधिं सत्त्वैश्च सेविता ॥
चतुर्विंशतिपीठानां विशेषेण प्रवर्णिता ।
एका सा सिद्धिभूमी च योगिभिश्च प्रकाशिता ॥

---

१ B त्रयस्त्रिंशे विशेषेण । २ A D पवित्रे । ३ B सहा ।
४ D र्द्देवैः । ५ C राशि० । ६ D A प्रोविता ।
७ D संघा० । ८ A D ०ज्ञानं । ९ D ०ज्ञानोत्पादनीव सा ।

सर्वेषां योगिनीनाञ्च योगिनां[१]मपि सर्वदा।
वाञ्छितं फलसम्प्राप्ताः विशेषैरत्र मण्डले॥
इत्यादिगुणसंयुक्ता[२] भूः त्रैलोक्येऽपि सुदुर्लभा।
नानागुणविभूषाङ्गी सुखावतीमिव स्थिता॥
अत्र चेयं प्रधाना या देवी लोके खगानना[३]।
याऽन्याकारेण संजाता [४][स्वर्गमर्त्त्ये त्रिलोकगा॥
त्रिदलपद्मरूपेण वर्णेन कुसुमे ननु।
धर्म्मोदयास्वरूपेण त्रैलोक्ये च प्रख्यापिता॥
एका माता प्रसिद्धा सा] स्वर्गमर्त्त्यत्रिलोकिषु।
उत्तराभिमुखी देवी त्रैलोक्यजननी इति॥
स्वभावमिव रूपात्मा त्रैलोक्येऽपि प्रकीर्त्तिता।
चतुर्विंशतिनांचापि वीरेश्वरीणां ख्यापिता॥[५]
[६]वीरेश्वरेण सङ्गम्य आलिङ्गनेन सुस्थिता[७]।
शवारूढा[८] त्रिनेत्री च कर्त्तिकपालधारिणी[९]॥
शिवशक्तिस्वरूपात्मा त्रैलोक्ये ख्यापितं ननु।
[१०]प्रज्ञोपायस्वरूपेण सर्वदा मिलीतं स्थिता॥
पञ्चमुद्राविभूषाङ्गी पञ्चबुद्धमुकूटिनी[११]।

---

१ A D योतिषां। २ B गुणयुक्ता। ३ A D स्वर्गानना।
४ D omits the portion bracketted.
५ D चतुर्विंशतिपीठानां अपि वीरेश्वरीति विश्रुताः। ६ B puts this line before the verse वीरेश्वरेण सङ्गम्य and C omits it.
७ A D आलिङ्गनमिव स्थिता। ८ C गवारूढ़ा। ९ A ०धालिनी।
१० A D प्रज्ञापायास्वरूपेण मिलीनं सर्व्वदा स्थितं। ११ D मुकूटिनीं।

नवनाथ्य[१]रसान्विता त्रैलोक्ये मातरा इति ॥
पिङ्गोर्द्धकेशी नग्नी च रविशशिसुकुण्डली ।
सर्वतथागता[२]नाञ्च जननी इति ख्यापिता ॥
खगाननेति नामेन स्वर्णशून्यरूपिणी ।
शून्यतां शून्यतां माता बौद्धमाता प्रकीर्त्तिता[३] ॥
भिक्षुणां भिक्षुणीनाञ्च स्थवीराणां तथा अपि ।
सर्वेषां बोधिसत्त्वानां महासत्त्वानां च तथा ॥
उपासकोपासिकानां सर्वेषां बोधिभागिनां ।
प्रज्ञापारमितारूपी बौद्धानां जननी तथा ॥
बौद्धानाञ्च वज्रिनी[४]रूपी योगीनां योगिनी तथा ।
सर्वेषामपि सत्त्वानां जननी विश्वरूपिणी ॥
अतीतानागतैर्बुद्धैः प्रत्युत्पन्नैस्तथागतैः ।
सर्वैर्बौद्धैरपि शिष्यैः बौद्धमाता प्रकीर्त्तिता ॥
शैवानां शिवरूपी सा वैष्णवानां च वैष्णवी ।
ब्राह्मणानां ब्रह्मणीति विश्वरूपी इव स्थिता[५] ॥
शैवानां वैष्णवानाञ्च ब्राह्मणानां[६] तथैव च ।
सर्वेषां देवदेवानां मोक्षमाता[७] प्रकीर्त्तिता ॥
आचार्य्यैश्चाचार्य्यानीभिः शिष्यैः शिष्यिनीभिस्तथा ।
सेवितं शततं कालं जनन्याः[८] पादपङ्कजोः ॥

---

१ A निवनाद्य० । २ B ०ताथागत० । ३ A प्रकित्तिता ।
४ A जिनी० D जननी० । ५ B ब्रह्मानां ब्रह्मणीति सा विश्वरूपेण संस्थिता । ६ B ब्रह्माणां । ७ B साच माता । ८ A D तयोश्च ।

योगिभिर्योगिनीभिश्च नानादेशा[1]त्समागतैः।
अत्र यैश्चापि सर्व्वैः[2] पूजितश्च दिने दिने॥
पुष्पैर्धूपैश्च दीपैश्च मांसै मद्यै[3]स्तथा अपि।
स्व स्व भक्षणैः वस्तुभिः अहर्निशं प्रपूजितम्[4]॥
[5][नानामन्त्रैरन्यमन्त्रैस्तन्मन्त्रेण च पूजितम्।
मालाभिः हस्तजापैश्च कृतं सर्वै दिने दिने॥
मानवीभिर्मानवाभिः सर्वैश्च पूजितं भवेत्।
प्रतिदिने प्रतिरात्रौ वन्दितं अर्च्चितं[6] सदा॥]
प्रथमं मञ्जुदेवेन ह्रदच्छेदा[7]दनन्तरम्।
तस्याः खगाननायापि पूजितं पादपङ्कजे॥
तस्याश्च दर्शनेनापि मञ्जुदेवो जगद्गुरुः।
पूजयामास अत्यर्थं तयोश्च पादपङ्कजे॥
केशिन्युपकेशिनीभ्यां[8] सार्द्धं समागतो गुरुः।
मञ्जुदेवो गुरुशास्ता अत्यर्थं पूजनाय च॥
पक्षे कृष्णे[9] मार्गशिर्षे नवम्यां दिशि सन्निधौ।
स्नानध्यानादिभिस्तस्याः कृत्वा पूज्यं मुहुर्मुहुः॥
उपवास[10]कृतेनापि रात्रौ जागरणं कृतम्।
पुष्पैर्धूपैश्च गन्धर्व्वैः[11] दीपैश्चापि प्रपूजितम्॥

---

१ A D नानादेशा। २ A D ये चापि सर्व्वैश्च। ३ B मद्यैः।
४ D adds सदा। ५ C D omit the portion bracketted.
६ B पूजितं। ७ A ०च्छेदात्। ८ D केशिनी उपकेशिन्योः।
९ A D पक्षकृष्णे। १० D उपासक०। ११ A adds च here.

मद्ये[१]र्मांसैश्च लेह्यैश्च पेयैश्चापि सुपिष्टकैः ।
नानापुष्पैश्च विधिभिः रात्रौ संपूजनं कृतम् ॥
तन्मन्त्रेण जपं कृत्वा तत्स्तोत्र[२]मुदितं कृतम् ।
तत्पाद्यं[३] विविधं कृत्वा निशि जागरणं कृतम् ॥
पत्नीभ्यां सह संस्थित्वा जापं कृत्वा पुनः पुनः ।
एकरात्रं सुसम्पूर्णं मञ्जुदेवेन पूजितम् ॥
प्रातर्गत्वा[४] शान्ततीर्थे जलतर्पणदानकम् ।
पुनः कृत्वा प्रमोदेन चकार स्तुतिमादरात्[५] ॥
पाठादि विविधा गाथा स्तोत्रञ्चापि प्रपाठयन्[६] ।
दानानि विविधान् वस्तून् याचकेभ्यः[७] प्रच्छादितः ॥
अन्नमन्नार्थिकेभ्यश्च वस्त्रं वस्त्रार्थिकेभ्यः हि ।
द्रव्यं द्रव्यार्थिकेभ्योऽपि सर्वेभ्यश्च मुदा ददौ ॥
स्नाने सति पुनः पूज्यं खगाननायै[८] धीमता ।
पत्नीभ्यां सहसंस्थित्वा[९] पञ्चोपचारकैरपि ॥
ध्यानैर्मन्त्रैस्तर्पणैः पुष्पैर्धूपैस्तथा अपि[१०] ।
गन्धैर्दीपैश्च नैवेद्यैः लेह्यैः पेयैस्तथा पुनः[११] ॥
खानैः[१२] पानैश्च सन्तोष्य खाननायै[१३] च सद्गुरुः ।
तद्विधिना सुसंपूज्य प्रणम्य च पुनः पुनः ॥

---

१ B मद्यैः । २ A नस्तोत्रं । ३ A D मद्याः । ४ B स्नात्वा ।
५ A D आदरम् । ६ D पाथादिविविधां गाथा स्तोत्रश्चापि प्रपाथयन् ।
७ D पाथकेभ्यः । ८ A B खगाननाय । ९ A सहसम्यस्त्वा ।
D सहसम्पत्वा । १० D ध्यानैर्मन्त्रैस्तपैस्तूपैर्पुष्पैधूपैश्चापि तथा अपि ।
११ A अन्नः D तथान्तकः । १२ A B खाद्यैः । १३ B खाननाय ।

प्रणिपत्य पुनः कृत्वा तत्प्रसादेन सञ्चयन्[१] ।
अभिषेकं पुरः[२] कृत्वा नेत्रेलेपं प्रकुर्वति ॥
मञ्जुदेवेन मोदेन पिबेत्तस्यामृतं पयः ।
पत्नीभ्यां सह सङ्गेन पिबेच्च अञ्जलिं त्रयम् ॥
प्रथमञ्च पिबेत्स्वेन पत्नीभ्याञ्च ततः ददौ ।
ततस्सर्वेभ्यः शिष्येभ्यः तत्प्रशादं मुदा ददौ ॥
अथ सर्वेऽपि शिष्याश्च तत्प्रसादं मुदा पिबेत् ।
अज्ञानं तत्क्षणात् त्यक्त्वा सुज्ञानं[३] प्राप्यते ननु ॥
इति मत्वा च मानुष्याः तस्याः शेवां कृतमपि[४] ।
ईप्सितं फलसम्प्राप्ता वाञ्छाञ्च लभ्यतेऽधिकम्[५] ॥
एवं कृते अपि[६] सद्य तद्ध्रदस्य समन्ततः ।
जलशान्तवभूवेस्य जलस्कन्धस्य पूजनात् ॥
ततः विष्णुशिवशक्रैः ब्रह्मादिदेवतागणैः ।
पूजितं शततं तस्या पादाब्जे च नमस्कृता ॥
इन्द्रो यमश्च वरुणः कुवेर हुतभुगपि ।
नैऋत्य वायुः इशश्च अध ऊर्द्धं तथा अपि ॥
दशभिर्लोकपालैश्च इत्थं चत्वार राजिकैः ।
त्रयस्त्रिंशादिभिरन्यैः नाकैश्च तत्र आगताः ॥
शान्ततीर्थजले स्नात्वा खगाननां हि पूजितम् ।

---

१ A सिञ्चयन् B सिञ्चयेत् । २ B पुनः । ३ A त्यक्त्वा सज्ञातं D त्यक्त्वा सज्ञानं । ४ B कृतं किल । ५ B लभ्यते अपि । ६ B omits एवं कृते अपि ।

प्रतिदिने प्रतिमासे पूजयामासुः गौरवम् ॥
मान्दारवैरपि पुष्पैः महामन्दारवादिभिः ।
दिविजैः पारिजातैश्च पूजयामासुः पुष्पकैः ॥
वज्रोदकाञ्जलिं पित्वा स्व स्व गणैः परिवृताः ।
देवा नागाश्च सर्वे च शेवितं तत्र सर्वदा ॥
श्रावकैर्भिक्षुणीभिश्च प्रत्येकैर्जिनसेवकैः ।
बोधिसत्त्वैर्भिक्षुभिश्च भवन्ति पूजितं सदा ॥
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्चापि विशेषतः ।
अनेगैर्देशजैर्वापि अत्र नेपालदेशजैः ॥
चतुर्वर्गैश्च मानुष्यैः अनेगैर्गणजातिभिः ।
भवन्ति पूजितं तस्या नमस्कृत्वा प्रतिदिने ॥
यः कश्चि मार्गशीर्षस्य कृष्णपक्षे शष्ठे तिथौ ।
सुस्नात भक्तच्छेदी च भूत्वा पोषधसंयमी[1] ॥
लक्षापाठादिनिरतः सद्धर्माध्ययने श्रमः[2] ।
रात्रौ जागरणं कृत्वा नानाविधिभिः पूजितम् ॥
पुष्पैर्धूपैश्च दीपैश्च गन्धैर्नैवेद्यकैरपि[3] ।
मद्यैर्मांसैः तथा पिष्टैः पानैश्च लेह्यकैरपि[4] ॥
इत्यादि विधिभिस्तस्यै[5] ढौकितेन च पूजितम् ।
मानवैर्मानवीभिश्च अहर्निशं पुनः मुदा ॥

---

१ A D सुस्नानं भंक्तछेदीव भूत्त्वा पोषधसंयनी । २ A D लक्षा च दिनीरतः मचर्म्माध्ययने श्रमः । ३ D पुष्पैर्धूपैस्च गन्धैस्च दीपनैवेद्यादिकैरपि । ४ A वानैः पानैस्च लेह्यकैः । ५ B तस्मिन् ।

मार्गशीर्षे कृष्णपक्षे नवम्याञ्च विशेषतः ।
उत्तमं फलसम्प्राप्ता लभ्यते[१] मानवादयः ॥
एतद्दिने च रात्रौ च पूजायास्तु महाफलम् ।
मञ्जुदेवेन तत्पूज्यं पूजायास्तु दिनं भवेत् ॥
पूजया च प्रतिमासे नवम्यां तिथिसंज्ञके ।
[२][पूजितञ्च भवेन्नित्यं लभ्यते मध्यमं[३] फलम् ॥
प्रतिमासे चतुर्द्दश्यां कृष्णपक्षस्य रात्रिके[४] ।]
तत्पूज्यं मानवीभिस्तु वाद्रितं[५] लभ्यते कृतम् ॥
निशि जागरणं कृत्वा प्रातर्दानं यथाक्षमम्[६] ।
दत्वा स्नात्वा परावृत्य शुचिवस्त्रं विधावित[७] ॥
मानव्य मानवाध्यायि[८] इत्थं कृत्वा काले दिने[९] ।
ईप्सितं फलसम्प्राप्ता ते मोक्षमधिगच्छति ॥
वज्रोदकं दशम्यां तु ये पिवन्त्यञ्जलित्रयं[१०] ।
मानव्यमानवाश्चापि वाञ्छितं फललप्स्यते[११] ॥
अष्टाक्षणविनिर्मुक्तं क्षणदुर्लभमाप्नुयात् ।
धर्म्मार्थकाममोक्षं त बोधिज्ञानञ्च उत्तमम् ॥

अपिच ।

तीर्य्यन्नरकप्रेतञ्च दीर्घायुषो म्लेच्छामराः[१२] ।

---

१ B भवन्ति । २ B omits the portion bracketted.
३ C उत्तमम् । D मण्डलम् । ४ A D एत्रिके । ५ A वाद्दितम् ।
६ D यथाक्रमम् । ७ D विधाचित । ८ B स्वापि ।
९ B सुपूजितम् । १० A पिवन्तं चलित्रयम् । D पिवन्त चरित्रयम् ।
११ B लभ्यते फलम् । १२ D दीर्घायुर्म्लेच्छनिजराः ।

बुद्धकान्तारौ मृथ्यादृक मूकटाष्टा विचक्षणाः ॥
चत्वारश्च महाराजा त्रायस्त्रिंशास्तथा अपि ।
यामाश्च भूषिताश्चापि निर्म्माणरतयस्तथा ॥
निर्म्मितवशवर्त्यादि कामावचरास्तथा अपि ।
रूपावचराश्च देवाश्च आरूप्यावचरा अपि ॥
सर्व्वे च नाकजा देवा काले वेले समागताः ।
आगताः सगणा देवाः तस्याः पूज्यं कृतं कृतम् ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च अन्यदेशजाः ।
सदा सदा समायाताः तस्याः पूजा प्रचक्रु च ॥
पूर्वाच्च दक्षिणाच्चापि पश्चिमादुत्तरादपि ।
ईशादग्नेर्नैऋत्यादायव्याच्च समागताः ॥
दशदिग्भ्यः समायाताः स्त्रियश्च पुरुषा अपि ।
अत्यर्थं गौरवेणापि तस्याः पूजा कृतं भवेत् ॥
गन्धर्वाः किन्नरा यक्षाः भूताः प्रेताः पिशाचकाः ।
खगा डाकिन्य शाकिन्य[1] रात्रौ रात्रौ प्रपूजितम् ॥
वेमचित्रादयो दैत्याः किङ्करैः सह आगताः ।
पर्व्वते च[2] दिने काले समायाताः पुनः पुनः ॥
स्त्रियश्च पुत्रपौत्रादि दाशकदाशिकादिभिः ।
भट्टवराग्रनैगमैः[3] काञ्चुकीभिर्परिवृतः[4] ॥

---

१ A omits शाकिन्यः । २ D पर्व्वतच्च ।
३ D ०नैगंमैः । ४ D परिवृता ।

[[१]पुष्पं धूपञ्च गन्धञ्च दीपं नैवेद्यकमपि।
तत्रागता समागत्य तस्या पूजाञ्च कुर्व्वते॥
समुद्रेषु नागराजा सर्व्वैः नागैः परिवृतः।]
[२]रत्नानि विविधा गत्य तत्पूजाय समागताः।
इत्थं च स्वर्गजा लोकाः मानुजादय मर्त्त्यजाः॥
पातालजापि सर्वे च पूजितञ्च दिने निशि[३]।
पञ्चोपचारविधिभिः तस्ये[४] पूजा कृतं भवेत्॥
स्वस्वभचानि वस्तूनि ढौकितञ्च मुदा अपि।
नाकजैरमृतञ्चापि[५] मर्त्त्यजैर्मर्त्त्यभोज्यकम्॥
पातालजैस्तद्योग्यं[६] च मुदा तस्यै च ढौषितम्[७]।
इति पूज्ये[८] कृते सर्वे तस्या प्रशादकं मनु[९]॥
वज्रोदकं पिवेत्सर्वैः स्वर्ग मर्त्यत्रिलोकजैः।
तत्प्रशादं पिवेद् येऽपि ते मोक्षमधिगच्छति॥
[[१०]अष्टाक्षणं विनिर्मुक्तं पञ्चाहन्तर्य्यकमपि।
इति कृत्वा च सर्व्वेपि तत्क्षणात् ज्ञान प्राप्यते॥
वाञ्छितं फलसम्प्राता ते मोक्षमधिगच्छति।]
इति कृते गुरुः शास्ता मञ्जुदेवस्य सुधीमान्[११]।

---

१ B has these three additional lines.

२ D रत्नादि विविधान् गत्य। ३ D दिनेदिने।

४ B तस्याः। ५ A नाकजै रमनवापि। ६ B D तद्भोग्यञ्च।

७ A टौपितम्। ८ B पूजा। ९ D प्रशातकं ननु।

१० B has these three additional lines. ११ D सुबुद्धिमान्।

तस्याश्च परिशोभार्थं इत्थं वनं प्रकाशितम्[१] ॥
चम्पकादिभिः पुष्पैश्च पुष्पवृक्षैः प्रपूरितः[२] ।
गन्धर्वेण ससंयन्त्रैः[३] नानापुष्पैः सुमण्डितम् ॥
स्वादुसुगन्धिसुरसैः फलवृक्षै सुमण्डितः ।
अनेकैः फलजैः वृक्षैः अत्यार्थै[४] च प्रपुरितम् ॥
स्कन्धैः पत्रैः[५] सविशितैः शोभितं तत्र वृक्षकैः ।
नानावर्णैः सुसंयुक्तैः विचित्रैर्मधुरैरपि ॥
ओषधिविविधैर्जातैः मानातिपरिवृतैः[६] ।
तत्प्रदेशे समन्तेन पूरितं शोभितं भवेत् ॥
मनशिरादिभिर्धातु[७] नानारत्नैः सुपुरितः ।
विशेषैर्रत्नवृक्षैश्च समन्ततः प्रपूरितः ॥
सिंह[८] व्याघ्रादिभिर्जातैः अनेकवनजन्तुभिः ॥
वाशितं सततं कालं गोपुच्छपर्वतेऽपि च[९] ।
शुकशारिक[१०] हंसैश्च मयुरैश्चटकैर्वकैः ॥
खेचरादिभिर्जन्तुभिः इत्थं तत्रैव वाशितम् ।
शाखामृगादिभिः सर्वैः जन्तुभिश्च विशेषकैः[११] ॥
वासितं सततं कालं गोपुच्छपर्वतमिव ।
क्षेत्रपाला[१२]दयनागाः चैत्याः शिवाश्च संस्थिता ॥

---

१ B विनिर्म्मितम् । २ D प्रपूरितम् । ३ B D गन्धवर्णसुसंयुक्तैः । ४ B रत्यर्थश्च । D अभ्यार्थे । ५ A पत्रैः । ६ B नानाजातैः परिवृतैः ; D नानाजातिपरिवृतैः । ७ A शिरादिभिः । ८ A सिंहा० । ९ B पर्व्वतमिव । १० A ०शालीक । ११ D विशेषतः । १२ A D क्षत्र० ।

भयामेघाश्च सिद्धाश्च संस्थिता तत्र सर्वदा ।
अष्टाभिर्मातृकाभिश्च कुमारगणनायकैः ॥
भैरवादिभिः गणैश्च देवताभि सदास्थितः[१] ।
योगिभिर्योगिनीभिश्च खेचलैः भुचलैरपि ॥
डाकिनीभिः शाकिनीभिः तत्र च वासितं सदा ।
स्वर्गजैरपि देवैश्च मर्त्त्यजैरपि मानुषैः ॥
पातालजैश्च सर्व्वैश्च[२] वासितं तत्र सर्वदा ।
गोपुच्छपर्वते सर्वे देवा भवेयु वासिताः ॥
तथास्मिन्वने[३] देवाः वासितं सर्वदा अपि ।
त्रयत्रिंशादिलोकेषु सर्वे लोका प्रकाशितम् ॥
गुणेन च पवित्रेण गोपुच्छपर्वतमिव ।
कृतमित्थं ततो तेन गुरु मञ्जुदेवेन च[४] ॥
मञ्जुश्री पर्वत सः श्रीः गुरुस्तरितमाययौ[५] ।
ताभ्यां सार्द्धं स आचार्य्यः मञ्जुश्री पर्वते वसन्[६] ॥
शुभेन च सुखेनापि तत्र भवति सुस्थितम् ।
ध्युषितत्वात् मञ्जुदेवः प्रदेशेऽद्यापि आख्यया ॥
मञ्जुश्री पर्व्वते लोकय पवित्रे ख्यापिते अपि[७] ।

---

१ D भैरवादिभिः देवैश्च गणैर्युक्तः सदा स्थितः । २ A omits सर्व्वैश्च, D सर्व्वेऽपि । ३ B तथैवास्मिन् वने वनाः, D तथास्मिन् पर्व्वते । ४ D ०देवतेन च । ५ B D गुरुस्त्रिभ्यां समाययौ । ६ D वसत् । ७ A मञ्जुदेव श्रीपर्वते लोके त्रैलोक्य पविख्यापिते अपि । B लोके त्रिलोकेऽपीति ख्यातवान् ।

[1][एवं मैत्रेयास्य काले विश्वस्य च अर्हतः।
मञ्जुश्री प्रतिरूपेण आचार्य्येण विशेषतः॥
तत् ह्रदस्य समन्ताच्च परः संशोधिते अपि।]
वसुधामयतां कृत्वा ह्रदभुमि समन्ततः॥
सिंहासने मणिमये सुरसिद्धि वन्द्य[2]
ये आवयन्तमसमं[3] शंभुजोनुभावम्।
संपुजितो सुरसुराहितुरङ्गतुण्डैः[4]
संतिष्ठन्तै[5] विविधरत्नविभुषिताङ्गः॥

इति श्रीमति बृहत्स्वयम्भूपुराणे गोशृङ्गपर्वते स्वयम्भूचैत्यभट्टारकोद्देशे छन्दोत्पादोनाम तृतीयोऽध्यायः॥

१ B has these three additional lines. २ B वन्द्ये।
३ B ये आवयन्ति असमं। ४ B ०वृन्दैः। ५ D सन्तिस्ठते।

# चतुर्थोऽध्यायः ॥

अथ मैत्रेय वक्ष्यामि ग्रामञ्च निगमादिकम्[१] ।
राजधानीञ्च[२] राष्ट्रञ्च नगरं पुटभेदकम् ॥
सुभिक्षं[३] रमणीयञ्च ऋद्धं[४] स्फीट क्षेम तथा[५] ।
आकीर्णजनमानुष्यं अनेकशुभपूरितम् ॥
अनेकजनसम्पूर्णं नानागुणविभूषितम् ।
ब्रह्मभिः क्षत्रियैर्वैश्यैः[६] शूद्रैश्च अन्यजातिभिः ॥
दासिभिर्दासकैश्चापि अमात्यैर्नैगमैरपि ।
सर्वलोकैः सुसम्पूर्णं मङ्गलैश्च प्रपूरितम् ॥
इति उपद्रवादीञ्च[७] न जातु[८] विद्यते पुनः ।
स्वर्गमर्त्त्ये च पाताले तत्सादृश्यं न[९] विद्यते ॥
यदा भवन्तदुद्देश्यं[१०] शृणु लोकाहिताय च[११] ।
सुभगाय[१२] सुभिक्षाय लोकानां हितकामया[१३]॥
पापिनां धर्म्मिने नित्यं धर्म्मिणां फलप्राप्तये ।
फलप्राप्तिनां सर्वेषां भोगाय सुखप्राप्तया[१४] ॥

१ A निर्गमादिकं । २ A राजधानि च । ३ A सुभिक्षाञ्च ।
४ D ऋद्धिं । ५ D क्षमस्तथा । ६ A वैस्यः ।
७ B D उपद्रवादी च । ८ D जातुश्च । ९ B सादृश्यं तन्न ।
१० B यदाभवत्तदुद्देश्यं । ११ A लोकादिताय च । १२ B सुभोगाय ।
१३ D ०काम्यया । १४ D फलानां प्राप्तिनां सर्व्वे भोगाय सुखप्राप्तये ।

एव मैत्रेय साधु च[१] सुष्ठु च मनसि कुरु ।
भाविष्य अपि सत्वार्थं साम्प्रतं निश्चयं शृणु ॥
इहैव कल्पे विश्वा भूः[२] निर्वृते सुगते च सः[३] ।
चतुर्वर्षसहस्राणि प्रजानामायुषि स्थिते ॥
काले दीर्घे कश्चिद्विप्र क्षेमावत्यां[४] प्रजायते ।
चतुर्वेदाङ्गविन्नाथ ब्रह्मज्ञानविदाम्बरः ॥
ऋग्यजुःसामाथर्वेदं[५] चतुर्वेदं सुपारग ।
सर्व्वेषां[६] लोकानां एकः शास्ता सः सद्गुरुः[७] ॥
[८][अनेकमानवानाञ्च गुरुः शास्तैकनायकाः ।
क्षत्रैयवैश्यशूद्राणां सर्वेषां हि जगद्गुरुः ॥
अग्निहोत्री दयी शीली नेमी वीर्य्या पराक्रमी ।]
तद्भुवनेषु सर्वेषु पितामहमिव स्थितः ॥
तेन पत्नी गृहीत्वा तु[९] सत्सती पुरुषव्रती ।
दयीशीलीवतीवीर्य्या[१०] ध्यानी प्रज्ञापि पालिनी ॥
पत्न्यासह असौ विप्रः धर्मात्मा धर्मवत्सरः[११] ।
अग्निञ्च कारयामास अत्यर्थं विधिविस्तरैः ॥

१ D एवं मैत्रेय साधुश्च । २ A विश्वभूः निर्वृतेश्च स सुगते ।
३ B निर्वृते च गुरुर्गते । ४ A क्षमावत्या । ५ D सामाथर्ववेदं ।
६ A D omit सर्व्वेषां । ७ D adds नायका प्रभु ।
८ B D has these three additional lines.
९ A गृहीभ्यां तु । १० A ०वक्री० । B दयाशीलीवतीवीर्य्यौ ।
११ D ०वत्सलः ।

[1][तस्य पत्न्याः प्रसूतस्य पुत्रं लक्षणमण्डितम्।
देवपुत्रमिव साक्षात् तेजसा च श्रिया अपि॥
द्वात्रिंशल्लक्षणधर अशीति चानुव्यञ्जनैः।]
अत्यर्थं शोभितं गात्रं सहसूर्य्यांच[2]न्द्रमात्॥
सर्वेषामपि लोकानां ज्येष्ठः श्रेष्ठः वङ्गनायकः[3]।
सर्वज्ञश्च जगन्नाथः क्षीरनिधाविव चन्द्रमा॥
देवानां च मनुष्याणां दैत्यानां च तथा अपि।
जलाशया[4]त्समुत्पन्नकमलासनमिवाभवत्॥
गौरवेण च सर्वेषामादरेण विशेषतः।
गुरुभावेन सर्वेण पूजित[5]मानितं सदा॥
[6]ब्रह्म-विष्णु-शिव-शक्रैः पूजितं मानितश्च सः[7]।
नानागुणविभूषाङ्गी बोधिचर्य्या[8]प्रचारकः॥
चत्वारश्च महाराजैः त्रायत्रिंशैरपि तथा।
यामेशः तुषितेशोऽपि रतीशो वशवर्त्तीशः[9]॥
एते च देवराजानः स्वस्वगणैः परिवृतः।
समायाताः सपूज्येन पूजितं पादपङ्कजे॥
कामावचराश्च सर्वे ये[10] रूपावचरा[11]स्तथा अपि।
आरूपावचरा येऽपि[12] तत्पादौ च प्रपूजितम्॥

---

१ B D have these additional lines.    २ B सहस्रसूर्य्यात्। D सह सूर्य्या च चन्द्रमा।    ३ A वन्तनायकः। D श्रेष्ठस्च नायकः।    ४ A जलशयनात्। ५ D पूजितम्। ६ A D ब्रह्मा। ७ A मानित च सः। ८ B ०चर्य्यं०। ९ A ०वन्तीशः। D वशवर्त्ति च। १० B D कामाचराश्च सर्व्वे च। ११ D रूपाचराः। १२ B येऽवि। D आरूप्यावचरा येऽपि।

नामेन[1] क्रकुच्छन्दोऽसौ सर्वज्ञश्च दयांवितः ।
अथ्यागारं[2]परित्याज्य सम्बोधिज्ञानमाप्नुयात् ॥
शिरीषवृक्षमाश्रित्य तृणासने प्रतिष्ठितः ।
समाधीनाञ्च अथासौ[3] समाधिं विदधेय[4] सः ॥
ऋजुकाय प्रणिधाय स्मृतिं च उपसंस्थितम्[5] ।
वज्रासनसुसंस्थिता बोधिज्ञानमवाप्नुयात् ॥
सम्यक्सम्बुद्ध सो अर्हन्[6] षड्भिज्ञश्च तथागतः ।
सर्वेषां दुःखितां[7] नाथः दुःखार्णवसुपारगः ॥
अतीतानागताबुद्ध प्रत्युत्पन्नानाञ्च अपि[8] ।
सर्व[9]तथागतानाञ्च सर्वज्ञानां विशेषतः[10] ॥
[[11]ध्यानिनां योगिनां मध्ये तपस्विनां विशेषतः ।
समाधीनाञ्च सर्व्वेषां एकः श्रेष्ठश्च नायकः ॥
समाधीनाञ्च सर्व्वेषां सर्व्वज्ञानविशेषतः ।]
एकः श्रेष्ठः गुरुः शास्ता क्रकुच्छन्दस्तथागतः ।
सिद्धविद्याधरर्षीणां मध्ये शास्ता जगद्गुरुः ॥
सर्व्वेषां देवतानाञ्च मर्त्त्यजानां[12] विशेषतः ।
ब्राह्मणानां वैष्णवानां शैवानाञ्च तथा अपि ॥

---

१ D मन्येन । २ B पूज्यागारम् । ३ B अग्रसौ । D समाधीनामथासौच । ४ A विदधय । ५ B स्मृतिञ्च उपसंस्थितः । ६ A अर्हन् । ७ D दुःखिता । ८ D प्रत्युत्पन्ना तथा अपि । ९ D सर्व्वे । १० B समाधिं धृतविग्रहः । ११ B has these additional lines. १२ A मत्यजानां ।

सर्व्वेषां चापि शैवाना[1]मेकः शास्ता जगद्गुरुः ।
बुद्धानामपि धर्म्माणां सङ्घानाञ्च तथा अपि ॥

तथा ।

सर्व्वेषामपि बौद्धानां एकश्रेष्ठजगद्गुरुः ।
चतुर्णामपि राजानां त्रयत्रिंशेश्वरस्य च ॥
यामेशतुषितेशस्य निर्म्माणरतीशस्य च[2] ।
निर्म्मितवशवर्त्तिस्य रूपावचराणाञ्च तथा ॥
आरूपावचराणाञ्च देवानां नायको गुरुः[3] ।
ब्रह्मक्षत्त्रियवैश्यानां सच्छूद्राणाञ्च मानुषाम् ॥
सर्व्वेषामपि सत्त्वानामेकनायकसद्गुरुः ।
मर्त्त्यानामपि लोकानां पातालानां तथा अपि ॥
सर्व्वेषां त्रयलोकानां सर्व्वज्ञनायको गुरुः[4] ।
ज्योतिपालो[5] बभूवाहं तदाराधनशुद्धधीः[6] (?) ॥
अवैवर्त्तिक यश्च[7] बोधिसत्त्व सुबुद्धिमान् ।
बोधिज्ञानप्रचाराणां शिष्यानां नायक[8] सुधीः ॥
सर्व्वज्ञ[9]कल्य सर्व्वेषां एकशिष्य मुनेरपि ।
सर्व्वेषामपि शिष्याणां सह एकाकी नायकः[10] ॥

१ C सेवानाम् । २ D निर्म्माणरति ईश्वरस्य । ३ A चको गुरुः C सको गुरु । ४ B ०नायकगुरुः । ५ B ज्योतिरूपा । ६ A D सद्धधीः B सूषधीः C सद्धधी । ७ B अवैवर्त्तिकतिर्य्यस्य । ८ D नायकः । ९ D सर्व्वज्ञः । १० B अहम्, एकाकिनायकः ।

क्रकुच्छन्दस्य नाम्नस्य[1] सर्वज्ञस्य च धीमतः[2] ।
पिण्डपात्रादिभिः पूज्यैः शयनासनभैषजैः ॥
शेवाञ्च कारयामास अत्यर्थं विविधैश्च सः[3] ।
यत्र यत्र प्रगच्छन्ति क्रकुच्छन्द तथागतः ॥
तत्र तत्र च[4] गच्छामि तत्पृष्ठतः सशिष्यकैः ।
यदा यत्र प्रगच्छन्तिः क्रकुच्छन्दः सशिष्यकैः ॥
मर्त्यलोके विशेषेण सर्वत्र भुवनेष्वपि ॥
सशिष्यैः सगणैः सार्द्धं भिक्षुभिक्षुण्युपाशकैः ।
बोधिसत्त्वैर्महासत्त्वैः स्थविरस्थविरादिभिः ॥
राजामात्यैः सपौरैश्च जिनशिष्यैरुपाशकैः ।
मर्त्यजै सर्व्वलोकैश्च[5] पृष्ठतश्च समन्वितः ॥
क्रकुच्छन्द जगच्छास्ता सर्वज्ञश्च दयान्वितः ।
सर्वेषां मर्त्यलोकानां धर्मं दिदेश नायकः ॥
प्रथमं चतुर्महाराजानां कायिकाना[6]मथापि च[7] ।
ततश्चापि त्रयत्रिंशे यामायां तुषितावपि ॥
मानरतौ च शर्वलोका कामावचराणामपि[8] ।
रूपावचराणां सर्वेषां आरूप्यावचराणा[9]मपि ॥

१ B नामस्य । २ A D धीमताः । ३ B कारयामासुरत्यर्थं विविधैः स तम् ।
४ A omits च । D स । ५ A D स्वलोकैश्च । ६ B चत्वारराजा कायिकानाम् । ७ A D मथोऽपि च । ८ B D वशवर्त्ती कामाचराणां च अपि । ९ B D रूपाचराणां and आरूप्याचराणाम् ।

सर्वतस्त्रयस्त्रिंशेषु देवानां साप्सरोगणा[१]।
एतेषामपि सर्वेषां धर्मं देशयति नायकः॥
अरभध्वं[२] निष्क्रामत युज्यध्वं[३] शम्भुशासने।
धुनीत मृत्युनः सैन्यं तड़ागारमिव कुञ्जरः॥
यो ह्यस्मिं धर्मविनय अप्रमत्तश्चरिष्यति[४]।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥
दिवौकसा अथ सर्वे प्रफुल्लवदनान्विताम्।
तद्धर्मञ्च प्रतिश्रुत्वा सर्वे हर्षसमाकुला॥
ततस्ते पूजयामासुः[५] क्रकुच्छन्दं तथागतम्।
प्रसन्नमनसा भूत्वा पुष्पाञ्जलिं चिपेत् मुदा॥
मान्दारवैश्च पुष्पैश्च महामान्दारवैस्तथाः[६]।
पारिजातैश्च पुष्पैश्च नागजैः पुष्पकैरपि॥
चन्दनचूर्णरञ्जिभिः[७] सुगन्धैः केशलयुतैः।
एतैस्ते पूजयामास क्रकुच्छन्दं जगद्गुरुम्॥
अमृतादिविविधाभोग्या क्रकुच्छन्दौ[८] मुदा पुनः।
क्रकुच्छन्दाय भक्त्या ते[९] सशिष्येभ्यः ददुः पुनः॥
इति कृत्वा सर्वदेवा[१०] प्रणिपत्य पुनः पुनः।
पञ्चाष्टाङ्गेन योगेन[११] प्रदक्षिणादिकं कृतम्॥

---

१ B ०गणाम्। २ D आरभध्वं। ३ A पुणध्वम्। D युयध्वं।
४ A अमलश्चरिष्यति। ५ A D पूजयामास।
६ B महामान्दारवादिभिः। ७ A चन्दनचूर्णं रञ्जिभिः। ८ B वस्त्रौ ददौ।
९ B भक्तास्ते। १० B ०देव। ११ A पञ्चाष्टांगिनप्रणाम०। D प्रणाम०।

केचित्पञ्चप्रणामेन केचिदष्टाङ्गेनापि
केचित्प्रदक्षिणाञ्जलिं प्रणिपत्य पुनः
इत्थं ये नाकजा सर्वे मोहिता[१] हर्षित
आगता स्वस्वक्षेत्रात् तस्मै च पूजनं कृतम् ॥
अथापि क्रकुच्छन्दोसौ सर्वज्ञस्य दयान्वितः ।
तस्मात् स्वर्गाच्च पातालं प्रगच्छन्ति च मर्द्दिना
सर्वै[२] शिष्यगणैः सार्द्धं य[३] स्वर्गं प्रगच्छति ।
तथा सर्वैश्च तैस्सार्द्धं पाताले समगच्छति[४] ॥
पातालेषु च सर्व्वेषु[५] भुवनेषु विशेषतः ।
अन्वाहिण्डो[६] विशेषेण धर्म्मं देशयति नायकः ।
भो भो पातालजाः सर्वे चिरत्नशरणं कृता[७] ॥
प्रहाय सर्वपापानि वः स्वर्गं प्रगच्छति ॥
नमो बुद्धाय धर्म्माय संघाय शम्भुवे अथ ।
पातालजाः कृतं येऽपि ते स्वर्गमधिगच्छति
इति कृत्वा क्रकुच्छन्दः प्रत्यागतः सशिष्यकैः ।
पातालात् मर्त्यलोके च सर्वत्र भुवनेषु च[८] ॥
यदात्र भगवान्च्छास्ता विजहारोपच्छन्दके[९] ।
सुदुर्जया भुः माख्याते नेपालेमण्डले अपि[१०] ॥

---

१ B मोदिता । २ A D सर्व्वैश्च । ३ B omits य । ४ B पुनग च्छति ।
D समधिगच्छति । ५ A omits च सर्व्वेषु । ६ A हवा हखडो ।
D भवाहिखडो । ७ B सर्व्वैः......कृतम् । ८ A D भु गतः ।
९ B यदा तु भगवाञ्छास्ता विजहारापच्छन्दके ।
१० D सुदुर्ज्जयाभूमाख्याते नेपाले चापि विश्रुता ।

पद्मगिरौ पर्वते च स्वयम्भू[1]दर्शनाय च ।
वन्दनाय च पूजाय क्रकुच्छन्दस्तथागतः ॥
बहुशिष्यगणैस्सार्द्धं भिक्षुभिक्षुणुपाशकैः ।
बोधिसत्त्वैर्महासत्त्वैः स्थविरस्थविरादिभिः ॥
क्षमावत्यां[2] नगर्य्यास्तैः सर्वैः सार्द्धं समागतः ।
अष्टमीचन्द्रमाकारैः क्रकुच्छन्दस्तथागतः ॥
गरुत्मानिव[3] पक्षिभिः राजहंसैः परिवृतः ।
शिष्यैः सह समायातः खपथेन जगद्गुरुः ॥
अचरैः सर्वलोकैश्च देवैः नागैश्च मानुषैः ।
नानापूज्यादिहस्तैश्च प्रत्युद्गच्छत्ययं मुनिः ॥
क्रकुच्छन्दोऽपि सच्छास्ता स्वागतः[4] शम्भुसन्निधौ ।
पद्मां च क्रमतेनापि स्वयम्भूदर्शनाय च ॥
अथ नेपालजैः सर्वैः सुगतपादपङ्कजैः ।
पूजयामासु इत्यर्थं गौरवेन पुनः पुनः ॥
पाद्यैः गन्धैश्च पुष्पैश्च लाजाक्षतैस्समन्वितैः ।
क्षिप्तयामास अञ्जलिभिः तस्मै च सुगताय च ॥
केचिद्गन्धजलैः शिक्तं मार्गञ्च शोधितं ननु ।
केचिद्धूपं प्रधूपन्ति अग्रतस्य[5] समागताः ॥
चामरैर्व्यजनैः केचित् वीजयन्त तथागतम् ।

---

१ A स्वयम्भूः । २ B D क्षेमावत्याम् । ३ A C D गरुड़मान् ।
४ B दागतः । ५ B अग्रतस्च ।

नाना वाद्यन्ति विजयामास केचिच्च स्वम्भुवे[१] ॥
अथ शास्ता क्रकुच्छन्दस्तं शम्भूं[२] दर्शनं कृतम्।
नमयामास अत्यर्थं अञ्जलिं शिरसा वहन्[३] ॥
ततः सर्वेऽपि शिक्षा च भिक्षुण्यः भिक्षवस्तथा।
उपासकोपासकाश्च स्थविराद्यः श्रावकाः ॥
पुष्पैर्धूपैश्च गन्धैश्च पूजितं तं स्वयम्भुवम्।
गाथाश्चापि पठेत्सर्वे चकार स्तुतिमादरम्[४] ॥
अथ सर्वेऽपि शिक्षाश्च प्रणिपत्य पुनः पुनः।
[[५]पञ्चाष्टाङ्गेन योगेन शिरसाञ्जलिमावहन् ॥
बहुधा प्रदक्षिणाञ्चापि चकार च स्वयम्भुवे।
शतसहस्रसंख्याभिः बहुभिः कालितं पुनः ॥
धारिणीमन्त्रजापादिन् स्तोत्रपाठं[६] पुनः पुनः।]
स्वयम्भुवे च ते सर्वे कारयामास गौरवम् ॥
तदात्र भगवाञ्छास्ता विजहार स्वयम्भुवः।
पर्वते शङ्खसंज्ञे[७] च पवित्रे शिखरोच्छ्रये ॥
पूर्वाच्च दक्षिणाच्चापि पश्चिमादुत्तरात्तथा।
दिशाच्च विदिशाच्चापि मार्गमपि न विद्यते ॥

१ A omits केचिच्च। C विजया च्छत्रयामास शम्भुवे।
२ B शम्भूम्। D शम्भु। ३ B बहुः। ४ B स्तुति समादरम्।
५ C omits the portion bracketted. ६ B स्तोत्रपाठ्यम्।
७ D ०संज्ञच्च।

गिरापवित्रे महत्यां नानामङ्गलकारिते[1] ।
महाप्रमाणे शोभे च त्रैलोक्यमपि कुत्रचित् ॥
तस्यां अधित्यकायाञ्च सर्व्वेषु शिखरेषु च ।
वृक्षैस्समन्तात्सङ्काण फलवृक्षैरलङ्कृतं ॥
खर्ज्जुलैः[2] कदलैः काष्ठैः कर्णिकारैः कलिद्रुमैः ।
अनेकैः विविधैः वृक्षैः समन्ततः प्रपूरितम् ॥
क्रौञ्चादि-व[3]क-शालीकैः चक्राख्यैः[4] कोकिलैरपि ।
स्नातकैः कुक्कुटैश्चापि दात्यूहैः क्रकणैरपि ॥
गृध्रैः क्रौञ्चैः पारावतैः पल्लीभिरुलूकैरपि ।
भरद्वाजैः कलिङ्कैश्च नानापक्षिभिः[5] पूरितम् ॥
शाखामृगादिभिः पुरे[6] मृगवृन्दैः सवत्सकैः ।
चमुरुभिः कृष्णशालैः गोकर्णगन्धनादिभिः ॥
सिंहैः व्याघ्रैश्च ऋषभैः वातमृगैश्च क्रोष्टुभिः ।
गौधारैः श(स)न्नैः सर्पैश्च इत्यादिवनजन्तुभिः ॥
अनेकैः शूकरैः[7] पूर्ण समन्ताद्वनजन्तुभिः ।
खेचरैर्भूचरैः कीर्णैः तत्प्रदेशे समन्ततः ॥
मुनिभिर्मुनिशिष्यैश्च सिद्धविद्याधरादिभिः ।
वाशितं शततं तत्र कैलाश इव शोभिते ॥
इत्यादिभिर्गुणैर्युक्ते संपूर्णगुणभूषिते ।

१ B D ०पूरिते ।  २ D खर्ज्जरैः ।  ३ A D क्रौञ्चादिक० ।
४ B चक्राङ्कैः ।  ५ A नानापक्षिपूरितम् ।  ६ A पूर ।
७ A वृकरैः ।

[अनेकै[१]र्भिक्षुभिस्सार्द्धं तत्र गतः स सद्गुरुः ॥
अर्द्धत्रयोदशशतैः महासत्त्वैर्जनात्मभिः ।
बहुभिर्योगिभिर्वृन्दैः वीतरागैरनेकशः ॥][२]
अनेगैर्वोधिसत्त्वैश्च बहुप्रत्येकनायकैः[३] ।
श्रावकैर्जिनशिष्यैश्च भिक्षुभिक्षुण्युपाशकैः ॥
देवपुत्रगणैः सार्द्धं ब्रह्मभिश्च महोत्तमैः ।
चतुर्भिश्च महाराजैः अहिराजगणेश्वरैः ॥
किन्नरेन्द्रैश्च दैत्येन्द्रैः गडुरैश्च महोत्तमैः ।
मनुष्यैः मनुजेन्द्रैश्च राजामात्यगणैस्तथा ॥
धनिभिः सार्थवाहैश्च पौरैश्च जिनसेवकैः ।
ब्रह्मविष्णुशिवशक्रैः अप्सरोभिः[४] मनोरमैः ॥
अत्रजैरन्यजैः[५] सर्वैः क्रकुच्छन्दोऽनुगैरपि[६] ।
सर्वैः शिष्यगणैस्सार्द्धं तत्र गच्छति सद्गुरुः ॥
क्रकुच्छन्दोऽथ सर्वज्ञ आरुरोह[७] च पर्वतम् ।
अधित्यकां च संप्राप्ता तत्राविशत् स सद्गुरुः ॥
ततः महत्याः शिलायाः[८] उत्तरे च विशेषतः ।
महाप्रमाण एकश्च गुहा अस्ति[९] च पर्वते ॥

१ A अनेगैः ।  २ C omits the portion bracketted.
३ B प्रत्येकबुद्धकैः ।  ४ A D अप्सराभि ।  ५ B अन्त्यजैः ।
६ B D मुनेरपि ।  ७ A स रुरोह ।  ८ D शिलया ।
९ A D अपि ।

सुचित्रञ्च पवित्रञ्च एकद्वारेण भूषितम्[१] ।
श्रेष्ठं ज्येष्ठं[२] मुनिःवासं कूटमिव सुशोभितम् ॥
अथ सर्वज्ञनाथो[३]ऽसौ क्रकुच्छन्दो जगद्गुरुः ।
तस्यां विवेशयामास कोष्ठ इव स्थितो मुनिः ॥
एकरात्रं सुसंपूर्णं अस्या एकं स्थितं मुनिः ।
ऋजुकाय प्रणिधाय[४] ध्यानेन स्थितविग्रहः ॥
कायेन मनसा वाचा चित्तेन एकभावनाम् ।
सर्वदुःखपरिच्छित्ति समाधिं धृतविग्रहः ॥
अथापि सर्वैः शिष्यैश्च अधिकाया समन्ततः ।
वासं कृत्वा एकरात्रं सह तथागते ननु ॥
ततः प्रभात[५]काले च गुहायां विजहार सः ।
तस्याः शिलायाः उपरि विजयामास सद्गुरुः ॥
यदा विवेश सर्वज्ञः तदा शीघ्रं समागताः ।
विश्वकर्म्मादयो देवाः स्वस्वभ्यो भुवनेभ्य च ॥
रत्नसिंहासनं गृह्य तस्योपरि प्रस्थापितम्[६] ।
क्रकुच्छन्दाय भक्त्या च सर्वायावि जनाय च[७] ॥
चत्वारश्च महाराजाः प्रत्येकञ्च ध्वजा[८]धृतम् ।
वितनोति वितानञ्च दिक्‌चतुर्षु प्र(ति)स्थिताः[९] ॥

---

१ A भूषित । २ A श्रेष्ठ ज्येष्ठ । ३ B ०बोधो ।
४ B प्रणिध्या च । ५ B प्रातः । ६ B तस्योपरि प्रथापितम् ।
७ B सवायविजिनाय च । ८ B ध्वजाम् । ९ B प्रतिष्ठिताः ।

घटश्रेणिभिस्तुवन्ति[1] प्लवन्ति च चामरैः ।
दामैश्च पुष्पमालाभिः वितनुतं शिरोपरि ॥
क्रकुच्छन्दो अथ शास्ता प्रविवेश च आसने ।
पञ्चदश्या नक्षत्रैश्च पूर्णचन्द्रमिव स्थितः ॥
तत्रापि भिक्षुभिक्षुण्यः उपाशको उपाशिकाः ।
स्थविरादिश्रावकाश्च वैत[2]रागादयो गणाः ॥
केचित्पञ्चप्रणामेन केचिदष्टाङ्गेनापि च[3] ।
केचित्प्रदक्षिणादिश्च चकार स्तुतिरा(मा)दरम् ॥
ब्रह्मक्षत्रियवैश्यादिसच्छूद्रादयशिष्यके ।
अत्रजा अन्यजा सर्वे योग्ययोग्यासने स्थिताः ॥
प्रथमं तेऽपि सर्वे च पुष्पधूपादिभिरपि ।
[4]गन्धैरसयुक्तैः[5] सर्वज्ञाय प्रपूजितम् ॥
कामावचरा रूपावचरा आरूप्यावचरा अपि[6] ।
मान्दारवादिभिः पुष्पैः पूजयामास सद्गुरुम् ॥
इन्द्रेण पृष्ठतः स्थित्वा [7][रत्नच्छत्रं ददौ मुनेः ।
ब्रह्मणा पार्श्वसंस्थित्वा व्यजनैर्वीजयन्मुनि ॥
रुद्रेण पार्श्वसंस्थित्वा चामरै वीजयन्मुनिः ।
विष्णुणा अग्रतः स्थित्वा[8]] शङ्खं ध्वनति[10] सुस्वरम् ॥

---

१ B घण्टश्रेणिभिः स्वन्वन्ति । २ D वीत० । ३ A द्व्यगङ्गनापि च । ४ B दीपैः । ५ D रसै युक्तैः । ६ B D omit व in all the three names. ७ C omits the portion bracketted. ८ B व्यञ्जणैः । ९ A स्थितः स्थित्वा । १० A प्रध्यति, D प्रध्वनति ।

इत्थं पूजाञ्च भावेन चकार सर्वदेवताः।
अस्मिंश्च पर्वते शृङ्गे स्थिताः भवन्ति नाकजा॥
एतैस्तैः पर्षदं कृत्वा परिवृत्यः पुरस्कृतः।
सभाञ्च कारयामास शिष्यैस्तत्र तथागतः॥
अथ सर्वज्ञनाथोऽसौ सत्त्वानाञ्च हिताय च।
सुखाय च सुभोगाय मोक्षाय सर्वदा पुनः॥
अपुण्यानां पुण्यार्थाय पुण्यानां फलप्राप्तये।
फलप्राप्तिनां सर्वेषां सौगताय सुनिश्चयम्॥
सर्वसंसारदुःखानां अर्णवे[1] परिशोषणम्।
देसयामास सद्धर्मं तस्मिं च पर्षदि ततः[2]॥
यूयं सर्वेऽपि शिष्याश्च श्रूयतां भिक्षुभावतां।
एवं येन कृतं येऽपि[3] ते नरा मोक्षगामिनः॥
शृण्वन्तु साधवः शिष्याः सुष्ठु च[4] मनसि कृताः।
कुर्वन्तु निश्चयतेऽपि यूयं मध्ये च भाषिष्ये[5]॥
एवं येन कृतं पर्षत् प्रव्रज्याग्रहणे मतिः।
तेन दुःखं न प्राप्नोति संसारार्णवदुःखजम्॥
भिक्षुभावेन च[6] सर्वेषां धर्म्माणां परमं पदम्।
ज्ञानानां परमं ज्ञानं[7] मोक्षाणां वर मोक्षदम्॥

१ D पूर्णवे। २ B D स्थितः। ३ B सर्व्वे।
४ A D माधवं शिक्षा सुष्ठे च। ५ A मायिष्ये।
६ B D ०भावश्च। ७ A D omit ज्ञानम्।

तस्मात् सर्वप्रकारेण कुरुध्वं सांप्रतं व्रतम्[१] ।
दानेन दान[२]युक्तेन शीलेन संयमेन च ॥
क्षान्त्या च क्षमारूपेण[३] वीर्य्येण विक्रमेण च ।
ध्यानेन निश्चित्तेनापि प्रज्ञाया च सुबुद्धिना ॥
इत्यादिविधिभिर्युक्तैः नेमैश्चापि सुपूरितैः ।
कृतं येन प्रव्रज्याञ्च स मोक्ष[४]मधिगच्छति ॥
मणिकनकरत्नादिभूमिक्षत्र[५]गृहाणि च ।
वसनस्वच[६]द्रव्याणि दानानि[७] विविधानि च ॥
विविधान्यन्नपानानि हिरण्यरजतानि च ।
सर्वार्थिकेभ्यो ये दद्युः दानपारमिता कृताः ॥
व्रतोपवासं निश्चय[८]नसंयमञ्च विशेषतः ।
ये सर्वा[९]कुशलं त्यक्ता[१०] शीलपारमिता कृताः ॥
क्षेमेन सर्वशत्रूषु निश्चयमपकारिषु ।
ये चापि सदयां[११] कृत्वा क्षान्तिपारमितासु ताः ॥
यस्मिन् वचसि उक्ते तु वचांसि पारिपूरकाः ।
सत्त्वेभ्यः अभयं दद्युः वीर्य्यपारमिता कृताः ॥
सर्वासु शास्त्रविद्यासु प्रजायाश्च प्रपूरकाः ।
धर्म्मं दद्युर्ये सर्वेभ्यः प्रज्ञापारमिता कृताः ॥

---

१ B मुदा । २ B दम० । ३ B ०युक्तेन । ४ B मोच्छ० ।
५ B ०पुत्र० । ६ B ०स्वप्न० । ७ B दामानि । ८ B निश्चयम् ।
९ D ये भवा । १० D लभ्य । ११ A वासि दयां कृत्वा ।
D ये चासि ।

षड्भिरित्यादिभिः पारैः सत्त्वस्य परिपूरकाः।
उपदेशञ्च ये दद्युः भिक्षुभावं पदं लभेत्॥
सोपानं स्वर्गमार्गाणां धर्म्माणां भाण्डमेव च।
छत्रञ्च तापदग्धानां बोधिराजमिव स्थितम्॥
पातालद्वारपिठितं धर्म्मद्वारमपावृतम्।
सर्वेषां नारकानाञ्च गोशीर्षचन्दनमिव॥
भूतप्रेतपिशाचानां तीर्य्यञ्चपशुजातिनाम्।
सर्वेषां पापिनां मार्गे बोधिवृक्षमिव स्थितम्॥
दारिद्रदुःखिनां मध्ये व्याधिपीड़ितानामपि।
सर्वेषां द्रव्यसौख्यञ्च[1] औषधमिव शोभितम्॥
ईदृशं गुणसम्पन्नं भिक्षुभावं पदं वरम्।
निश्चयं ये प्रकुर्वन्तः भविष्यन्ति जिनात्मजाः॥
[2]क्रकुच्छन्दोऽथ भगवान् सर्वावींच पर्षदम्[3]।
आमन्त्रयामास पुनः बोधिसत्त्वानुवाच सः[4]॥
ये केचित्कुलपुत्राश्च प्रवज्याग्रहणे रताः।
ब्राह्मणाः क्षत्रियाः वैश्याः शूद्रा वा परजातयः[5]॥
अत्र नैपालजा[6] वापि अन्यत्रजा विशेषतः।
पूर्वजा दाक्षिणाश्चापि पाश्चिमा औत्तरास्तथा[7]॥

---

१ A द्रव्यं शौख्यञ्च। D द्रव्यशौख्यञ्च। २ B क्रकुच्छन्दोऽपि भगवान् सर्व्वाविनिञ्च पर्षदम्। ३ D सर्व्वावतिञ्च पर्षदम्। ४ A ०सत्त्वा च सः। ५ C वानरजातयः। ६ D नेपालजा। ७ B दक्षिणजापि पाश्चिमादुत्तरात्तथा। D दक्षिणाश्चापि पश्चिमादुत्तरात्तथा।

अन्यदिग्जाश्च ये सत्त्वाः भिक्षुभावं सुनिश्चिताः ।
विशेषेण च नेपाले कुरुध्वं सांप्रतमपि ॥
भो ब्राह्मणाः ससत्पुत्राश्च[१] राजानः क्षत्रिया अपि ।
सपुत्राद्य वैश्याश्च शूद्राश्च सप्रजा अपि ॥
अन्यत्रजा अन्यजा सर्वे भिक्षुभावे सुनिश्चिताः ।
निश्चयं साम्प्रतं शीघ्रं कुरुध्वञ्च दयान्विताः ॥
हिमालयविशेषेण नेपाले मण्डले अपि ।
उपच्छन्दे च पीठे च सुदुर्जया स्वरूपिनी ॥
कामदे मोक्षदे चापि सिद्धिदे च विशेषतः ।
ईदृशी गुणसम्पन्ने त्रैलोक्येऽपि सुदुर्लभे: ॥
शङ्खे च पर्वते अस्मिं[२] शिलायाञ्च महत्यपि ।
प्रव्रज्या प्रतिपन्नाः स्युः धर्म्मास्तेषां गुणान्वह्नन्[३] ॥
स्वर्ग[४]मर्त्ये च पाताले सर्वेषु भुवनेष्वपि ।
ईदृशं गुणसम्पन्नं येन न विद्यते पुनः[५] ॥
यद्यच्च वाञ्छितं सर्वं तत्तत्फलं प्रलभ्यते ।
प्रव्रज्याग्रहमात्रेण अस्मिं च शङ्खपर्वते[६] ॥
इति ज्ञात्वा च मानुष्याः प्रव्रज्यां निश्चयं कुरु ।
अस्य क्षत्रस्य भावेन यूयञ्च वाञ्छितं लभेत् ॥

१ A ससुत्पुत्राश्च । २ D अस्मिन् । ३ B धन्यास्तेषां गुणावह्नन्
४ A स्वर्गमर्त्तंच । ५ B D मेरावपि विशेषेण ईदृशश्च न विद्यते ।
५ B ०ग्रहणमात्रेण अस्मिन् च गुणपर्व्वते ।

अनेकेभ्योऽपि चेत्रेभ्यः[१] सुमेरोश्च विशेषतः ।
एतच्च[२] पर्वतं नूनं देहे शीर्षमितिस्थितम्[३] ॥

अपि च ।

स्वयम्भूत्पन्नमात्रेण खगानना विशेषतः ।
अनेकै देवलोकैश्च नागलोकैश्च वासिता[४] ॥
त्रिसाहस्रमहालोके तच्छादृशं न विद्यते ।
गुणेन च पवित्रेण[५] चत्रेण[६] च विशेषतः ॥
इति मत्वा च मानुष्याः भिक्षुभावञ्च साम्प्रतम् ।
निश्चयं कुरुध्वं शिष्याः यूयं हि[७] मानवादयः ॥
मायाचित्तं परित्यज्य बोधिचित्तञ्च साम्प्रतम् ।
यथा च मर्कटजालात् मक्षिकेव पलायिताः[८] ॥
पापदेहं परित्यज्य पुण्यदेहञ्च प्राप्यते ।
सर्वेषामपि देहानां अण्डा च पक्षिण इव ॥
गृहवासं परित्यज्य नानाभोग्येन[९] पूरितम् ।
पुत्रपौत्रादिभिर्युक्तं पञ्जलाच्च[१०] शुका इव ॥
केशश्मश्रूण्यवतार्य्य काषायवसनैः[११] वृताः ।
चीवरेण च प्रावृत्त्य[१२] कुण्डिकाञ्च ददु मुदा ॥

---

१ A D चत्रेभ्यः । २ D एतच्च । ३ A नू देहेमशीषमिव स्थितम् । B नूनं देहशीर्षमिव स्थितम् । ४ A वाशिता । B वासितान् । ५ A विपत्रेण । ६ D चेत्रेण । ७ B यूयञ्च । ८ D प्रलापिताः । ९ D ०भोगेन । १० A D पजलाच्च । ११ B वशनैः । १२ A प्रावृत्त ।

पिण्डपात्रं परिगृह्य खिच्चिलीकां[१] दधुः पुनः ।
काष्ठपादं सुसंगृह्य धारिणीं पुस्तकमपि[२] ॥
भिक्षुश्रामण्रि[३]मित्यञ्च मुदा पूज्य च मानवाः ।
भिक्षुभावं कृतं येऽपि ते नरा मोक्षगामिनः ॥
अस्मिं च पर्वते नूनं ये नरा भिक्षुभावताम् ।
प्रव्रज्यां प्रतिपन्ना स्युः प्राप्तास्तेषां गुणान्बहून् ॥
भव-भङ्ग-पदे शक्ताः गताः सिद्धिं यथेच्छया ।
मानव्यमानवाश्चापि प्रव्रज्यां साम्प्रतं कुरु ॥
गृहवासं परित्यक्त्वा श्रद्धया च समन्विताः ।
भार्य्यास्नेहं परित्यज्य प्रव्रज्यां श्रद्धया कुरु ॥

अपि च[४] ।

कलत्रपुत्रपौत्रादि दासदासिकादिभिः[५] ।
कर्म्मकरादिभिः प्रेष्यैः मित्रामात्यजनैरपि ॥
सुहृद्बन्धुवर्गैश्च भातुः[६] भात्रादिभिर्जनैः ।
तैः सर्वैश्च परित्यक्त्वा[७] शुकश्च पञ्जर इव[८] ॥
वाणिज्यं कृषिकर्म्मञ्च अनेकशिल्पकर्म्मकम् ।
दासकं दासिवृत्तिञ्च तत्सर्वं कर्म्मज स्मृतम् ॥

---

१ B खिक्खिलीका । D खिच्छिरीका । २ A पुस्तकमपि ।
३ D ०सामग्रि० । ४ A D omit अपि च ।
५ B ०दासकदासिकादिभिः । D कलत्रपुत्रपुत्रादिदासदासिकादिभिः ।
६ B भातृ । D भ्रातृः भ्रात्रादिभिः । ७ B परित्यज्य ।
८ D पञ्जल इव ।

ईदृशैरगुणैर्युक्तं गृहवासञ्च भोग्यकम् ।
सम्यगेव परित्यज्य पाशच्छिन्नेव[1] पक्षिणाः ॥
गुणध्वज शृणु लक्ष[2] गृहस्थानाञ्च दोषकम् ।
प्रथमं ब्राह्मणानाञ्च वक्ष्यामि[3] तत्त्वत अपि ॥
ब्रह्मज्ञानं श्रुतिस्मृतिवेदाङ्गनीतिशास्त्रकम् ।
मानवाश्च न जानन्ति ब्राह्मणा न भवन्ति ते ॥
क्षत्रियापि च राजेन्द्र प्रमादेन च नीतिता ।
न पालितं स्वप्रजाञ्च ते राजा न भवन्ति त ॥
वैश्या अपि अथ ये च अन्नदानं न कारिताः ।
भिक्षादि याचकेभ्यश्च ते वैश्या न भवन्ति च ॥
सच्छूद्रादयः शूद्राश्च ब्रीहीनि[4] च धनानि च ।
न ददौ याचकेभ्यश्च ते शूद्रा न भवन्ति च[5] ॥

पुनरपि ।

शेवका वाणिजा येऽपि भृत्यका[6] कृषिकारिताः ।
दाशकदाशिकादीञ्च क्रयविक्रयकारिताः[7] ॥
शुरापाने रता चापि चण्डाश्च निर्गुणरताः[8] ।
शस्त्रहस्ता दण्डहस्ताः ते ब्राह्मणा भवन्ति न ॥
प्रदुःखिताः स्वप्रजाश्च अत्यर्थं पीड़िता कृताः ।

---

१ B ०च्छिन्नच्च । २ A D गुणाध्वजं शृणुध्वच्च । ३ A D पृच्छामि
४ D ब्रीहिनि । ५ A शूद्रीभवन्ति च ।
६ A न्टत्यकी, C भृत्यकी । ७ B ०कारकाः ।
८ A चण्डारिस्च निर्गुणीलताः, D चण्डारिनिर्गुणीलताः ।

एकपुत्रमिव पितरौ ते राजा न भवन्ति न ॥
प्रजाभ्यश्च दया नास्ति अत्यर्थदण्डतर्ज्जिताः[१] ।
अपालितं प्रभुवच्च तेषां धर्म्मं पलायिताः ॥
स्वयं भुक्त्वा सदा वैश्याः भार्य्यायै च प्रजाभ्योऽपि[२] ।
न ददौ गुरवे चापि भवन्ति दुःखिनश्च ते ॥
देवेभ्यो याचकेभ्योऽपि गुरवे बान्धवाय च ।
न ददौ अन्नदानञ्च भवन्त्यत्यर्थ[३]दुःखिताः ॥
सच्छूद्रादयः शूद्रा ये स्वस्वकर्षिणि वस्तुनि[४] ।
याचकेभ्यश्च देवेभ्यः ददावपि[५] कदाचन ॥
दुःखिता दुर्व्वलास्तेऽपि दरिद्रा अधना सदा ।
जन्मजन्मान्तरे चापि भवन्ति दुःखभागिन ॥
इति ज्ञात्वा च मानुष्याः यूयञ्च मानवादयः ।
निश्चयं भिक्षुभावमुपगताः सर्व्वेऽथ पर्षदि स्थिताः[६] ॥
[७][सर्व्वकामार्थदख्याते तस्मिन्न उपच्छन्दके ।
साधनेऽनुत्तरे[८] सिद्धौ त्रैलोक्येऽपि सुदुर्लभे ॥
भिक्षुभावमुपागताः[९] सर्व्वेऽथ पर्षदिस्थिताः ।]
ब्राह्मणाः चात्रयाः शूद्राः अन्ये वा परजातयः ॥

---

१ B ०वर्ज्जिताः । २ D भार्य्या चैव प्रजापि च । ३ D भवन्त्यर्थञ्च ।
४ A D कृषिणिव सुनि । ५ B ददौ नापि ।
६ B भिक्षुभावञ्चलभ्यध्वं लभ्यध्वं ननु । D भिक्षुभावञ्च लभ्यध्वञ्च परं ननु ।
७ A C omit the portion bracketted.
८ B अनुक्तते । ९ D उपागताः भिक्षुभावम् ।

तत्क्षणात् ज्ञानशस्त्रेण हत्वा रागादि[1]वैरिणान्।
सर्वज्ञसमतामेति प्रव्रज्यां कुरुध्वञ्च वः॥
अस्मिन्प्रव्रज्यामाहात्म्यं निर्द्दिश्येऽथ सः सद्गुरुः।
पर्षदि सन्निपातानां अन्येषां सर्वदेहिनाम्॥
श्रोतापत्तिफले केचित् सकृदागामिनि फले[2]।
अनागामिफले केचिदर्हत्वे च विशेषतः॥
प्रत्येक अपि बोधौ च मार्गाकारज्ञतायाञ्च[3]।
सर्वाकारज्ञतायाञ्च सर्वज्ञतायाञ्च तथा[4]॥
भिक्षुत्वं भिक्षुणीत्वञ्च[5] वैतरागं बोधिसत्त्वम्[6]।
उपासकोपासिकात्वं उत्पन्नं मनसिस्थितम्॥
ब्राह्मणानां क्षत्रियाणां वैश्यानां शूद्राणामपि।
अत्रजा[7] अन्यजाताश्च मनस्युत्पन्नसत्पदम्॥
कासाञ्चिदपि केषाञ्चित् पुरुषाणां स्त्रियामपि[8]।
सर्वेषामपि सत्त्वानां मनसिजातञ्च धर्म्मकम्॥
विंशतिशिखरमुच्चं पर्वतेन च सादृशम्।
वज्रेण इव शिला च ज्ञानञ्च स्फुरिटं[9] भवेत्॥
भिक्षुण्यां अपि भिक्षौ च वैतरागे[10] उपासिका।
उपासिकायां सर्वे च श्रोतापत्तिफले अपि॥

---

१ D रागास्त्र। २ A सकृदागामि फले, C फलेन च।
३ B मार्गाकारज्ञताख्यके। ४ B अपि। ५ A चै।
६ B D सबोधिकं। ७ D अत्रजाताम्। ८ A D स्त्रीयामपि।
९ D स्फुटिटम्। १० A वैतरागी।

सकृदागामिफले च अनागामिफले अपि ।
अर्हत्वे प्रत्येकबोधौ मार्गाकारज्ञतायाञ्च[1] ॥
सर्वाकारज्ञतायाञ्च सर्वज्ञतायाञ्च तथा[2] ।
सर्वेषां पर्षदानाञ्च इत्थं मनः प्रफुल्लितम् ॥
बोधिसत्वे महासत्वे निर्वाणिकेऽथवा[3] अपि ।
पर्षदामपि सर्वेषां पुण्यं मनः प्रकाशितम् ॥
गुणध्वजप्रमुखानां चतुर्द्दिजगणादिनाम्[4] ।
बहूनां ब्राह्मणानाञ्च उत्पन्नं भिक्षुचिन्तताम् ॥
अभयंददप्रमुखानां शतानां भूतजामपि[5] ।
वैश्यानाञ्च तथान्येषां शूद्राणामन्यजातिना ॥
सर्वेषां पर्षदानाञ्च पुण्यं मनः प्रकाशितम् ।
कायवाक्चित्तयोगेन एकभावेन[6] स्वीकृतम् ॥
अर्द्धत्रयोदशानाञ्च शतान्तं[7] पर्षदामपि ।
ब्रह्मक्षत्रियवैश्यानां शूद्राणाञ्च[8] तथा अपि ॥
सर्वेषां पर्षदामित्थं मनसि एकचिन्तताम्[9] ।
एकस्येव च सर्वेषामुत्पन्नं भिक्षुभावताम् ॥
पूर्वकर्म्मविपाकत्वात् एतेषां सर्वदेहिनाम् ।

---

१ A मार्गकारज्ञतायाञ्च, D ०ज्ञताख्यके । २ A omits च सर्व्वज्ञतायाञ्च D सर्व्वज्ञताख्यकेनथ । ३ B omits अथवा । ४ B चतुर्णाच्च, शतादिनां, D द्विजानाञ्च चतुःशतम् । ५ B त्रिशत भुमूजामपि; D त्रिशतानां भूभुजामपि । ६ B ०चित्तेन । ७ D शतानाम् । ८ A omits च । ९ A एकचित्तनाम् ।

धर्म्मचक्षुविशुद्धिं स्वां सर्वपाप[१]दुरीकृतम् ॥
अन्धेनैव चक्षुप्राप्तं जड़ेनैव वच अपि[२] ।
पङ्गवेनेव वेगञ्च रुजेनैवामृतौषधम् ॥
तेषां चित्तविशेषञ्च बोधिज्ञानसमुद्भवम् ।
क्रकुच्छन्दस्य भावेन उत्पन्नं भिक्षुभावताम् ॥
श्रुत्वाय[३] वचनं तस्य गुणध्वजप्रमुखा द्विजाः ।
प्रसन्नभूतमनसा क्षत्रिय अभयंददः ॥
ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च परजातयः ।
पुरुषा अपि केचिच्च काश्चि स्त्रीय अपि तथा ॥
सामग्रीभूता सर्वे ते आसनेभ्यः सद्दोत्थिताः[४] ।
एकान्युत्तरासङ्गं कृत्वा साम्प्रतं तत्क्षणात् ॥
केचित्प्रदक्षिणाञ्चापि चक्रुस्तस्मै पुनः पुनः ।
एकं वा त्रीणि वा पञ्च सप्तादय[५] असङ्ख्यया ॥
शतसहस्रमयुतं लक्षं कोटीस्तथा तथा ।
तथा पुनः[६] प्रमोदेन सञ्चकार प्रदक्षिणाम् ॥
ये केचिदपि शिष्याश्च अपि पञ्चप्रणामकम्[७] ।
प्रमोदेन च प्रीत्या च तस्मै च कारितं मुदा ॥
केचिच्च अपि अष्टाङ्गैः प्रणामञ्च पुनः पुनः ।
ते सञ्चकारयामास क्रकुच्छन्दाय च अपि ॥

---

१ D सर्व्वपापञ्च । २ B ०मपि । ३ A D श्रुते । ४ A D मद्दोत्थिताः ।
५ B सत्यादयः ।　　६ A omits तथा, D पुन.पुनः ।
७ A omits पञ्च ।

वज्रसाञ्जलिमावध्वा प्रव्रज्याग्रहणे रताः ।
सर्वे च पर्षदस्तेऽपि शिरसि अञ्जलिं कृताः ॥
एकचित्तेन मनसा वचसापि पुनर्मुदा ।
कायेन च प्रणामेन अञ्जलिं शिरसि वहन् ॥
पुनः पुनः प्रणिपत्य अत्यर्थञ्च मुदा अपि ।
सर्वे च कारयामासुः ककुच्छन्दाय वै अपि ॥
अथ ते पर्षदाः सर्वे गुणध्वजमुखा[१] द्विजाः ।
अभयंददप्रमुखा वैश्याः शूद्रास्तथा अपि ॥
पृथिव्यां प्रतिसंस्थाप्य दक्षिणं जानुमण्डलम् ।
एकचित्तेन मनसा चक्रुस्तस्मै विज्ञापितम् ॥
शिरसाञ्जलि[२]मावद्धा नमितपादपङ्कजे ।
वन्दित्वा चरणौ मूर्ध्ना भगवन्तमवोचतः ॥
भगवन्मुनिशार्दू(दू)ल भवतः शासने शुभे ।
वयञ्च प्रव्रजिष्यामः श्रोष्याम धर्मशासनम् ॥
एकचित्तेन मनसा ध्यानेन[३] च शुभेन च ।
कर्मणा च शुभेनापि निश्चयं भिक्षुभावताम् ॥
धारयिष्याम अत्यर्थं करिष्यामः सुनेमकम् ।
त्यजयिष्यामो[४] नाचारं ग्रहिष्याम[५] चाचारकम् ॥
भिक्षुनेमञ्च यत्सर्वं तत्सर्वञ्च पुनः पुनः ।
धारयिष्याम वयं नाथ तव पादप्रसादतः ॥

---

१ D ०प्रमुखा ।  २ D शिरस्यञ्जलि० ।  ३ A omits ध्यानेन
४ B भाजयिष्यामो ।  ५ D ग्रहिष्यामं ।

भगवन्सर्वविन्नाथ प्रसन्नो भव साम्प्रतम्।
अस्मास्वनुकम्पां कृत्वा भिक्षु[१]भावं ददाति नः॥
अनेगगुणसंयुक्तं त्रैलोक्ये दुर्लभम्[२] पदम्।
भिक्षुभावं पदं[३] श्रेष्ठं अस्मभ्यं दायतां गुरो॥
मार्गं न दृष्टे मानुष्यमार्गदृश्यं[४] करोतु नः।
भवानपि गुरो शास्ता[५] भवतश्च प्रसादतः॥
अस्मदर्थं न हि नाथ सर्वेषां दुःखभागिनाम्।
हिताय च सुभोगाय मोक्षाय सुखप्राप्तये॥
कक्रुच्छन्दोऽथ[६] भगवान् ब्राह्मणानाञ्च चेतसि।
तथैव क्षेत्रियाणाञ्च वैश्यानाञ्च तथा अपि॥
शूद्राणामपि सर्वेषां पर्षदाञ्चापि चेतसि[७]।
उत्पन्नं सर्वतोभद्रं मङ्गलेन सुभिषितम्॥
पापचित्तं परित्यज्य पूण्यचित्तपरिग्रहम्।
श्रेष्ठं ज्येष्ठं सुसम्पूर्णं चित्तञ्च भिक्षुभावकम्॥
मनसि वचसि सर्वे कर्मेऽपि एकचित्ततााम्[८]।
सर्वेषां पर्षदानाञ्च भिक्षुभावञ्च निश्चयम्॥
इति सर्वत्र भावेन सर्वेषां मनसुद्भूतम्।
तत्सर्वञ्च प्रतिज्ञातं कक्रुच्छन्दो[९] जगद्गुरुः॥
प्रव्रज्याकरणं चित्तं ज्ञात्वा तेषाञ्च सद्गुरुः।

---

१ B omits भिक्षु। २ A दुर्ल्लभं। ३ D भिक्षुभावपदम्
४ D मानुष्यमार्गदृश्यम्। ५ A D शास्त। ६ D क्रकुच्छन्दो
७ A पर्षदाञ्च चेतसि। ८ B ०चित्तता। ९ D क्रकुच्छन्दो।

गुणध्वजप्रमुखानां सर्वेषां द्विज देहिनाम् ॥
अभयंददप्रमुखानां[१] क्षत्रियाणां तथा अपि ।
वैश्यानामपि शूद्राणां सर्वेषां देहिनामपि ॥
भिक्षुभावजचित्तञ्च ज्ञात्वा सर्वज्ञनायकः ।
तेभ्यः सर्वेभ्यः शिष्येभ्यः स्वीकृतां भवति असौ ॥
ककुच्छन्दोऽथ सच्छास्ता[२] निश्चयं मनसि कृतम् ।
तानुवाच सर्वाञ्छिष्यान् गुणध्वजमुखान्द्विजान् ॥
अभयंदमुखानाञ्च[४] वैश्याच्छूद्रान्तथा अपि ।
सर्वेषां पर्षदां मध्ये प्रोवाच जगदीश्वरः ॥
भोभो शिष्याश्च यूयञ्च प्रव्रज्या कर्त्तुमुद्यताः ।
केशश्मश्रूणि संछित्वा कषाय[५]वेशनवृताः ॥
यदि यूयं प्रव्रज्याञ्च कर्त्तुकामा भवन्त्यपि ।
कुर्वध्वं साम्प्रतं शिष्याः प्रव्रज्याप्राप्तये मुदा ॥
केचिच्च ब्राह्मणाश्चापि केचिच्च क्षत्रिया अपि ।
केचिद्वैश्याश्च शूद्राश्च केचिच्च अन्यजातयः ॥
इति सर्वे च मानुष्याः शीघ्रं शीघ्रं कुरु कुरु ।
सर्वसत्त्वानुकम्पार्थं मोक्षञ्च फलप्राप्तये ॥
अथापि पर्षदः सर्वे[६] गुणध्वजमुखा द्विजाः ।
अभयंददप्रमुखाः क्षेत्रियाश्च विशेषतः ॥
वैश्याः शूद्रास्तथा अन्या हृष्टास्तुष्टाः प्रमुदिताः ।

---

१ B अभयंददमुख्यानाम् । २ D क्रकुच्छन्दो । ३ D स शास्ता ।
४ D अभयंददप्रमुखानाञ्च । ५ D काषाय० । ६ D पर्षदं सार्व्वे ।

सौमनस्यञ्च प्रीतिञ्च जाता भवन्ति सर्वथा ॥
अस्मिंश्च पर्वते शृङ्गे ककुच्छन्दस्य[1] आज्ञया।
केशश्मश्रूण्यवतार्य्य शिखाञ्च[2] च्छेदितं भवेत्॥

अपि च।

ऋद्धिना वज्रसत्त्वेन सव्यहस्ताच्च शृङ्गकात्।
स्नानार्थेन कृतं तेषामुत्पन्नं सर्वतोन्मुखम्॥
तथागतस्य ऋद्धिना[3] सव्यहस्ताङ्गुलेन च।
तेषाञ्च स्नानअर्थेन कृतोत्पत्तिश्च वाग्मती[4]॥
ततस्ते मुण्डिका[5]स्सर्वे कृतं स्नानं मुदा अपि।
प्रसादात्ककुच्छन्दस्य भिक्षुशामग्रि[6] प्रापिताः॥
तदा कुण्डिकां खिक्खिलीकाञ्च[7] पिण्डपात्रादिकमपि।
काष्ठपादश्च सर्वे ते गृहीताः श्रद्धयान्विताः॥
चीवरं काषायवस्त्रं भिक्षुशामग्रिसंयुताम्[8]।
सर्वथा सर्वं सर्वैश्च पुस्तकादिश्च धारिताः॥
इत्यञ्च कारिताः सर्वे प्रव्रज्यां चक्रुस्तत्क्षणात्।
प्रशादात् ककुच्छन्दस्य[9] प्रापिता भिक्षुभावताम्॥
इतिप्राप्तेऽथ सर्वज्ञं भिक्षव ऊचुः साम्प्रतम्।
अस्मभ्यो देहि तन्नाथ पौषधनियमं वरम्॥

---

१ D क्रकुच्छन्दस्य। २ D शिखां च। ३ D ऋद्धीना।
४ D वाग्मतीम्। ५ D मुण्डिताः। ६ D क्रकुच्छन्दस्य भिक्षुसामग्रि।
७ D खिक्खिरीकाम्। ८ D ०सामग्रिसंयुताम्। ९ D प्रसादात् क्रकुच्छन्दस्य।

किं किं प्रकारं नियमं धरिष्यामो जगद्गुरो।
धर्म्मञ्च किं करिष्यामस्त्वयक्तव्यं किं पुनः पुनः॥
अनुकम्पां[१] पुरस्कृत्य प्रसन्नो भव साम्प्रतम्।
तस्मात् सर्वज्ञ तन्नाथ शीघ्रं ब्रूहि दयां कुरु॥
पञ्चपूर्वस्थवीरादीन् स्थविरस्थविरानपि।
वैतरागान् बोधिसत्त्वान् महासत्त्वानपि तथा॥
पुनः पुनर्नमस्कृत्वा अञ्जलिं शिरसा वहन्।
विज्ञापितं सर्वज्ञाय कर्कुच्छन्दाय[२] ते पुनः॥
एवमुक्ते इति सद्य कर्कुच्छन्दो[३] महामुनिः।
सर्वेभ्यो भिक्षुभ्यः शीघ्रमुवाच नियमं वरम्॥
भिक्षवः श्रूयतां तावत् भिक्षुणां नियममिति।
निश्चयं मनसि कृत्वा कुरुध्वं चित्तसंयुताम्॥
आदौ बुद्धमण्डलञ्च ततश्च धर्म्ममण्डलम्।
सङ्घमण्डलं पश्चाच्च शरणञ्चं दिने दिने॥
इति त्रिशरणं कृत्वा ततस्तथागतान् गुरून्।
दशदिक्षु[४] स्थितान् बुद्धान्नमस्कृत्वा प्रणमितः॥

अपि च।

प्राणातिपातं प्रथमं अदत्तं दानकं तथा।
अब्रह्मचर्य्यकं वापि मृषावादन्तथा अपि[५]॥
सुरामैरेयकञ्चापि मद्यपानमपि तथा।

---

१ A D अनुकम्पा। २ D क्रकुच्छन्दाय। ३ D क्रकुच्छन्दो।
४ A ०दिक्षपि। ५ C मृषावादस्तथा अपि।

नृत्यं गीतञ्च वाद्यञ्च[१] माल्यं गन्धविलेपनम् ॥
वर्णक[२]धारणञ्चापि महोच्चशयनमपि ।
अकालभोजनञ्चापि स्वर्णरूप्यविभूषणम् ॥
एतेषां भिक्षुनेमानां दोषमेकं कृतञ्च ये ।
ते भिक्षवस्तस्माद्दोषाद्ध्रुवं गच्छन्ति दुर्गतिम् ॥
ये दुर्गतिं प्रगच्छन्त्वा बहुकल्पांश्च[३] नारके ।
अनेकान्नारकान्दुःखान् भोग्यान् कृत्वा पुनः पुनः ॥

अपि तु ।

मैथुनं परमं दोषं नियमानाञ्च भिक्षुणाम् ।
भवन्ति ये कृतं सद्य शीघ्रं गच्छन्ति नारकम् ॥
मैथुनं श्रेष्ठदोषं च[४] मैथुनं नारक[५]पथम् ।
मैथुनाज्जायते पापं मैथुनान्नारकं व्रजेत् ॥
इति मत्वा भिक्षवश्च त्यक्तव्यं मैथुनमपि ।
सर्वेषां भिक्षुनेमानां श्रेष्ठं दोषञ्च मैथुनम् ॥
यूयञ्च भिक्षव मत्वा भिक्षूणां दोषकमिति ।
दिने रात्रौ स्मृत्वा त्यक्ता यमेन गृहीतमिव[६] ॥
इत्यादिभिर्विधैर्युक्तं नियमं भिक्षुणामपि ।
अतीतानागतै बुद्धैः सर्वैरुक्तं पुनः पुनः ॥
इति प्राप्तेति सर्वे च ककुच्छन्दस्य[७] देशनात् ।
बभूवस्तत्क्षणाच्चामी पञ्चाभिज्ञस्य लाभिनः ॥

---

१ A वादितम् । २ D वर्णकम् । ३ A ०कल्पाञ्छ । ४ A omits च
५ D नारकम् । ६ A गृह्वितमिव । ७ D क्रकुच्छन्दस्य ।

तद्यथा ।

दिव्यचक्षुं दिव्यश्रोत्रं परचित्तञ्च ज्ञानकम् ।
पूर्वानुस्मृतिं ऋद्धिञ्च पञ्चाभिज्ञमिति स्मृतम् ॥
यूयञ्च अन्यशिष्याश्च पञ्चाभिज्ञपदं लभेत् ।
तेऽपि सर्वेऽपि शिष्याश्च सुखावतिगतिं लभेत् ॥
ततो दिदेश भगवान् धर्म्मान् सम्बोधिपाक्षिकान् ।
सप्तत्रिंशतिभिर्युक्तान् सर्वज्ञैरिति भाषितान् ॥
चत्वारि स्मृत्युपस्थानं चत्वारि सम्प्रहाणकम् ।
चत्वारि ऋद्धिपादञ्च पञ्चेन्द्रियन्तथैव च[1] ॥
तथा पञ्चबलञ्चापि सप्तबोध्यङ्गकमपि ।
अष्टाङ्गमार्गं आर्य्यञ्च एतान् सम्बोधिपाक्षिकान् ॥

तद्यथा ।

कायानुस्मृत्युपस्थानं वेदनायास्तथा अपि ।
चित्तानुस्मृत्युपस्थानं धर्म्माणाञ्च तथैव च ॥
इत्येवं मुनिभिरुक्तं[2] अतीतानागतैरपि ।
चत्वारि स्मृत्युपस्थानं इदं धर्म्मं सुमार्गकम् ॥
उत्पन्नधर्म्ममूलानां संलक्षणञ्च साम्प्रतम् ।
अनुत्पन्नानां[3] धर्म्माणां समुत्पादं तथा अपि ॥

---

१ B omits this line. २ A D मुनिरुक्तम् ।
३ B उत्पन्नानाम् ।

उत्पन्नानां कुशलानां प्रहाणं च पुनः पुनः।
कुशलानुत्पपन्नानां उत्पादञ्च तथैव च॥
सार्वज्ञैरिदमुक्तञ्च बोधिसत्त्वैरपि तथा।
बोधिमार्गमिति धर्म्मं चत्वारि संप्रहाणकम्॥
समाधि ऋद्धिपादञ्च चित्तऋद्धिं तथैव च।
मीमांसा ऋद्धिपादञ्च वीर्य्यऋद्धिं तथा अपि॥
तथागतैरिति उक्तं सर्वज्ञज्ञाननायकैः।
चत्वारि ऋद्धि[1]पादञ्च इदं धर्म्मं शुभप्रदम्॥
श्रद्धां समाधिं वीर्य्यञ्च स्मृतिं प्रज्ञेन्द्रियमपि।
पञ्चेन्द्रियमिदमुक्तं सर्वैस्तथागतैरिति॥
अधिमुक्तिबलञ्चैव प्रतिसङ्ख्या[2]बलं तथा।
भावबलं चान्तिबलं ज्ञानबलमपि तथा॥
तथागतैरिदमुक्तमतीतानागतैरपि।
प्रत्युत्पन्नैश्च सर्वैश्च पञ्चबलमिति स्मृतम्॥
इदानिं स्मृतिबोध्यङ्गं धर्म्मप्रविचयं तथा।
वीर्य्यं बोध्यङ्गञ्चापि प्रीतिबोध्यङ्गकमपि॥
प्रशुद्धिपूर्वबोध्यङ्गं समाधिबोध्यङ्गं तथा।
उपेक्षाबोध्यङ्गञ्चापि सप्तबोध्यङ्गकमिति[3]॥
अतीतैरपि बुद्धैश्च अनागतैस्तथा अपि।
प्रत्युत्पन्नैश्च सर्वज्ञैरिदमुक्तं तथागतैः॥

---

१ D रिद्धिम्। २ A D प्रतिसङ्ख्या०। ३ D ०बोध्यङ्गकमपि।

अथोऽपि सम्यग्दृष्टिञ्च सम्यक्कल्पमेव च।
सम्यक्वाक् च सुसूत्रञ्च सम्यक्कर्म्मान्तकं तथा॥
सम्यगाजीवकञ्चापि सम्यक् व्यायामकं पुनः।
सम्यक्संस्मृतियुक्तञ्च सम्यक् च समाधिमिति॥
इत्यार्य्याष्टाङ्गमार्गञ्च तथागतैः प्रशंसितं[१]।
सर्वज्ञैरपि बौद्धैश्च बोधिसत्त्वगणैरपि॥
इत्यादिभिर्गुणैर्युक्तं धर्म्मं संबोधिपाचिकाः।
सप्तत्रिंशतिभिर्युक्तास्तथागतैः प्रचारिताः॥
अतीतानागतैर्बुद्धैः प्रत्युत्पन्नैस्तथागतैः।
अर्हद्भिर्[२]बोधिसत्त्वैश्च महासत्त्वैस्तथा अपि॥
दशदिचुस्थितैश्चापि सर्वैस्तथागतैरपि।
प्रतिदिने प्रतिमासे प्रतिचेत्रे च वर्णितम्॥
स्थविरै वैतरागैश्च[३] भिचुभिचुण्युपाशकैः।
धारितं वाचितं सर्वैरत्यर्थञ्च प्रकाशितम्॥
इमां धर्म्माञ्च सर्वेण धारयिष्यथ साम्प्रतम्।
भिचवः निश्चयं कृत्वा मुदमाप्नुथ तत्चणात्।
पुनर्दिदेश भगवान् कर्कुच्छन्दो[४] जगद्गुरुः।
तेभ्यः सर्वेभ्यः भिचुभ्यः त्यक्तव्यं[५] निश्चयं इति॥
पुनश्च श्रूयतां तावत् धर्म्माधर्म्मस्य मूलकम्।

---

१ A D प्रसंशित। २ A अर्हभिः। ३ D वीतरागैस्च।
४ D क्रकुच्छन्दो। ५ B व्यक्तव्यं।

सर्वेषां पापपुण्यानां वच्या(च्चा)मि तत्त्वतः शृणु ॥
दशाकुशलजं धर्म्मं त्यक्तव्यं[1] परमं गतिम् ।
दशा(श?)कुशलजं धर्म्मं कर्त्तव्यं[2] दुर्गतिपदम्[3] ॥
मनसा वाचया युक्त्या कृतं वा अकृतं इति[4] ।
अजानन्ति च ये सत्त्वाः ते यान्ति परमं पदम् ॥
प्राणातिपातं[5] प्रथमं अदत्तादानकं ततः ।
मिथ्याचारं कामपूर्वं मृषावादं तथा अपि ॥
पैशून्यमपि मानुष्यन्तु सम्भिन्नप्रलापकम् ।
अविद्यामपि व्यापादं मिथ्यादृष्टिमपि तथा ॥
इत्येवं मुनिभिरुक्तं दशाकुशलजं विधम् ।
त्यक्तव्यं भवति ये च ते मोक्षमधिगच्छति ॥
तद्वच्च मुनिभिरुक्तं दशा(श?)कुशलजं विधिम् ।
कर्त्तव्यं भवति येऽपि दुर्गतिमधिगच्छति ॥
इत्यादिभिर्गुणैर्युक्तं प्रव्रज्यानियमं पदम् ।
येऽपि वः भिक्षवः कृत्वा प्राप्नोति परमं पदम् ॥
एवं च मैत्रेय तस्मिं काले तथागते ननुः ।
अर्द्धत्रयोदशाः सत्त्वाः ब्राह्मणा क्षत्रिया अपि ॥
ते सर्वैः मुण्डिकाः कृत्वा करोति भिक्षुभावताः ।
जितेन्द्रिया च ते प्राप्ता भवन्ति परमं पदम् ॥

---

१ B दशकुशलजं धर्म्मं कर्त्तव्यम् । २ B त्यक्तव्यम् ।
३ D दुर्गतिं पदम् । ४ C तथा । ५ A omits ०पातम् ।

स(श)ङ्खमुष्टिं दर्य्यद्यापि वज्रसत्त्वस्य ऋद्धिना ।
सव्यहस्ता च शङ्खाच्च उत्पन्नं सर्वतोमुखम् ॥
पापदं पुण्यदं श्रेष्ठं मोक्षदं फलदं तथा ।
वरदं क्लेशसान्तञ्च शिवलोकफलप्रदम् ॥
ईदृशं गुणसम्पन्नं त्रैलोक्येऽपि सुदुर्लभम्[१] ।
मन्दाकिनीमिव साक्षात् गुणेन पावनेन च ॥

अन्यदपि ॥

तथागतकलाङ्गुल्यात् पतितास्तोयविन्दवः ।
तेभ्यः जाता सदा पुण्या वाग्मती परमेश्वरी ॥
सर्वतोमुखस्नानाच्च शताधिकफलं लभेत् ।
वाग्मत्यायां ये स्नानेन असङ्ख्यं लभ्यते फलम् ॥
नाम्नेन च वाग्मती या अर्थेन च तथा अपि ।
तस्यां दर्य्यां[२] सुसंस्थिता प्रज्ञोपायमिव स्थिता ॥
सर्वेषां भिक्षूणामर्थे वज्रसत्त्वतथागतौ[३] ।
स्नानार्थं [४][ऋद्धिना दत्यं वाग्मतीं च प्रकाशिताम् ॥
भिक्षुकताय यदच्च जलधालाञ्च पातकम् ।
तद्दत्तेषां कृतं तेन क्रकुच्छन्देन शासिना[५] ॥]
ऋद्धिना क्रकुच्छन्देन धर्म्मोद्भवाय भिक्षुणाम् ।

१ A सुदुस्लभम् । २ A D omit दर्य्यां । ३ D ०तथागतैः
४ D omits the portion bracketted. ५ A शासिता ।

पर्षदानामाश्चर्य्याय उत्पन्नं कृतं वाग्मतीम्[1] ॥
अतीतानागतैर्बुद्धैः प्रत्युत्पन्नैस्तथागतैः ।
वर्णी[2]कृतं मानितञ्च सर्वशिष्यगणैरपि ॥
वैतरागैः[3] स्थविरैश्च भिक्षुभिक्षुण्युपासकैः ।
श्रावकैः जिनशिष्यैश्च चैरकोपाशिकादिभिः[4] ॥
विशेषैः तीर्थकैः सर्वैः सन्यासै ब्राह्मणैरपि ।
दण्डिभिर्वैष्णवैः शैवैः स्नानितं पूजितं सदा ॥
मुनिभिर्मुनिकन्याभिः मुनिपुत्रैश्च शिष्यकैः ।
मुनिपत्नीभिः सर्वैश्च स्नानं कृतमहर्निशम् ॥
इन्द्रादिभिस्त्रयस्त्रिंशैः साप्सरादिगणैरपि ।
पर्वदिने दिने याता स्नानं कृतं मुदा अपि ॥
ब्रह्मादिस्वगणैस्सार्द्धं समायाताः पर्वदिने ।
स्नानं कृत्वा प्रमोदेन चकार वेदपाठका ॥
महाब्रह्मागणै देवैः पर्वदिने समागताः ।
स्नात्वा स्नात्वा कृतं ध्यात्वा कारितं जलतर्पणम्
धृतराष्ट्र सगन्धर्वै विरूढक कुम्भाण्डैरपि ।
विरूपाक्ष नागैः सार्द्धं वैश्रवण यक्षैर्सह ॥
इत्यश्चतुर्महाराजैः लोकपालैश्चतुर्द्दिशात् ।
स्वस्वगणैः परिवृत्त्य सदा तत्र समागताः ॥

---

१ B कृतवाग्मती, D कृतवाग्मतीम् । २ B वर्णा० ।
३ D वीतरागैः । ४ B चैरकोपाशिकादिभिः ।

२२६ इन्द्रश्चाग्नियमोरक्षः पाशीवायुधनेश्वरः ।
ईशान अध उर्द्धश्च स्नानार्थं तत्र आगतः ॥
प्रतिदिने प्रतिमासे पर्वदिने विशेषतः ।
प्रमोदेन समायाताः मङ्गलैश्च प्रपूरिताः ॥

अपि च ।

मृदङ्गवादितं कृत्वा दुन्दुभिञ्च[1] प्रवादितम् ।
पठहञ्चापि ढक्काञ्च कांशजं विविधमपि ॥
ध्वनत्मर्द्दं[2] झर्झलञ्च डिण्डिमं मण्डलमपि[3] ।
तूर्य्यं भेलिं[4] फालञ्च गीतं गानं तथापि च ॥
अत्यर्थं घोषणां कृत्वा देवाः गन्धर्वा राक्षसाः ।
यक्षाश्चापि कुम्भाण्डाश्च किन्नराश्च दशदिशा ॥
स्नानार्थञ्च समायाता वाग्मत्यान्तीर्थके अपि ।
दिने च सुपर्व्वे वापि समायातास्तत्र सदा ॥
चैत्रे मासे अमावास्यां सोमवासरसंज्ञके ।
सङ्क्रान्तौ मेषसंज्ञे च[5] उत्तमं लभ्यते फलम् ॥
अष्टादिसुदिनेश्चान्ये मेषसूर्य्ये[6] दिनेऽपि च ।
स्नानं कृतं मुदा ये या ईप्सितं लभ्यते फलम् ॥
इति ज्ञात्वा च मानुष्याः सर्वदा सुपर्व(र्व) दिने ।
स्नानं कृत्वा मुदा येऽपि वाग्मती फलपम्पदम् ॥

---

१ A omits च । २ B ध्वनत्मन्दम् । ३ D मण्डकमपि ।
४ D भेरिम् । ५ D ०संज्ञश्च । ६ D मेषसूर्य्ये ।

नाम्नेन वाग्मती सापि अर्थेन सादृशी सती ।
सर्वेभ्यः स्नानपात्रेभ्य वाग्मतीं फलदं भवेत् ॥

अपि तु ।

अरोग्यं मधुरं स्वच्छं भुक्तजीर्णकरि(र) लघुम् ।
सुशीतलं सुगन्धेन्दुवर्णावष्टाङ्गवारिणा ॥
वाग्मती सादृशी तीर्था त्रैलोक्येऽपि सुदुर्लभा[1] ।
सर्वासां तीर्थानां मध्ये एका शास्ता च वाग्मती ॥
मण्डाकिन्यापि च श्रेष्ठा पावनेन गुणेन च ।
देवासुरमनुष्यैश्च पूजिता मानिताः सदा ॥
मानव्यमानवाश्चापि वाग्मत्यां स्नानदानकम् ।
कृत्वा येऽपि तत्र पुण्यात्ते मोक्षमधिगच्छन्ति[2] ॥
वाग्मतीस्नानमात्रेण सर्वपाप दुरीकृतम् ।
पुण्यशरीरन्ते प्राप्ता भवन्ति परमं पदम् ॥
ते सर्वे भिक्षव नूनं तयो हस्ताच्च जातके[3] ।
तीर्थेऽपि च स्नानाच्च भिक्षुदेहश्च प्राप्यते ॥
पापकः केवलं त्यक्त्वा प्राप्ताः पुण्यं सुकेवलम्[4] ।
सर्वे भवन्ति भिक्षव अण्डाच्च पक्षिण इव ॥
तस्मिन् स्नानमात्रेण वचसा सुमतिं लभेत् ।
अत्यर्थञ्च मूढा येऽपि वाग्मतीं लभ्यते फलम् ॥

१ A सुदुल्लभा । २ B D ०गाच्छति । ३ C जायते
४ A सुकेवरं ।

अथोवाच जगन्नाथः क्रकुच्छन्दो जगद्गुरुः ।
भिक्षूनपि तानपि सर्वान् पर्षदि संस्थितानपि ॥
यूयमपि च भो शिष्याः युष्माकमपि यानि च ।
केशश्मश्रूणि सर्वाणि गृह्यभागं कृतमिति ॥
तानि[१] सर्वाणि संगृह्य इत्थं भागद्वयं कृतम् ।
केशश्मश्रूणि सर्वाणि कुरुध्वं[२] शीघ्रं साम्प्रतम् ॥
भागद्वयकृतात्पश्चात् तत्र एकं प्रथापितम् ।
प्रत्येकञ्च पृथक् स्थाने तस्यामुपरि थापितम्[३] ॥
भागमेकं सुसंगृह्य प्रत्येकं केशश्मश्रूणि ।
तस्यां शिरायामुपरि महां राशिं कृतं च यम् ॥
एवमुक्ते अथ सद्य क्रकुच्छन्दस्य आज्ञया ।
ये चापि भिक्षवः सर्वे सर्वकेशानि सञ्चितम्[४] ॥
तस्यां महत्यां शिलायां[५] केशानि श्मश्रूणि अपि ।
सर्वाणि च गृहीतानि भागद्वयं कृतञ्च ते ॥
भागकृते च मैत्रेय क्रकुच्छन्दो जगद्गुरुः ।
वज्रसत्त्वं जगन्नाथं प्रोवाच जगदीश्वरः ॥
क्रियतां वज्रसत्त्व त्वं सर्वेषां भिक्षूणामपि ।
मनश्चित्तं प्रकाशार्थं पुष्पवत्फुलितमिव:[६] ॥

१ A ताशि । २ A कुर्व्वध्वं । ३ D स्थापितं ।
४ D केशानि सञ्चितं मुदा । ५ A D शिरायां
६ D फुल्लितमिव ।

केशश्मश्रूणि सर्वाणि भागद्वयं कृतादपि ।
भागमेकं क्षिपश्चि त्वं एकञ्च तत्र स्थापितम्[1] ॥
सर्वेषामपि भिक्षूणां ऋद्धिं दृश्यसि साम्प्रतम् ।
मनस्युद्भूत्यर्थं पुण्यं सर्वेषां भिक्षूणामपि ॥
येषां पूर्वाणि पापाणि त्यजन्त्यर्थं कृतं त्वया ।
समुद्भूतार्थपुण्यानि तेषाञ्च भिक्षूणामपि ॥
इति कृत्वा त्वया येऽपि सर्वेषाञ्च भविष्यति ।
पुण्यचित्तं समुद्भूतं पापचित्तं दुरीकृतम् ॥
सर्वेषां पूर्वजन्मानां सर्वाणि अक्षणानि च ।
यथैव केशसङ्क्षिप्तं दूरीकृतं तथा त्वया ॥
अवतार्य्य यथैतानि केशानि श्मश्रूणि तथा[2] ।
तथैव सर्वपापाणि शत्रिलादवतालिताः ॥
इति ज्ञात्वा त्वया सद्य ममाज्ञया कृतं अपि ।
सर्वेषामपि भिक्षूणां भिक्षुणीनां तथा अपि ॥
शीघ्रं शीघ्रं कुरु सद्य वज्रसत्त्व[3] जगद्गुरो ।
दया कृपां पुरस्कृत्य कुमुदान् चन्द्रमा इव ॥
देवासुरमनुष्याणां सर्वेषां पर्षदामपि[4] ।
पुण्यमत्यर्थं जात्यर्थं आश्चर्य्यञ्च कृतं त्वया ॥
इति कृत्वा जनाः सर्वे कृताः शाला भविष्यति ।

---

१ A D स्थापितां । २ A केशानि च श्मश्रूणि ।
३ A वज्रसत्त्व । ४ D सर्व्वेषामपि पर्षदां ।

अपुण्यानां पुण्यात्मानं फलं सम्प्रापिता ननु ॥
एवमुक्तोऽथ सर्व्वज्ञ[१] वज्रसत्त्व[२] जगद्गुरुः ।
केशश्मश्रुण्येकराशिं संगृह्य[३] सर्वज्ञाज्ञया ॥
भागद्वयोरेकभागं राशिक्लेशं सो गृह्यति ।
सव्यहस्तेन च पश्चात्स्वयम्भूसम्मुखं स्थितः ॥
मनसा वचसा चापि कायेन सुस्मृतां[४] कृतम् ।
श्रीस्वयम्भूं जगन्नाथं पुनः पुनः समीक्ष्यते ॥
मनसा एकचित्तेन तेषां पुण्यान्युद्भूतये ।
प्रणामञ्च पुनः कृत्वा केशानि सङ्क्षिपन्ति च ॥
शङ्खमुष्टि[५]स्थितेनापि क्रकुच्छन्दस्य आज्ञया ।
सङ्क्षिपन्ति सव्यहस्ताच्च केशानि च वज्रगुरुः ॥
षड्विकारं प्रकम्पिताः सागरान्ता वसुन्धराम् ।
सुमेरुमाकनिष्ठञ्च सम्प्रकम्पन्ति तत्क्षणात् ॥
तस्माच्च त्रिदशैः सर्वैः स्वर्गजैर्मर्त्त्यजैरपि ।
पातालजैश्च सर्वैश्च विज्ञापितं सर्वज्ञभावतः ॥
केशानि पतितं यत्र वायव्ये[६] शङ्खपर्वतात् ।
तत्पर्वतस्य दर्य्यां विदिशि भवन्ति निश्चयम् ॥
यदा यस्मात् पतिताच्च तदा नदीं समुद्भूताम् ।
भवन्ति तत्क्षणाच्चेयं पवित्री गुणभूषिणी ॥

---

१ A सद्य, D सद्यच्च । २ A वजसत्त्व । ३ D गृह्य
४ A D सुस्मृनां । ५ A शङ्खमुष्टि । ६ D वायुव्ये ।

केशावतीति नामेन केशपतिताच्च या नदी ।
समुद्भूता सुरूपा च पवित्रा गुणधारणी ॥
मङ्गली पावनी रूपी अष्टगुणविभूषिणी ।
देवासुरमनुष्यैश्च पवित्री इति ईरिता: ॥

अपि च ।

स्वच्छी मधुरी आरोग्यी रघु[1]भुक्तजीर्णकरी ।
सुगन्धीन्दुवर्णा शीता चाष्टगुणविभूषिणी[2] ॥
नाम्नेति केशावती च क्लेशिनासिनी रूपिणी[3] ।
रागद्वेषसम्मोहादिसर्वपापविनाशिनी ॥
मानव्यो मानवाश्चापि तस्यां स्नानं कृतं ननु ।
अनेग[4]दु:खमायादिक्लेशश्च नाशितं भवेत् ॥
केशावत्याञ्च ये स्नात्वा सर्वे च मनुजादय: ।
रागद्वेषादि मोहञ्च त्यक्त्वा यान्ति सुरालयम् ॥
इति मत्वा च ये या वा मानव्य मानवादय: ।
तस्याञ्च स्नानमात्रेण ईप्सितं लभ्यते फलम् ॥
दर्शनार्थञ्च चूडीनां द्वितीयं भागमत्र हि ।
प्रक्षिपेयुश्च तत्केशा तावद्दर्श्यानि निर्जयु: ॥
यद्यापि भागमेकञ्च पृथक् प्रतिस्थितं स्थितम्[5] ।
तस्यां शिरायां[6]मुपरि यानि सञ्ज्ञानि तानि च ॥

१ D लघू० । २ D ०गुणभूषिणी । ३ D ०नासिरूपिणी ।
४ D अनेक० । ५ B पृथक् पृथक् प्रतिस्थितम् । ६ A शिराम् ।

२२६ केशश्मश्रूणि भागानि चैत्यानि अपि निर्ययुः[१] ।
सर्व्वेषां मुण्डिकानाञ्च सर्वाणि केशश्मश्रूणि ।
गुणध्वजप्रमुखानां ब्राह्मणानाञ्च साम्प्रतम् ।
अभयन्दप्रमुखानां[२] क्षेत्रीयानां[३] तथा अपि ॥
वैश्यानां अपि शूद्राणां भिक्षुदेहश्च प्राणिणाम् ।
अर्द्धत्रयोदशानाञ्च शतानां भिक्षूणामपि ॥
केशश्मश्रूणि च यानि[४] यानि सञ्ज्ञानि तानि च ।
तस्यां शिरायामुपरि चैत्यराशिमिव स्थितम्[५] ॥
क्रकूच्छन्दाय अर्थेन अलङ्काल[६]रलंकृतम् ।
तत्सर्वं चालकालञ्च[७] चैत्यराशय शोभितम् ॥
अद्याप्यनेकचैत्येन कौ(कि)र्णाश्यामस्ति सर्वशः[८] ।
[९]बभूवु तेषां तीर्थानां[१०] कीर्त्तिशब्दं गुणं महत् ॥
ततस्ते पर्षदा सर्व्वे इन्द्रादिनाकजा अपि ।
मनुजादय मानुष्याः अत्रजा अन्यजा अपि[११] ॥
तयोश्च ऋद्धिं संदृष्ट्वा आश्चर्य्यं प्रापिता मुदा ।
सर्व्वेषामपि भिक्षूणां पुण्यानां हेतुनां फलम् ॥
अथापि पर्षदा सर्व्वे देवा नागाश्च मानुषाः ।

---

१ B अभिनिर्जयुः ।   २ D ०ददप्रमुखानाम् ।
३ B क्षत्रियानाम्, D क्षेत्रियानां ।   ४ A गातानि ।   ५ B स्थितः ।
६ D अलङ्कार ।   ७ B चालकारैः, D चारकालम् ।   ८ B सर्व्वस ।
९ B वभुवु स तेषां सर्व्वेषाम् ।   १० A omits तीर्थानाम् ।
११ B अत्रजास्त्वान्यजा अपि ।

नेपालजा अन्यजाश्च[1] तेभ्यः सम्पूज्य पूज्यकैः ॥
पुष्पैर्धूपैर्प्रदीपैश्च गन्धैर्नैवेद्यकैरपि[2] ।
विविधैः पूजयामासुः गुर्वादिसर्वसङ्केभ्यः[3] ॥
प्रथमं क्रकू(कु)च्छन्दश्च वज्रसत्त्व[4]मपि ततः ।
पश्चात्सर्वेभ्यः भिक्षुभ्यः पूजितश्च पुनः पुनः ॥
ततः पश्चात् सर्वचैत्यर्थं[5] पूजितं मुदा ।
अञ्जलिं शिरसा(शा) धृत्वा प्रणिपत्य प्रणामतः ॥
केचि(श्चि)त्पञ्चप्रणामैश्च केचिदष्टाङ्गकैरपि ।
पुनः पुनर्प्रणिपत्य नमयामासुः तान् गुरून् ॥
प्रदक्षिणाभिः बहुधा मानव्य[6]मानवादयः ।
अत्यर्थं कारयामासुः प्रमोदेन पुनः पुनः ॥
गुरुश्च सर्वभिक्षुश्च चैत्यान्महाशिराम‌पि ।
देवैर्नागैर्मनुष्यैश्च असुरैः पर्षदैरपि[7] ॥
ब्रह्मभि चत्रीयै[8] वैश्यैः शूद्रैश्च अन्यजातिभिः ।
अत्रजैरन्यजैः सर्वैः चक्रुस्तेभ्यः प्रदक्षिणाम् ॥
धारणीभिश्च पाठैश्च स्तोत्रैश्च भाषजैरपि ।
विविधं स्तोत्रयामासुः ते सर्वेपि च शिष्यकाः ॥
क्रकू(कु)च्छन्दोऽथ मैत्रेय तस्माच्छृङ्गाच्च पर्वतात् ।

१ B नेपालजास्त्वान्यजाश्च, A नैपालजा । २ D गन्धनैवेद्यकैरपि
३ B ०संघके, D ०सङ्घकान् । ४ A वजसत्त्वं । ५ B सर्व्वसत्यर्थं
६ B मानव्यो । ७ D पर्वदैरपि । ८ D क्षेत्रियैः ।

विजयामास शिष्यैश्च सर्वैरपि परिवृतः[१] ॥
अनेकैः[२] स्थविरैः सार्द्धं वै(वी)तरागैर्जितेन्द्रियैः ।
बोधिसत्त्वैर्महासत्त्वैः भिक्षुभिक्षुण्युपासकैः ॥
ब्रह्मभिर्क्षत्रियै[३]र्वैश्यैः शूद्रैश्च श्रावकादिभिः ।
अन्यैश्च विविधैर्लोकैः परिवृतः स गच्छति ॥
तस्माच्च पर्वतान्नूनं क्रकू(कु)च्छन्दो जगद्गुरुः ।
विजयामास शिष्यैश्च मृगस्थरौ विशेषतः ॥
मृगस्थरिं[४] स गच्छत्वा खगाननायां गच्छति ।
खगाननाया गच्छत्वा[५] विशेषैः पूजितं भवेत् ॥
क्रकू(कु)च्छन्दोऽथ सर्वज्ञ पूजितं स्तोत्रपाठकैः ।
स्थविरवैतरागैश्च[६] भिक्षुभिक्षुण्युपाशकैः ॥
ब्रह्मभिरपि चेत्रीयैः वैश्यैः शूद्रैस्तथा अपि ।
स्वस्वभक्षैश्च वस्तुभिः खगाननायै पूजितम् ॥
पुष्पैः धूपैः च दीपैश्च गन्धैर्नैवेद्यजातिभिः ।
मद्यैः मांसैश्च लेह्यैश्च पेयै योग्यैश्च वस्तुभिः[७] ॥
नानाविधिभिः पूज्यैश्च खगाननायै[८] पूजितम् ।
मन्त्रजापादिभिस्तोत्रैः पूजितञ्च पुनः पुनः ॥
वज्रोदकाभिषेकञ्च अञ्जलिभिः त्रिधा पिबेत् ।

---

१ A ०वृतम् । २ A अन्यगै । ३ D क्षेत्रियैः ।
४ D मृगस्थलिम् । ५ B खगाननाया गमित्वा । ६ D स्थविरवीतरागैश्च
७ D मद्यैः मांसै लेह्यै पेह्यैः पूज्यैर्योग्यैश्च वस्तुभिः । ८ A D खगाननाय

ब्राह्मणादिभिः गृहस्थैश्च चेत्रीयैर्वैश्यः शूद्रकैः ।
तस्यां पुण्यप्रभा(सा)दाच्च अष्टाचणादिपापकम्[१] ।
आपूर्वपञ्चजन्मान्तं दूरिकुर्वति[२] तत्चणात् ॥
ततोऽथ भगवाञ्छास्ता क्रकूच्छन्दो जगद्गुरुः ।
तस्मान्नेपालाच्च अन्यं चेत्रं[३] गच्छति शिष्यकैः ॥
यथा नेपाल आगत्वा सर्वैः शिष्यै परिवृतः ।
सर्वैः शिष्यै परिवृत्या नेपालाच्च[४] तथागतः ॥
तत्रा च मैत्रेय अत्र[५] भिक्षव बहवः स्थिताः ।
सदा च सर्वदा कालं[६] सम्भु पूज्य परायपुः ॥
एकेचिदपि शिष्याश्च भिक्षुभिक्षुणुपाशकः[७] ।
स्थविरादिबोधिसत्वा सर्वज्ञपृष्ठतो[८] गताः ॥
अथापि केचिच्छिष्याश्च बोधिसत्त्वाश्च वृद्धकाः ।
भिक्षवर्भिक्षुभिक्षुण्यश्च भवेयुः तत्र वाशिताः[९] ॥
श्रीस्वयम्भोर्गुणं श्रुत्वा अन्यत्रेत्र न[१०] इच्छता[११] ।
सर्वकालं स्वयम्भूश्च पूजा कृत्वात्र वाशिता ॥
तस्मिन्नेव चणे[१२] वीतराग अष्टौ ययुः स्वयम् ।

१ B अष्टाच्चणादिपापज । २ B आपूर्व्वपञ्चजन्मानां
D आपूर्व्वपञ्चजन्मानां । ३ B परं चेत्रं । D अन्यत्त्वेत्रम् ।
४ A D नेपाला च । ५ B चात्र । ६ B सर्व्वकालं च संभूपूज्ये ।
D सर्व्वदा कालञ्च । ७ D उपासकैः । ८ A D पृष्ठतम् ।
९ D भिक्षवः भिक्षुण्यश्चापि ......... वासिताः । १० D ०त्त्वेत्रेन ।
११ B वाञ्छिता । १२ B omits चणे ।

सत्त्वानां लक्षणार्थाय समकालं समाहिताः ॥
हिताय च सुभिक्षाय भोगाय च सुखाय च ।
अत्र वासिनां सर्वेषां स्वयमु(उ)त्पन्नकृतिः ॥
श्रीस्वयम्भूप्रभावाच्च मञ्जुदेवप्रभावतः ॥
खगाननाया भावेन वीतरागा समुद्भूता ॥
प्रथमं मणिकूटे च दृश्यात्तु निर्ऋते अपि ।
महापाषाणयोर्मध्ये अभ्यन्तरेऽपि कोष्ठके ॥
लतादिवृक्षे(क्ष) सङ्कीर्णे नानाविहङ्गकूजिते ।
नाम्ना च मणिचूडेन मणिदानकृते भुवि ॥
द्विजेभ्यः[१] याचकेभ्यश्च शिरसो दत्तवान्मणिम् ।
उत्पाद्य केशाद्रुधिरं सजला रोहिणी नदी ॥
मणीचूड़मणीदानात् यस्माच्च ख्यापितं नदि ।
अस्यां नद्याञ्च विद्यन्ति(न्ते) किञ्चिच्च मणय[२] इति ॥
देवासुरमनुष्यैश्च अत्र नेपालवासिभिः ।
मनोहरात् मणिदानात् मनोहरा नदी स्मृताः[३] ॥
मङ्गले श्रीवत्साकालं बोधिसत्त्वे[४] च मैत्रेयम्[५] ।
नामार्थयुक्तभावेन मणिलिङ्गेश्वरमिति ॥
आषाढ़े रविवारे[६] च नवम्याञ्च प्रतिपदे[७] ।

---

१ A विजेभ्यः ।  २ B किञ्चिच्च मणयोऽपि च, D चर्म्मणयोऽपि च
३ A D मणिदानात् मनोहरं नदिस्मृति ।  ४ B बोधिसत्त्वम् ।
५ D श्रीवत्साकारे ............ मैत्रियम् ।  ६ B ०वासरे ।
७ D प्रतिदिने ।

सङ्क्रान्ता कर्कटसंज्ञे[1] मणिनद्या विशेषतः ॥
मणिनद्याञ्च ये स्नात्वा कद्‌र्य्यां तु[2] विशेषतः।
पश्चाच्च मणिलिङ्गाय नानाविधिभिः[3] पूजितम् ॥
एकोवितिष्ठत्तचैव गोकर्णस्थे द्विती(ति)यके[4]।
वाग्मत्यान्तटे चापि प्रपातस्य समीपके॥
अनेग[5]मृगसङ्कीर्णे अनेग[6]वृक्षपूरिते।
मुनीनां मुनिपुत्राणां आवासेन प्रपूरिते ॥
भूतैश्च पितृलोकैश्च सदापि तत्र वाशितम्[7]।
पिण्डार्थे न च अत्यर्थं वासितञ्च[8] सदा पुनः ॥
मङ्गले पुण्ड्याकाले बोधिसत्त्वे खगं जकम्[9]।
नामार्थयुक्तभावेन गोकर्णेश्वर ख्यातवान् ॥
श्रावणे सोमवारे च अष्टम्यां[10] अमावासिके।
सिंहे च अपि सङ्क्रान्तौ गोकर्णे च प्रसिद्धके ॥
नद्यां येऽपि[11] तु वाग्मत्यां स्नानं कृत्वा विशेषतः।
पश्चात् गोकर्णेश्वराय पूजितं च[12] मुदा अपि ॥
[13][ततः पितृगणेभ्यश्च पिण्डदानं ददुर्मुदा।
यथोक्तं भगवान् पूर्वं देवपुत्रोद्धराय च ॥

---

१ A कर्कते संज्ञे, D कर्कटे संज्ञे। २ B कनर्यान्तु, D कद्‌र्य्याभु।
३ A omits नानाविधिभिः। ४ A D गोकर्णस्था द्वितीयके।
५, ६ D अनेक। ७ B प्रपूरिते, D वासितम्। ८ A वाशितम्।
९ D खगं जकम्। १० B सोमवासरे चाष्टम्याम्। ११ A D य पि।
१२ A omits च। १३ A omits the portion bracketted.

सर्वेभ्यो याचकेभ्योऽपि ददुर्दानं यथेप्सितम्।
श्रीह्यादि अन्नदानञ्च सर्वदानं ददुर्मुदा ॥]
तृतीयचारुशिखरे अनेगवृक्षभूषिते।
चम्पकैर्वृक्षसङ्कीर्णैः शूकरादिभिः पूरिते ॥
चम्पकवृक्षसङ्कीर्णात् चारुगिरिरिति स्मृतम्।
अत्रजैर्मानुषैश्चापि अन्यजैर्विविधैर्गणैः ॥
मुनिभिर्मुनिकन्याभिः वाशि(सि)तं तत्र सर्वदा।
चारुगिरित्वात्तत्रैव सुस्थितं भवति सदा ॥
मङ्गलध्वजमाकालं[१] बोधौ समन्तभद्रकम्।
नामार्थयुक्तभावेन कौलेश्वर इति स्मृतम्[२] ॥
नभस्य[३]मङ्गले वारे सप्तम्यां पूर्णमादिने[४]
कन्यायामपि सङ्क्रान्ता चारुगिरौ प्रसिद्धके ॥
तस्मिं च चारुशिखरे श्वेतहृदे विशेषतः।
स्नानं कृत्वा ततः पश्चात् कौरेश्वराय[५] पूजितम्
चतुर्थे कुम्भतीर्थेऽपि जलशुषिलतीलके[६]।
एकोऽपि वीतरागश्च स्वयमुत्पन्नकं कृतिः[७] ॥
कुम्भवज्जलशुषिलं कुम्भतीर्थमिति स्मृतम्।
पवित्रेण फलेनापि कलशमपि संस्थितः[८] ॥
[९][कुम्भतीर्थाच्च निर्गमाज्जलं शरसि संस्थितम्।]

---

१ D आकारम्। २ A स्मृतिस्मृतं, B कालेश्वरमिति स्मृतम्।
३ B नभस्ये। ४ B D पूर्णिमादिने। ५ D कौलेश्वराय।
६ D शुषिरतीरके। ७ B उत्पन्नन कृतिः। ८ B संस्थितम्।
९ B omits this line.

अष्टगुणविभूषाङ्गं जलजैश्च सुमण्डितम् ॥
वैतरागस्य[१] भावेन तीर्थस्यापि गुणेन च ।
वासितं सततं[२] तत्र मुनिसिद्धगणैरपि ॥
मानव्यमानवा या ये[३] कृतं स्नानञ्च तीर्थके ।
सौवर्णशादृशं देहं प्राप्ता च ते[४] भविष्यति ॥
मूषिकापि[५] तस्मिं स्नानात् सौवर्णदेह प्रापिता ।
मानव्यमानवा चापि कथं न लभते[६] फलम् ॥
मङ्गले कलशाकारं[७] वज्रपाणिस्वरूपकम् ।
नामार्थयुक्तभावेन कुम्भेश्वरमिति स्मृतम्[८] ॥
आश्विन्यां[९] बुधवारे च चतुर्दश्यां षष्ठ्यामपि ।
तुलायामपि सङ्क्रान्तौ कुम्भतीर्थे विशेषतः ॥
कुम्भतीर्थे च ये स्नात्वा जलदानादिकारिताः ।
ततोऽपि कुम्भेश्वराय पूजितं मुदा अपि[१०] ॥
पञ्चमे फणिके[११] गर्त्ते भूमीस्थानविशेषके ।
द्रुमवृन्दैश्च सङ्कीर्णैः नानापक्षिभिः पूरिते ॥
ब्रह्मभिः वैश्यशूद्रैश्च पूजितं तत्र वाशि(सि)भिः ।
प्रतिदिने प्रतिमासे[१२] प्रतिवर्षे[१३] सदा सदा ॥

१ A वीतरागस्य ।  २ A वाशितं शततम् ।  ३ B यै ।  ४ B स्तेच ।
५ D मूखिकापि ।  ६ B लभ्यते ।  ७ D कलशाङ्कालम् ।
८ A इतिरितम् ।  ९ B अश्मुन्याम् ।
१० B has this additional line.  ११ C फलके ।
१२ A प्रतिमास्य ।  १३ D प्रतिवर्ष ।

पुष्पै(र्धू)धूपैश्च दीपैश्च पञ्चामृतैश्च पूज्यकैः[१] ।
पूजितं भवति तस्मै[२] सर्वकालं दिने दिने ॥
मङ्गले चामलाकार(ल) मञ्जुघोषस्वरूपकम् ।
नामार्थयुक्तभावेन फणिगन्धेश्वरमिति[३] ॥
कार्त्तिके गुरुवारे च पञ्चम्याञ्च त्रयोदशौ[४] ।
सङ्क्रान्तावपि विच्छे च[५] फणिगर्त्तेश्वरप्रदेशके ॥
गोदावल्याञ्च[६] ये स्नाता जलदानादि कारिताः ।
ततः [७]पश्चाद्गर्त्तेश्वरं मुदा च पूजितं भवेत् ॥
षष्ठे[८] फणिके शैलस्य उपत्यकायाः शृङ्गके ।
जलसरन्ध्रादुपरि ज्योतिर्लिङ्ग[९]प्रसिद्धकम् ॥
प्रतिवर्षे नभे मासे दुग्धधाराञ्च पातितम् ।
तस्मिं च ज्योतिर्लिङ्गेऽपि [१०][शृङ्गा च पातितं भवेत् ॥
रन्ध्राज्जाताज्जालाच्चापि] सहस्रधारां समुद्भूतम्[११] ।
अनेकैर्मत्स्यैः[१२] सङ्कीर्णैः सुवर्णतिलकैर्युतैः ॥
महावलमुखेशापि[१३] शाखामृगैः प्रपूरितम्[१४] ।
जलधारैस्सुसंयुक्तं सलदृचैः परिवृतः ॥
अनेगजलजन्तुभिः सर्पनक्रै प्रपूरितम्[१४] ।

१ D पजकैः । २ D तस्मै च । ३ B ०गर्त्तेश्वरमिति, D ०गर्त्तेश्वरमिति ।
४ D त्रयोदशी । ५ D वृश्चिके च । ६ D गोदावली च ।
७ A D omit पश्चात् । ८ D षष्ठे । ९ B ०लिङ्गः ।
१० B omits the portion bracketted. ११ D समुद्भवम् ।
१२ A अन्यगैर्मच्छे, D अन्यगैः मच्छ० । १३ B ०मुखैश्चापि ।
१४ B प्रपूरितः ।

तस्य तीर्थस्य भावाच्च त्यजन्ति कलुषं वृतिम् ॥
मत्स्यापि तीर्थस्थानानां देहस्य उपर्य्युपरि ।
पतितं स्वेच्छया[१] युक्त्या भयं किञ्चिन्न विद्यते ॥
इति मत्वा च मानुष्याः तस्मिं तीर्थे च स्नानकम् ।
कृत्वा या ये च मानुष्याः वैरिमध्ये न च भयम्[२] ॥
भयं सर्वेषां सत्वानां परमशत्रुश्च कथ्यते[३] ।
तस्य च[४] स्नानमात्रेण[५] भयं किञ्चिन्न विद्यते ॥
यद्वद्स्मिं[६] भयं नास्ति मत्स्यानामपि च सदा ।
तद्वत्तीर्थ(र्थे)प्रभावा च मानुषाणां भयं न हि ॥
इति ज्ञात्वा च मानुष्या तस्मिं तीर्थे सदा सदा[७] ।
ये च या वा कृतस्नानात् भयं नास्ति सुखं लभ्यते[८] ॥
मङ्गले मत्स्य(च्छ)माकार विष्कम्भिनं[९] तथा अपि ।
नामार्थयुक्तभावेन फणिशृङ्गेश्वरमिति ॥
हेमन्ते शुक्रवारे च द्वादश्याञ्च चतुर्थि(र्थे)के ।
सङ्क्रान्तौ धनुसंज्ञे च फणिशृङ्गे विशेषतः ॥
येऽपि सहस्रधारा(ला)यां स्नानं कृत्वा मुदा अपि[१०] ।
पश्चा[११]च्छृङ्गेश्वरं पूजां कृतञ्च मानवादयः ॥
सप्तमे गन्धावत्याञ्च शृङ्गस्योपरि संस्थितम् ।

---

१ A D स्वच्छया । २ B न ते भयम् । ३ B नास्तीत्युक्तं
४ B D तस्मिन् । ५ B सुस्नानमात्रेण । ६ A यद्वलस्मिं ।
७ B D मुदा । ८ B या वा संकृतं स्नानं ........सुखं लभेत ।
९ A विकम्भिन्नम् । १० B सदा । ११ B ततः ।

ज्योतिरूपेण संस्थिला शृङ्गवत्संस्थितं(त) इति ॥
रक्तपुष्पै पुष्पवृचैः समन्ततः प्रपूरितम्[१] ।
अनेगै वृक्षसङ्कीर्णै शाखामृगैः[२] प्रपूरितैः ॥
मङ्गलेच्छचमाकालं चिति[३]गर्भस्वरूपिनि(णी)[४] ।
नामार्थयुक्तभावेन गन्धेश्वरप्रकीर्त्तिताः ॥
पौषमासे शनिवारे एकादश्यां तृतीयके ।
मकरेऽपि च सङ्क्रान्तौ गन्धावत्यां प्रसिद्धके ॥
गन्धावत्युपत्यकायां वाग्मत्यां विशेषतः ।
स्नानं कृत्वा ततः[५] पश्चात् गन्धेश्वरं प्रपूजितम् ॥
विक्रमस्थरे अष्टौ[६] च स्थलवृचैरलङ्कृतः[७] ।
पचिभिर्वनजन्तुभिः समन्ततः प्रपूरिते ॥
मङ्गले शङ्क आकालं(रं) खगर्भ इति बोधिकम्[८] ।
नामार्थयुक्तभावेन विक्रमेश्वरञ्च तथा ॥
माघमासे सर्ववारे दशम्यां द्वितियातिथौ ।
कुम्भसङ्क्रान्तिसंज्ञे च विक्रमस्थरे विशेषतः ॥
यस्यां विक्रमस्थ(ला)राधे नद्याञ्च य[९] विशेषतः ।
स्नानं कृत्वा पुनः पश्चात्[१०] विक्रमेश्वरञ्च[११] पूजितम्

१ B प्रपूरिते । २ A ०मृगे । ३ A च्चिति० ।
४ B ०बोधिकं हि । ५ A तत । ६ B D ०स्थले चाष्टौ ।
७ B अलङ्कृतम् । ८ D बोधकम् । ९ A ०स्थराध्यः, D स्थराधोः नद्यां च ये । १० B D च विधिना । ११ B D omit च ।

इति ज्ञात्वा च मानुष्याः वैतरागं सर्वेभ्योऽपि[१] ।
पूजितञ्च[२] मुदा कृत्वा विशेषं लभ्यते फलम् ॥
आयुर्वृद्धिं मणिलिङ्गात् गोकर्णाज्जसवृद्धिकम् ।
वृद्धिकं कीरेश्वराच्च[३] प्रज्ञावृद्धिं कुम्भेश्वरात् ॥
गर्त्तेश्वराच्छुखवृद्धिं जसवृद्धिं[४] शृङ्गेश्वरात्[५] ।
गन्धेश्वराद्धनवृद्धिं सन्तानं विक्रमेश्वरात् ॥
पृथक् पृथक् इदं पुण्यं मानव्यमानवादयः ।
फलञ्च वाञ्छिता येऽपि पृथक् पृथक् प्रपूजितम् ॥

अथ वा ।

सम्पूर्णफलमित्थं ये मनुजादय मानवाः ।
वाञ्छितं फलमित्येवं तेभ्यः सर्वेभ्यः पूजितम् ॥
तेषु सर्वेषु तीर्थेषु स्नात्वा स्नात्वा स्वस्वदिने ।
[६]पश्चात्सर्व वैतरागेभ्यः पूजितञ्च पुन कृतम् ॥

अपि च ।

उत्तमं त्रयसंयोगये[७] द्वि द्वि[८] संयोगे मध्यमम् ।
स्वल्पञ्च एकमेकेपि पर्वतस्य इदं फलम्[९] ॥
पुष्पैर्धूपैश्च दीपैश्च गन्धैश्चापि प्रपूजितम् ।

१ B वैतरागेभ्यः सर्वदा, D वीतरागान् सुभक्तया । २ B पूजितं ये ।
३ D कीलेश्वराच । ४ B omits जसवृद्धिम् । ५ D फणिकेश्वरात् ।
६ B तेभ्यश्च ...... मुदा पुनः, D वीतरागेभ्यः पूजितञ्च पुनः मुदा ।
७ C सहसंयोगे । ८ B द्वय० ।
९ B एकमेकञ्च पर्व्वतस्य च इदं फलम् ।

पञ्चामृतादिभि योग्यै स्नानं कृत्वा विशेषतः ॥
जात्रा संकृत्वा तीर्थेषु अन्नवस्त्रादिदानकम् ।
याचकेभ्यः ददुर्येऽपि जलतर्प्पणपूजनम् ॥
इत्थं ज्ञात्वा च मानुष्या दिने दिने विशेषतः ।
तेषां सेवा कृतं नूनं वाञ्छितं लभते फलम् ॥
तदनन्तरमेवास्मिं उपच्छन्दोहके तु हि[१] ।
हिमालयाख्य[२] च्छट्टेति[३] राजधान्यादिकोवशत् ॥
प्रथमं राजधानीञ्च ततः पश्चाद्राष्ट्रकम्[४] ।
क्रमेण नगरं वापि पुटभेद तथा अपि ॥
मञ्जुदेवस्य भावेन वैतराग[५]प्रभावतः ।
मञ्जुदेवेन तनुना राज्यं तत्र प्रथा(स्था)पितम् ॥
शङ्खपर्वतोपत्यकात्[६] आचिन्तामणितीर्थकम् ।
चतुःकोण[७]प्रमाणेन आयामस्य विस्तारकम् ॥
केशावत्यां पूर्वतीरे शङ्खपर्वतदक्षिणे ।
पश्चिमे राजमञ्जर्य्या[८] वाग्मत्यां उत्तरे तीले[९] ॥
एतन्मध्यसुसंस्थितात् अतिदी(दि)र्घेण शोभिता ।
तस्या नगर्य्या मध्ये तु राज[१०]पट्टननामके ॥
विशेषेण च स्थानेष्वभिषक[११]पिण्डिकोपरि ।

१ B D भुवि । २ B हिमालयाख्ये । ३ D च्छट्टीति ।
४ A राष्ट्रशाप । ५ D वीतराग० । ६ D adds च ।
७ B ०कोश० । ८ A ०मञ्जया । ९ A दिसिः, D दिसि ।
१० A राजा। ११ A ०ष्येक ।

भद्रासन प्रतिस्थाप्य ध्वजवितानालंकृतम् ॥
प्रथमं मञ्जुदेवेन तस्मिं च स्थापिता ननु ।
धर्म्माकरं[१] नाम राजं अत्र राजा कृताय च ॥
अथापि तेन गुरुना भद्रघटाम्बुलेन च ।
तस्य मुर्द्धि राजाय च अभिषे(ष्ये)कं कृतं ननु ॥
पश्चादपि देवेन्द्रेण शिरोवेष्टमुदा ददौ ।
चतुर्भिश्च महाराजैः राजयोग्यञ्च धौकितम्[२] ॥
त्रयस्त्रिंशादिभिर्देवैः साप्सरादिगणैरपि ।
पुष्पमालादिभिः पुष्पैः धर्म्माकरं प्रपूजितम् ॥
सुगन्धवारिभिः शिक्तान् चन्दनचूर्णरञ्जितान् ।
पुष्पानुपातु देवैश्च[३] आकाशाच्च समन्ततः ॥
किन्नरैः सगणैस्तूर्यैः गान्धर्वैं गानमेव च ।
अप्सरैः नचनं कृत्वा चक्रुर्मङ्गलपूर(ल)कम्[४] ॥
मतश्च[५] ब्रह्मभिर्वैश्यैः शूद्रैश्च सर्वजातिभिः ।
नेपालजैरन्यजैश्चापि धर्म्माकरं प्रपूजितम् ॥
धर्म्माकरो नाम राजा चीनदेशात् समागतः ।
मञ्जुदेवप्रभावा च तत्पृष्ठतः समागतः[६] ॥
नामेन च ते नगरं[७] महानगरख्यापितम् ।
महान्प्रमाणभूतेन महानगरमीरितम् ॥

---

१ D धर्म्माकर। २ D महाराजयोग्यञ्च धौकितं मुदा।
३ B पुष्पान् पपात, D पुष्पान् पातुश्च।
४ B नाचनं ...... पूरितम्, D नृत्यकं कृत्वा चक्रु मङ्गलपूरक।
५ B D ततश्च। ६ A समागत। ७ B D तन्नगरम्।

अपि च ।

मञ्जुदेवकृतेनापि महानगरमीरितम् ।
महाचीनादपि राज्ञा राज्ये कृतास्तथा अपि[१] ॥
श्रीमान्धर्म्माकरो राजा नामार्थयुक्तचारिणि[२] ।
श्रीयापि परिपूर्णोऽसौ धर्म्मेण च तथा अपि[३] ॥
यथा स्वस्यां[४] सुखं दुःखं सर्वेषां प्रजानां तथा ।
धर्म्मेण च पुण्येनापि स्वर्गेऽपि सुदुर्लभम्[५] ॥
यथा धर्म्माकरो राजा अभून्नेपालमण्डले ।
सुभिक्षेण सुभोगेन प्रजानाञ्च सुखं भवेत् ॥
अदण्डेन अशस्त्रेण तेना राज्ञा राज्यं कृतम्[६] ।
अन्यायेन अधर्म्मेण दूरेण परिवर्ज्जितम् ॥
सुधर्म्मेण सुपुण्येन सुनेमेनापि पूरितम् ।
यथा चीनमिवदेश तथा नेपालमण्डलः ॥
चीनदेशात्समायातो[७] राजापि गुरुणा सह ।
तथा चीनवद्राज्यञ्च सर्वं[८] विद्यातन्मण्डलम् ॥
अक्षरं सर्वविद्यापि शिल्पविद्याभिः शास्त्रकैः ।
कृषि आदिभिः भाषैश्च[९] वाणिज्यैः[१०] सर्वकर्म्मभिः ॥
यथा चीनप्रदेशेऽस्ति तथा नेपालमण्डले ।

---

१ B राज्यं कृतास्तथापि च । २ B D चारनी । ३ B तथैव च
४ B स्वस्य । ५ A स्वचापि सुप्रपूजसाम् । ६ A राजकृते, D कृतं मुदा ।
७ A समाजातात्, D समायातात् । ८ D सर्व्वे । ९ B भावैश्च ।
१० A D वाणिज्यम् ।

काश्मिरे च यथा[1] सन्ति तथा च तत्र मण्डले॥
मञ्जुदेवप्रसादाच्च धर्म्माकरस्य धर्म्मतः ।
स्वयम्भुवः प्रभावाच्च तच्छ्रेष्ठं तत्र मण्डलम् ॥
तत्र पुण्यपवित्रात्मा बोधिसत्त्वादयोदधिम् ।
धर्म्माकरो नामराजा बभूव समन्तकुलात् ॥
ब्राह्मणाः क्षत्रियाः[2] वैश्याः शूद्राश्च अन्यजातयः ।
प्रजाश्च सुखिनस्तस्य बभूव भूरिभूषणाः ॥
तस्मादपि च मैत्रेय अत्र नेपालमण्डले ।
सुभिक्षसुजनोपेतं सुमङ्गलैः प्रपूरितम् ॥
देवा नागाश्च यक्षाश्च असुरा गरुडादयः ।
निवसन्ति पवित्रेऽत्र[3] मोक्षार्थं कृतनिश्चयम् ॥
सिंहासने मणिमये[4] सुरसिद्धिवन्द्ये
यः श्रावयेत्तमसमं सप्रभोऽनुभावम्[5] ।
सम्पूजितः सुरसुराहितुरङ्गवक्त्रैः
सन्तिष्ठति विविधरत्नविभूषिताङ्गः[6] ॥

इति श्रीगोशृङ्गपर्वते स्वयम्भूचैत्यभट्टारकोद्देशे ग्रामादि-
समुद्भवो नाम चतुर्थोऽध्यायः[7] ॥

१ A D जथा, B omit च । २ D क्षेत्रिया । ३ A D ते ।
४ D मणिमय । ५ A ससम्भानुभावम्, D समभानुभावम् ।
६ A ०भूषिताङ्गः ।
७ B इति श्रीमति बृहत्स्वयम्भूपुराणे श्रीस्वयम्भूत्पत्तिकथायां वीतराग-
तीर्थप्रवर्त्तको नाम चतुर्थोऽध्यायः ॥०॥ D नामस्चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः ।

अथेदानीं प्रवक्ष्या(चा)मि तीर्थानि[१] द्वादशानि च ।
शृणु मैत्रेय पुण्यानि फलदानि विशेषतः ॥
यत्र च नदिसम्भेदं तत्र तीर्थं प्रवक्ष्यते[२] ।
वाग्मत्यां च[३] केशावत्यां अन्यैर्नदीभिः सङ्गमे ॥
अमोघफलदा सम्यक् वाग्मत्यां पुण्यतीर्थकः ।
दशाकुशलहन्ताच[४] रक्ताङ्गो नागतचकः ॥
मारदारकयासङ्गे वाग्मत्यां शान्ततीर्थकः ।
रोगादिदोषहन्ताच[४] शुक्रशोमशिखिग्टहम्[५] ॥
वाग्मत्यां मणिरोहिण्यां सङ्गमे तीर्थशङ्करः ।
शान्तिपुष्यादिदोऽस्यत्र गौरः श्रीशङ्खपार(ल)कः ॥
वाग्मत्यां राजमञ्जर्य्यां सङ्गमे राजतीर्थकम् ।
राज्यारोग्यकयोर्दाता तत्र नागः सुरूपितम् ॥
सङ्गमे विमलावत्यां केशावत्यां मनोरम ।
तीर्थो वस्त्रादिदोस्यत्र कर्वुर कुलिकोरगः ॥
केशावत्यां कृते सङ्गे[६] भद्रनद्याङ्करोमलः ।
हन्ता निर्मलतीर्थोऽत्र पीतानागोपरारकः ॥

---

१ A एतानि ।  २ D प्रचक्षते ।  ३ A omits च ।
४ D ०हन्ता च ।  ५ A शुक्रः शोम० B रागादिदोषहन्ता च शुक्लनागः सोमशिखी ।  ६ D कृतसङ्गे ।

स्वर्णावत्यां[१] कृते सङ्गे केशावत्यां निधानकः।
धनधान्यादिदः तीर्थः हरिनन्दो[२]पनन्दकौ॥
केशावत्यां मुक्त पापनाशिन्या सङ्गमे कृति।
सुखप्रदो ज्ञानतीर्थे श्वेतशुभ्रास्ति[३] वासुकिः॥
केशावत्य ंकृते सङ्गे वाग्मत्यां वाञ्छितार्थदः[४]।
दीर्घायु धान्यधनदः शुक्रस्तत्रास्ति[५]वारुणः॥
वाग्मत्यां रचिते सङ्गे रत्नावत्यां प्रमोदकम्[६]।
रतिप्रीतिकरस्तीर्थः धवरस्तोयपद्मकम्[७]॥
चारुमत्यां वाग्मत्यां च[८] सङ्गमे च सुलक्षणः।
महापद्म अतिश्वेत रूपसौभाग्यभाग्भवेत्[९]॥
प्रभामत्या वाग्मत्यां च[१०] सङ्गमे जयतीर्थकः।
नाशदः सर्वशत्रूणां श्रीकान्तिः शचुदह्यकम्[११]॥
इति श्रुत्वाथ मैत्रेय विज्ञापितं जगद्गुरुम्।
फलविधिं कथं नाथ[१२] तत्सर्वं ब्रूहि साम्प्रतम्॥
ममार्थञ्च न हि नाथ सत्त्वानाञ्च हिताय च।
देवासुरमनुष्याणां विशेषैर्ब्रूहि साम्प्रतम्॥
एवमुक्तेऽथ सर्वज्ञः शाक्यसिंहो जगद्गुरु।
तेषां अपि च तीर्थानां स्नानविधि[१३]फलमपि॥

---

१ A स्वर्णावत्यां। २ B D हरिनन्दोप०। ३ B ०तीर्थे श्वेतसुचास्ति।
४ A D वाञ्छितोऽर्थदः। ५ B शुक्लास्तत्रोऽस्ति। ६ B प्रमोदकः।
७ B ०पद्मकः। ८ A D omit च। ९ A D ०सद्भवेत्।
१० A D omit च, D प्रभावत्यां। ११ B D ०देहकम्।
१२ B फलं विधिं कथं स्नानं, D स्नानं। १३ B ०विधिं।

महातीर्थानि मैत्रेय ख्यातान्येतानि द्वादश ।
दातान्यभीष्ट[१]सिद्धीनां इत्युवाच जगद्गुरुः ॥
सुखाय च हितार्थाय लोकानां पुण्यवृद्धये ।
अपुण्यानां पुण्यार्थाय पुण्यानां फलप्राप्तये ॥
देवानाञ्च मनुष्यानां तिर्थिकानां[२] विशेषतः ।
शैवानां ब्राह्मणानाञ्च विशेषेण प्रकथ्यते ॥
पृथक् क तीर्थशेवायां[३] पृथक् फलं प्रलभ्यते[४] ।
सर्वतीर्थाणां शेवाया सर्वफलं प्रतिलभते[५] ॥
इति ज्ञात्वाथ सर्व्वेऽपि[६] यूयं पि[७] मानवादयः ।
क्षेत्रीयाः वैश्याः शूद्राश्च तीर्थसेवा[८] कृतं मुदा[९] ॥
तीर्थसेवा समं पुण्यं नास्ति हि दिवि भूतले ।
ब्राह्मणानां तीर्थिकानां मतेषु च[१०] प्रसिद्धकम् ॥
अन्नदानात् वर[११] तीर्थं यज्ञकर्म्मादिशेषतः ।
सर्वकर्म्म प्रसिद्ध्यन्ति शुध्यन्ति सर्वकिल्विषान्[१२] ॥
समाप्तं सर्वकर्म्म च[१३] तीर्थैरपि विशेषतः ।
यज्ञे विवाहे[१४] प्राणान्ते तीर्थेन च प्रशुद्ध्यति ॥

---

१ A D दातान्यपिष्ट० । २ D तिर्थीकानां । ३ B D पृथक् पृथक् तीर्थसेवायां । ४ D फल प्रलभ्यते । ५ B प्रलभ्यते, D प्रलभते । ६ A ज्ञात्वा अर्थ सर्व्वे । ७ A यूयं वि, C D यूयं च । ८ A ०शेवा । ९ B क्षत्रिया ...... कृतं कृतं । १० B मर्त्येषु च । ११ D वरं । १२ A सर्व्वकर्म्मकान्, D शुद्धाध्यसर्व्वकर्म्मकान् । १३ B D ०कर्म्मच्च । १४ D यज्ञविवाहे ।

तीर्थञ्च स्वर्गसोपानं पिथितं नारकं पथम्[१]।
कथितं तीर्थिकाणाञ्च ब्राह्मणानां मते अपि[२] ॥
लौकिकानाञ्च भावेषु पितृ उद्धारणे अपि।
श्रेष्ठफलं[३] प्रकथ्यन्ते सर्वज्ञानां नमते हि[४] ॥
अथ शृणु मैत्रेयं[५] च[६] नदीसम्भेदतीर्थफलम्।
पृथक् पृथक् च तीर्थानां कथयामि फलं पृथक् ॥

अपि च।

शृणु साधुश्च सुष्ठु च भाषिष्ये[७] मनसि कुरु।
यूयं हि पर्षदा नित्यं शृणुध्वं अपि साम्प्रतम् ॥
प्रथमं पुण्यतीर्थे च दिवसान्येकविंशति[८]।
विधिना स्नानदानञ्च कृतञ्च मानवादयः ॥
अष्टाचण[९]विनिर्मुक्तः पुण्यवान् स च जायते।
न केवलतः स्नानेन दानहोमादिभिः[१०] कृतम् ॥
श्रावणे च अमावास्यां सिंहेऽपि सोमवासरे।
गोकर्णाख्यवाग्मत्यां च[११] त्रिवेणीमिव सङ्गमे ॥
अमोघफलदा अन्या वाग्मती च सङ्गमे।
तदीश्वरस्य समीपे वाग्मत्यां च विशेषतः ॥

---

१ A पथ। २ B मन अपि। ३ D श्रेष्ठफल।
४ B श्रेष्ठं..............सर्व्वज्ञैः नानामते हि। D सर्व्वज्ञानानुमत्यहि।
५ A मैत्रीये। ६ B D omit च। ७ A भाषिष्य।
८ D दिवशान्येकविंशति। ९ A अष्टत्त्वर्णं। १० A ०होमादिति।
११ A omit च।

मानव्यमानवाश्चापि तस्यां स्नानञ्च कारितम् ।
स्नानोपचारविधिना स्नानं चापि कृतं मुदा ॥
कायेन मनसा वाचा एकीभावकृतेन च ।
पापचित्तं परित्यज्य पुण्यचित्तं कृतादपि ॥
नभाशुक्ले दशम्याञ्च अमावास्यां तपादिके[१] ।
एकं विंशतिदिवसं विधिना स्नानमाचरेत् ॥
पश्चाच्च पुण्यदिवसं जपतपध्यानेन[२] च ।
मन्त्रजापादियुक्तेन धारणी[३] च पठे(ये)त् मुदा ॥
दिने दिने दत्वा[४] स्नात्वा दानपूर्णे कृते न च ।
अष्टाचणं वलिं[५] कृत्वा ईप्सितं लभ्यते फलम् ॥
पुष्पै धूपैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि ।
नानोपचारकै पूज्यैः पूजयामास चैत्रजान्[६] ॥
रात्रौ जागरणं कृत्वा प्रातस्नानं प्रतिदिने ।
अष्टाविंशतिदिनान्ते यज्ञपूर्णादिपाठकम् ॥
प्रज्ञापालमितादिश्च[७] सूचया विविधानपि ।
स्तोत्रयामास भावेन तीर्थशेवा[८]परा ययुः ॥
विधिनोक्तेन इत्थं ये कारितञ्च मुदा अपि ।
एवं कृत्वा विधियुक्तं[९] मानव्य[१०]मानवादयः ॥

---

१ B तके दिने । २ B पूर्व्वदिवसं जपस्तप० । ३ B धारणीञ्च ।
४ D कृते । ५ B दलिं । ६ A चोत्रियान्, D चात्रियान् ।
७ D पारमितादिश्च । ८ D ०सेवा० । ९ B ०पूर्व्वं ।
१० D मानवा ।

कृतस्नान पुनः येऽपि वाञ्छितं लभ्यते फलम्।
तस्मात् पुण्यप्रसादाच्च[1] अष्टाक्षण[2] दुलीकृतम्॥
तद्यथा।
तिर्य्यञ्चप्रेतनरकं खेच्छं दीर्घायुषामरम्[3]।
मृथ्यादिक् बुद्धकान्तारं[4] मुकटाष्टाविदाक्षणाः॥
मानव्यमानवाश्चापि कृतस्नान तत्तीर्थके।
ईप्सितं फलसम्प्राप्ता वाञ्छितं लभ्यते फलम्॥
अपि च।
दशानां अकुशलानां मध्ये एकं[5] प्रनाशितम्।
प्राणातिपातं(त) पापञ्च तस्याफला कृतं कृतम्॥
प्रथमं स्नानकं कृत्वा ततः[6] पश्चात्पितृतर्पणम्।
पुनश्च याचकेभ्योऽपि दानं ददौ मुदा अपि॥
विशेषेण च तत्तीर्थे[7] पिण्डोद्धारं कृतं कृतम्।
पुनर्थे मानवा यापि सुवंश[8] लभ्यते ननु॥
पुत्रपौत्री परित्यज्य सुतात्मजादय अपि।
पिण्डोद्धारं कृतं येन तथैव लभ्यते फलम्॥
प्रतिदिने असमाप्ते कार्ये[9] नित्यं पूजा कृतम्।
तत्रेश्वरं तत्क्षेत्रेशं तन्नाथञ्च प्रपूजितम्॥
द्वितीयं शान्ततीर्थेऽपि घस्राणि एकविंशति।

---

१ A प्रशादाच्च। २ B अष्टाक्षणं। ३ B प्रेतं ...... दीर्घायुषोमरम्।
४ A B बद्धकान्तारः। ५ A D एक। ६ B स्नानकृत्वातः तपश्च।
७ A D तत्तीर्थम्। ८ B सुवंसं। ९ B D कार्ये।

विधिना दाने[१] स्नानं च कृतञ्च मनुजादयः ॥
तत्तीर्थे एकचित्तेन मानुजा स्नानमाचरेत् ।
रोगादिदोषशान्त्यादिफलं समभिभाव्यते ॥
भाद्रशुक्ल[२]प्रतिपद्यां कन्यायां वुध[३]वासरे ।
नामेन शान्ततीर्थेऽपि प्रज्ञापायव[४]सङ्गमे ॥
मारदारकथा वापि वाग्मत्याश्चापि सङ्गमे ।
तदिश्वरसंयुक्तेन वाग्मत्याश्च विशेषतः ॥
महिला मनुजाश्चापि तस्यां स्नानञ्च कारितम् ।
पञ्चोपचारविधिभिः स्नानं कृत्वा[५] मुदा अपि ॥
वपुषा चेतसा[६] गौरा[७] एकभाव्यकृतेन च ।
रागचित्त[८] परित्यज्य धर्म्मचित्तकृतादपि ॥
नभाशुक्ल एकादश्यां भाद्रशुक्ल प्रतिपदे ।
एकविंशतिदिवसं[९] विधिना स्नानमाचरेत् ॥
ततश्च सप्तदिवसं जपतप[१०]ध्यानेन च ।
मन्त्रमाला[११]दियुक्तेन यानसूत्र पठे(थे)त्मुदा ॥
प्रतिदिनं[१२] प्रतिस्नात्वा दानपूर्ण[१३] कृतेन च ।
सर्वरोगान् परित्यज्य नीरोगीपदलभ्यते[१४] ॥

---

१ B दानं, D दान । २ D शुक्र० । ३ A बुद्ध० ।
४ B प्रज्ञापाये, D प्रज्ञोपायः । ५ B कृतं । ६ A चेतसां ।
७ D वाक्यात् । ८ D रागचित्तं । ९ A दिवस० ।
१० D जपस्तप० । ११ A मन्त्रमान्यादि० । १२ D प्रतिदिने
१३ B ०पूर्सुतं, D दानपूर्णो । १४ B निरोगीपदलभ्यते ।

धूपैः पुष्पैश्च दी(दि)पैश्च नैवेद्यै गन्धकैरपि ।
नानोपचारविधिभिः अर्च्चयामास चे(च)त्यजान् ॥
निशि जागरणं कृत्वा प्रत्यूषे स्नानमाचरेत्[1] ।
अष्टाविंशतिघस्रान्ते[2] च सर्वपूर्णादि पाठकम् ॥
गन्धव्यूहादिसूत्राश्च विविधान्[3] सूत्रजानपि ।
वाचयामास भावेन तस्य से(शे)वा परायणः ॥
उक्तेन विधिना इत्थं ये कारितं अपि मुदा ।
कृत्वा विधियुक्तं[4] एवं मनुजाद्य मानवाः ॥
स्नानं कृतं पुनर्येऽपि[5] लभ्यते वाञ्छितं फलम् ।
तस्मात् प्रशादपुण्याच्च[6] रो(लो)गाच्चण(णि) दुरी(रि)कृतम् ॥

तद्यथा ॥

वातजा पित्तजा रोगा श्लेश्मजा सन्निपातजाः ।
निहताः सर्वरोगाश्च स्वस्ति भवति सर्वदा ॥
रागद्वेषसम्मोहादि मनुजापि दुली(री)कृतम् ।
वातपित्तज (स)[7]श्लेश्मादि देहजापि विनाश(स)नम् ॥

अपि च ।

अकौशलदशानाञ्च एकमध्ये[8] प्रनाशितम् ।
अदत्तदानकं पापं तस्मात्पुण्या दुरी(ली)कृतम् ॥

---

१ A ऽपि स्नान अपि । २ A D प्रमान्ते । ३ A विविधा ।
४ D विधिर्युक्तः । ५ A स्नान कृतयैपि । ६ A तस्यां पुण्याप्रशादश्च । D तस्मात् पुण्यात् प्रसादश्च । ७ C omits ०ज (स) ।
८ A D एकमध्य ।

प्रागपि स्नानकं कृत्वा ततोऽपि पितृतर्पणम् ।
अथोऽपि च[1] याञ्चेभ्योऽपि व्रीहि आदिन्द(द)दौ मुदा ॥
विशेषेण च तत्तौ(त्ति)र्थे खगानना प्रपूजितम् ।
पञ्चोपचारविधिभिः मद्यमांसादिभिर्युतैः ॥
गुह्येश्वरी प्रपूजिता(तां)[2] ध्यानस्तोत्रेन पूजितम् ।
मानव्यमानवाश्चापि तदुदकं पिवेत् मुदा ॥
स्त्रीया सह समंयुक्तं उत्तरसाधकेन च ।
प्रतिरात्रौ तस्य पूजां जापेन सह पूजितम् ॥
दिणे प्रति असमाप्ते पूजा कृतं पुनः पुनः ।
तदीश्वरं तत्चेत्रेशं तं नाथेशं प्रपूजितम् ॥
तृतीयशङ्करे तीर्थे अहानि एकविंशति ।
स्नानं दानञ्च विधिना[3] कृतञ्च मानवादयः ॥
तत्तीर्थे एकमनसा विधिवत् स्नानमाचरेत् ।
शान्तिपुष्ट्यादिकं चापि फलं समुपजायते ॥
वृषशुक्लद्वितीयायां तुलेपि गुरुवासरे ।
नामेन शङ्करतीर्थकं[4] पूर्ववद्विराजिते ॥
वाग्मत्यां मणिरोहिण्यां सङ्गमे च प्रसिद्धिके ।
तत्रेश्वरेण सङ्गमे शङ्करे च विशेषत ॥
अवरा या[5] नरा येऽपि स्नानं तस्याञ्च कारितम् ॥
स्नानोपचारविधिना स्नानञ्चापि कृतं मुदा ।

---

१ A omits च । २ B गुह्येश्वरीं प्रपूजित्वा । ३ A विधिनाम् ।
४ D °तीर्थेकम् । ५ A omits या ।

देहेन भारत्वात् हृदा[१] एकीभावं कृतेन च[२] ॥
द्वेषचित्तं परित्यज्य सच्चित्तञ्च कृतं मुदा ।
भाद्रशुक्ले द्वादश्याञ्च[३] वृषशुक्लद्विती(ति)यके ॥
एकविंशतिदिवसं(शं) विधिना[४] स्नानमाचरेत् ।
पश्चात्पि[५] सप्त दिवसं जपस्तप[६]ध्यानेन न ॥
मन्त्रसूचादियुक्तेन पाठञ्चापि पठे(ये)न्मुदा ।
प्रतिदिने स्नात्वा[७] नत्वा पूर्णदानं[८] कृते न च ॥
इति सर्वान्विनश्यति माङ्गलेन[९] प्रपूरितम् ।
गन्धैः धूपैश्च पुष्पैश्च नैवेद्यैः दी(दि)पकैरपि ॥
पञ्चोपचारकैः पूज्यै[१०] पूजयामास चैत्रजान् ।
निशाजागरणं कृत्वा प्रभाते स्नान[११] प्रतिदिने ॥
अष्टाविंशतिदिनान्ते अध्वरञ्च च कारितम् ।
दशभूमीश्वरादिञ्च लोकोत्तरीञ्च[१२] भाषजान् ॥
भाषयामास भावेन तीर्थसेवा कृतं ननु ।
इत्यमुक्तेन विधिना कारितं यं[१३] मुदा अपि ॥
कृत्वा पुनर्विधियु(यु)क्तं मानवामनुजादय ।
पुनः येऽपि कृतं स्नानं लभ्यते फलं वाञ्छितम् ॥

१ D भावकृत्वानाम् । २ B एकीभावकृतेन च । ३ B द्वादश्यां च ।
४ D विधिनाम् । ५ B पश्चाच्च । ६ A omits °स्तप, D जपध्यानेन तत्परः । ७ B स्नात्वा स्नात्वा पूर्णम् । ८ D पूर्णदाने ।
९ A मागलेन, D सादलेन । १० A omits पूज्यैः । ११ B स्नानम् ।
१२ B लोकोत्तराञ्च, D लोकोत्तरी च । १३ B ये ।

तस्मात्पुण्यप्रसादाच्च शान्तिपुष्ट्यादिकं भवेत् ।

तद्यथा ।

शान्तिकृत्पुष्टिकृच्चापि फलदञ्च सुनिश्चितम् ।
सर्वोपद्रवानि हन्ता शान्तिर्भवति सर्वदा ॥
मानवा मानव्यश्चापि[1] स्नानं कृतं तत्तीर्थके ।
वाञ्छितं फलसम्प्राप्ता ईप्सितं लप्सितं[2] फलम् ॥

अपि च ।

दशानां अकुशलानां मध्य एकं प्रनाशितम् ।
काममिथ्यादिकं पापं तस्माद्धर्माद्दुलीकृतम् ॥
श्राद्धापि स्नानकं कृत्वा पश्चाच्च पितृतर्पणम् ।
ततोऽपि प्रार्थनेभ्योऽपि वस्त्रादि[3]दानकं कृतम् ॥
च तत्तीर्थे पुनः पुनः स्नानं कृतम् ।
मानव्यमानवाश्चात्र तत्रेश्वरं[4] प्रपूजितम् ॥
सुतपुत्र्या सह युक्या स्त्रिया सह सदाशिभिः ।
पुनः पुनः स्नानं कृत्वा मनेच्छाञ्च प्रलभ्यते ॥
उक्तदिने असमाप्ते पुनः पुनः पूजाकृतम् ।
तत्रचेशं वरनाथञ्च तदीश्वरं प्रपूजितम् ॥
चतुर्थ्यां राजमञ्जर्यां दिवसान्येकविंशति ।
विधिना दानस्नानञ्च[5] कृतञ्च[6] मनुजादयः ॥
करोत्यैकाग्रचित्तेन स्नानं श्रीराजतीर्थके ।

---

१ B D मानव्य मानवाश्चापि । २ B लप्स्यते । ३ A वस्त्रादि० ।
४ D तत्रेश्वरम् । ५ D स्नानदानञ्च । ६ B कृत्वा च ।

राज्यारोग्यफलं प्राप्तं वाञ्छितं लभ्यते फलम् ॥

ैयायां विच्छेऽपि शुक्रवासरे ।

राजतीर्थे विशेषेण प्रज्ञोपायस्वरूपिनि[1] ॥

वाग्मत्यां राजमञ्जर्यां सङ्गमे च प्रसिद्धके ।

स्थानेश्वरेन युक्तञ्च वाग्मत्याञ्च विशेषतः ॥

स्त्रीयश्च मानुषाश्चापि[2] तत्तीर्थे स्नानकारितम् ।

पञ्चोपचारयुक्तैश्च तीर्थशेवा कृतं कृतम्[3] ॥

तनुना वाण्या मनसा एकभावकृतेन च ।

मोहचित्त परिवर्ज्ये[4] बोधिचित्त कृतं मुदा ॥

वृषशुक्लचयोदश्यां उज्जौ(चौ) शुक्लटतीयके ।

एकविंशति[5]दिवशं विधिना स्नानमाचरेत् ॥

ततोऽपि सप्तदिवसा जापस्तप[6]ध्यानेन च ।

मन्त्रश्रचादि[7]युक्तेन सधर्मञ्च पाठेन्मुदा ॥

प्रतिदिने स्नानं कृत्वा पूर्णदानं कृतेन च ।

राज्यारोग्यफलं प्राप्ता राज(ज्य)श्री लभते[8] पदम् ॥

दीपैर्गन्धैश्च पुष्पैश्च धूपैर्नैवेद्यकैरपि ।

पञ्चोपचारविधिभिः पूजयामास चेत्रजान् ॥

सर्वरीजागरं कृत्वा अहमुखे[9] स्नानं कृतम् ।

---

१ D ०स्वरूपिनः । २ A मानुषावपि । ३ B ननु ।

४ D ०वर्ज्ये । ५ A विंश० । ६ C omits ०स्तप ।

७ A omits मन्त्र० । ८ B लभ्यते ।

९ D अर्हमुखे ।

अष्टाविंशतिदिनान्ते जाग[१]रापि च कारितम् ॥
समाधिराजादिसूत्रान् विविधान्धारणीरपि ।
पाठयामास भावेन तस्य (श्री)सेवा कृतं ननु ॥
विधिनोक्तेन य इत्थं कारितञ्च अपि मुदा[२] ।
एवं कृत्वा विधियुक्तं द्विपादय नरा अपि[३] ॥
पुनः कृतं स्नान येऽपि वाञ्छितं लभ्यते फलम् ।
तस्मात्पुण्यप्रशादा च राज्यारोग्यं फलं लभ्येत् ॥

तद्यथा ।

ऋद्धं स्फीतञ्च क्षेमञ्च माङ्गलं[४] जनपूरितम् ।
अनेगैर्जनसङ्कीर्णं राज्यञ्च प्राप्यते ननु ॥
कल्याणन्दी(दि)र्घमायुञ्च आरोग्यं [५]बहुसौख्यया ।
श्रिया रक्षा च[६] सम्पूर्णराष्ट्रञ्च प्राप्यते निशि ॥

अपि च ।

दशानां अकुशलानां च एकं मध्ये विनाशनम्[७] ।
मृषावाद अपि पापं तस्मिं स्नानाद्दु(दु)रीकृतम् ॥
स्नानकं प्रथमं कृत्वा ततश्च पितृतर्पणम् ।
आगन्तुकेभ्योऽर्थं दद्यात् अन्नवस्त्रादिकं अपि ॥
विशेषेण च यत्तीर्थे तत्क्षेत्रेशञ्च प्रपूजितम् ।

---

१ A जाग चापि, B जागं ।  २ B मुदा च अपि ।
३ B द्विजादय अपि, D द्विपादये ।  ४ A B फितञ्च क्षमञ्च मागलं ।
५ A बहुसौख्य, B वहा सौख्यया ।  ६ A श्रियाज्या च ।
D श्रियाज्यार० ।  ७ A अकुशलानां एकं मध्य विनासनम् ।

पुनः पुनः पूजा कृत्वा मनुजाद्यमानवा ॥
तीर्थे[१] गोस्तिना सह च भ्रातृमित्रपरिवृतम् ।
प्रतिदिने पूजा कृत्वा रात्रौ जागरणं कृतम् ॥
असमाप्ते दिने कार्ये पुनः पूजाकृतं कृतम्[२] ।
तन्नाथेशं तत्क्षेत्रेशं तदीश्वरं प्रपूजितम् ॥
पञ्चमे मनोरथे तीर्थे एकविंशतिवाशरम् ।
स्नानं प्राप्नोति नियतं मनुजा मानवादयः ॥
सर्वशास्त्रपरिपूरञ्च फलञ्च प्राप्यते ननु ।
तत्र तीर्थे स्नानाच्च[३] विशेषं प्राप्यते फलम् ॥
मार्गशुक्ले[४] पञ्चम्याञ्च धनौपि शनिवाशरे ।
मनोरथेऽपि तीर्थे च केशावत्यां विशेषतः ॥
सङ्गमे विमलावत्यां केशावत्यां मनोरथे ।
तत्रेश्वराय पूज्यञ्च विशेषेण तत्र स्थितान् ॥
मानुषाश्च योषितश्च स्नानतत्तीर्थकारितम् ।
तदुपचारविधिभिः तीर्थसे(शे)वा कृतं भवेत् ॥
गात्रेन चित्तेन ब्राह्म्या एकीभावकृतेन च[५] ।
मनचित्तं परिवर्ज्ये[६] ज्ञानचित्तञ्च प्राप्यते ॥
कार्त्तिके च पूर्णमास्या मार्गस्य[७] शुक्लपञ्चमै ।
एकविंशतिदिवसं विधिना स्नानमाचरेत् ॥

---

१ A D तिर्थम् । २ B मुदा । ३ B वाच०, D स्नाना च ।
४ B मार्गस्मुक्ले । ५ A ब्रह्मा एकीभावतेनच्च । ६ D परिवर्ज्ये ।
७ A मागस्य ।

पश्चाच्च सप्तदिवसं जपस्तपध्यानेन च ।
मन्त्रजापादिमालाञ्च(च) धारणीञ्च पठे(थे)न्मुदा ॥
दिने दिने दत्वा स्नात्वा दानं पूर्णकृतेन च ।
वस्त्रादिदं अतः तीर्थात् मनोरथं प्रपूरितम् ॥
पुष्पै धूपैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि ।
नानोपचारकैः पूज्यैः पूजयामास चैत्रजान् ॥
[1]निशी जागलणं कृत्वा प्रत्यूष[2]स्यां स्नानं दिने ।
अष्टाविंशतिदिनान्ते सम्पूर्णन्तु[3] पूर्णं कृतम् ॥
लङ्कावतारादियाना लोकोत्तरान् भाषजान् अपि ।
स्तोत्रयामास भावेन तीर्थसे(शे)वा परायणः ॥
विधिनोक्तेन इत्थं ये मुदा अपि च कारितम् ।
विधियुक्तं एवं कृत्वा मानव्यमानवादयः ॥
कृतं स्नानं पुनर्येऽपि वाञ्छितं लभ्यते फलम् ।
तस्मात्पुण्यप्रसा(शा)दाच्च कलीमलविनासिनी ॥

तद्यथा ।

मनसा वचसा कृत्या[4] पापकृतात्करी इति ।
रागद्वेषसम्मोहादि मनोद्भुतं मल इति ॥
मानव्यमानवाश्चापि कृतस्नानं तत्तीर्थके[5] ।
वाञ्छितं फलसम्प्राप्ता कलीमलविनाशि(सि)तम् ॥

१ A स्थिली । २ B प्रत्युषे । ३ B अभ्वरन्तु, D सम्पूर्णेन्दु
४ B omits कृत्या । ५ D कृतस्नानञ्च तीर्थके ।

अपि च।

अकुशलानाञ्च मध्ये एकं पापं प्रनाशितम्।
पैशुन्यमपि पापञ्च तस्मात्तीर्थाद्दूरी(लो)कृतम्॥
प्रथमं स्नानकं कृत्वा ततः पश्चात्[1] पितृतर्पणम्।
पुनश्च अतिथिभ्योऽपि द्रव्यं ददौ मुदा अपि॥
विशेषेण च[2] तत्तीर्थे स्नानकृतात्कुष्ठहरम्।
इति ज्ञात्वा मानुष्याश्च[3] पुनः पुनः स्नानं कृतम्॥
कुष्ठादिरोगनाशाय तत्तीर्थे च स्नानं कृतम्।
[4][मानुष्या इति मत्वा च विशेषेण स्नानं कृतम्॥]
असम्पूर्णे दिने कार्ये[5] तीर्थपूजा कृतं पुनः।
तत्रेश्वरं तत्क्षेत्रेशं तन्नाथञ्च प्रपूजितम्॥
षष्ठमनिर्मले तीर्थे[6] दिनानि एकविंशति।
विधिना स्नानं(न) दानञ्च कृतञ्च मानवादयः॥
एकाग्रचित्ते यः[7] स्नानं करोति तीर्थनिर्मले।
कलिमलानि नश्यन्ति प्राप्नोति विपुलां श्रियम्॥
पौषशुक्लषष्ट्याञ्च[8] मकरे रविवासरे।
तीर्थेऽपि निर्मलसङ्गे केशावत्यां त्रिशङ्कते॥

१ B तत्पश्चा। २ A विशेषे च। ३ D मनुष्याश्च।
४ D omits the line मानुष्या० &c.। ५ A कार्ये।
६ B षष्ठमे, D षष्ठमं निर्मलं तीर्थम्। ७ A D एकाग्रचित्त ये
८ D ०शुक्ले षष्ठ्याञ्च।

भद्रनद्यां केशावत्यां पुष्पवत्यां[1] विशेषतः।
निर्म्मलाख्येऽपि तीर्थे च त्रिवेणिसङ्गमे इव॥
मानव्यमानवाश्चापि तस्यां स्नानञ्च कारितम्[2]।
स्नानोपचारविधिना स्नानञ्चापि कृतं मुदा॥
संहननेन भाषया हृदयैकीकृतेन च।
इर्ष्या[3] चित्तं परित्यज्य पुण्यचित्तं कृतादपि॥
मार्गकृष्णप्रतिपद्या(:)[4] पौषशुक्लषष्ठीदिने[5]।
एकविंशतिदिवसं विधिना स्नानमाचरेत्॥
पश्चाच्च सप्तदिवसं जापस्तपध्यानेन च।
मन्त्रमालादियुक्तेन गाथा(ठा)दीश्च पठेन्मुदा॥
दिने दिने दत्वा स्नात्वा दानं पूर्णं कृतेन च।
कलौ मलानि[6] नश्यन्ति प्राप्नोति विपुलां श्रियम्॥
पुष्पैः धूपैश्च गन्धैश्च दीपैश्चापि नैवेद्यकैः।
नानोपचारकैः पूज्यैः पूजयामास चैत्रजान्॥
त्रपाजागर(ल)णं कृत्वा कल्यमुखे स्नानं दिने।
अष्टाविंशतिदिनान्ते मखपूर्णादिपाठकम्॥
सद्धर्म्मपुण्डरीकादीन् सूत्रजान्विविधानपि।
भाषयामास भावेन तीर्थसे(शे)वा परायणः॥
विधिनोक्तेन इत्थं ये कारित(ता)श्च मुदा अपि।

---

१ B पुष्पावत्याम्, D पुष्पवत्यां। २ A मानवाश्चापि तस्यां स्नानञ्च कारितं मुदा। ३ A इर्ष्या०। ४ B ०प्रतिपद्याम्। ५ D पौषशुक्लाष्टमी०। ६ B कलीमलानि, D कलिमलानि।

एवं कृत्वा विधि(यु)युक्तं पुरुषा नरा वध्वादयः ॥
कृतं स्नानं पुनर्येऽपि वाञ्छितं लभ्यते फलम् ।
तस्मात्पुण्यप्रसा(सा)दाच्च प्राप्नोति विपुलां श्रियम् ॥

तद्यथा ।

सरागद्वेषमोहादि दशाकुशलजं अपि ।
एवं कलिमलं पापं तस्मात्तीर्थात्प्रणश्यति ॥
अनेकरागद्वेषादि मोहजं[1] कलिनाशितम् ।
मनुजाद्यमानुष्याः श्रीशोभामपि लभ्यते ॥

अपि च ।

दशाकुशलानाञ्च मध्ये एकं पापं[2] प्रनाशितम् ।
पारुष्यं अपि पापञ्च तस्माद्दूली(री)कृतं पुनः ॥
प्रथमं स्नानकं कृत्वा ततः पश्चात्पितृतर्पणम् ।
पुनश्च याचकेभ्योऽपि धनादिञ्च(श्च) ददौ मुदा ॥
विशेषेण च तत्तीर्थे श्रीस्वयम्भू[3] प्रपूजितम् ।
पुनः ये मानवा यापि सुद्रव्यं लभ्यते पुनः ॥
पुत्रपौत्री[4] परित्यज्य सुतात्मजाद्य अपि ।
तत्तीर्थे स्वर्णं अर्घेण[5] तथैव लभ्यते धनम् ॥
प्रतिदिने असमाप्ते काये नित्यं पूजा कृतम् ।
तत्रेश्वरं तत्क्षेत्रेशं तन्नाथञ्च प्रपूजितम् ॥

---

१ B देहिजं । २ A D omit पापम् । ३ A स्वयम्भू ।
४ B °पौत्रा । ५ C जन्यते ।

सप्तमं निधानतीर्थं घस्राणि एकविंशति ।
विधिना दानं स्नानञ्च कृतञ्च मनुजादय: ॥
तत्तीर्थे एकचित्तेन मनुजा स्नानमाचरेत् ।
धनधान्यादिकं चापि फलं समभिभाग्भवेत् ॥
माघमासे सितपक्षे सप्तम्यां कुम्भसञ्ज्ञके[१] ।
रविवारे विशेषेण निधानतीर्थे(र्थे) स्नानकम् ॥
स्वर्णव(म)त्यां केशावत्यां सङ्गमेऽपि विशेषत: ।
निधानतीर्थके नाम्नि तटीश्वरेण संयुते ॥
योषाश्च पुरुषापि[२] तस्यां स्नानकारितम् ।
तस्योपचारविधिभि: स्नानं कृतं मुदा अपि ॥
वपुषा[३] सरस्वत्या च स्नान्तैनैककृतेन च ।
दम्भचित्तं परित्यज्य धर्मचित्तं कृतादपि ॥
पौषकृष्णद्वितीयाया: माघशुक्लसप्तमीदिने[४]
एकविंशति
ततश्च सप्तदिवसं जपतप[५]ध्यानेन च ।
मन्त्रसूत्रादियुक्तेन यानसूत्रं पठेन्मुदा ॥
प्रतिदिने प्रतिस्नात्वा[६] दानं पूर्णं कृतेन च ।
सर्वधनै: सर्वधान्यै: घटेऽपि परिपूरकम् ॥
धूपै: पुष्पैश्च दीपैश्च नैवेद्यै गन्धकैरपि ।

---

१ A °संग्रके, B °सञ्ज्ञके । २ B या मानव्यश्च मानवाश्च
३ A वर्षेण । ४ B माघशुक्लाष्टमी° । ५ B जपस्तप° ।
६ A स्नात्वा ।

नानोपचारविधिभिः अर्च्चयामास चेत्रजान् ॥
चपाजागरणं कृत्वा प्रत्यूषेऽपि स्नानमपि[१] ।
अष्टाविंशतिघस्नान्ते क्रतु[२]पूर्णादिपाठ(त)कम् ॥
तथागतगुह्यकादीन् विविधान् यानजानपि ।
वाचयामास भावेन[३] तस्य से(शे)वा परायणुः ॥
उक्तेन विधिना इत्थं ये कारितं मुदा अपि ।
कृत्वा विधियु(र्यु)क्तं एकमनुजादय मानवाः ॥
स्नानं कृतं पुनः येऽपि लभ्यते वाञ्छितं फलम् ।
तस्मात्प्रसादपुण्याच्च दारि(लि)द्रादीन् दूरी(लौ)कृतम् ॥

तद्यथा ।

दारिद्रपीडिता[४]न्दुःखान् नानादुःखा[५]न्विनश्यति ।
नानाधनान् नानाद्रव्यान्[६] नानाव्रीहींश्च प्राप्यते[७] ॥
अनेगरत्नपूर्णञ्च श्रीसम्पदं प्रलभ्यते ॥
मनुजादयमानुष्याः श्रीशो(सो)भामपि लभ्यते ।

अपि च ।

अकुशलदशानाञ्च एकमध्ये प्रनाशितम् ।
सम्भिन्नप्रलापञ्चापि तस्मात्पुण्याद्दूरी(लौ)कृतम् ॥
प्रागपि[८] स्नानकं कृत्वा ततोऽपि पितृतर्पणम् ।

१ A स्नानअपि । २ B कर्णा० । ३ A वाचामास भावेन, D वाचयामास भावे । ४ D दारिद्रपिरिड्ताम् । ५ C omits नानादुःखान्, D नानादुःखा । ६ B omits नानाद्रव्यान् । ७ D नानाधना नानाद्रव्या नानाव्रीहि च प्राप्यते । ८ D प्रागेऽपि ।

अथ जनेभ्यः याञ्चेभ्यः धान्यादींश्च ददौ मुदा ॥
विशेषेण च तत्तीर्थे तत्चेत्रेशं प्रपूजितम् ।
पुनर्ये मानवा यापि सुसम्पदं प्रलभ्यते ॥
पुत्रपौत्रा परिवृत्य मित्रामात्यसुहृदपि ।
दाशकैर्दा(दा)शिभिः युक्तं[1] श्रीसम्पदं प्रलभ्यते ॥
दिने प्रति असमाप्ते पूजा कृतं पुनः पुनः ।
तदी(दि)श्वरं तत्चेत्रेशं तन्नाथश्च प्रपूजितम् ॥
अष्टमे ज्ञानतीर्थेऽपि अहानि एकविंशति ।
स्नानं दानञ्च विधिना कृतञ्च मानवादयः ॥
तत्तीर्थे एकमनसा विधिवत् स्नानमाचरेत् ।
सुखं शुभं फलञ्चापि तस्मात् समुपजायते ॥
फाल्गुणशुक्लअष्टम्यां मीनेऽपि शनिवासरे ।
नामेन ज्ञानतीर्थे च ज्ञानफलप्रद[2] अपि ॥
केशावत्यां सुकः पापनाशिन्या सङ्गमे अपि ।
तत्रेश्वरेण सम्प्राप्ते विशेषैरच तीर्थके ॥
सीमन्तिन्ये[3] पुमान्स[4] स्नानं तस्याञ्च कारितम् ।
स्नानोपचारविधिना स्नानञ्चापि कृतं मुदा ॥
शरी(रि)रेण वचसा च हृदा एकीकृतेन च ।
मायाचित्तं परित्यज्य मुनिचित्तं कृतादपि ॥
माघकृष्णतृतीयाया: फाल्गुण[5]शुक्लअष्टमी ।

---

१ D युक्तौ । २ D ०प्रदा । ३ B श्रीमन्तिन्य ये ।
४ D पुमान् सस्या । ५ D फाल्गुने ।

एकविंशतिदिवसं विधिना स्नानमाचरेत् ॥
पश्चात्पि सप्तदिवसं तपजपध्यानेन च[1] ।
मन्त्रश्चादियुक्तेन सद्धर्मादीन् पठे(थे)त्मुदा ॥
प्रतिदिने स्नात्वा दत्वा पूर्णं दानं कृतेन च ।
सुखं[2] मोक्षं फलं प्राप्ता स्वर्गपदं प्रलभ्यते ॥
दीपैर्गन्धैश्च पुष्पैश्च धूपैर्नैवेद्यकैरपि ।
पञ्चोपचारविधिभिः पूजयामास क्षेत्रजान् ॥
त्रियामायागरं कृत्वा प्रातःस्नानं प्रतिदिने ।
अष्टाविंशतिदिनान्ते यज्ञं कृत्वा सुपूर्णकम् ॥
ललितविस्तरादींश्च धारणीन्वि(वि)विधानपि ।
पाठयामास भावेन तस्य से(शे)वा कृतं ननु[3] ॥
विधिनोक्तेन ये इत्थं कारितञ्च मुदा अपि ।
एवं कृत्वा विधि(धि)युक्तं द्विजादय नरा अपि ॥
पुनः कृतं स्नानं येऽपि वाञ्छितं लभ्यते फलम् ।
तस्मात् पुण्यप्रसा(शा)दाच्च सुखं मोक्षं फलं लभ्यते ॥

तद्यथा[4] ।

जनेनापि सपूर्णञ्च[5] धनेनापि प्रपूरितम् ।
सन्तानेन सुपूर्णञ्च इत्थं फलं(ल) प्रलभ्यते ॥
पुत्रपुत्र्यादिभिर्वंशं भूतगतं चरित्रकम्[6] ।
तैरपि सह सङ्गेन ते मोक्षमधिगच्छति ॥

---

१ B पश्चाच्च ...... जपस्तप० । २ D सुखमोक्षफलम् । ३ B ननुः ।
४ B adds तद्यथा । ५ D सुपूर्णो च । ६ B च पित्रकम् ।
D पुत्रपौत्र्यादिभिर्वंशं भूतसत्त्वा चरित्रकम् ।

अपि च ।

दशानां अकुशलानां एकं मध्ये(धे) विनाशितम् ।
अभिध्यादिकर्मान्तञ्च तस्य स्नानाद्दूरी(ली)कृतम् ॥
स्नानकं प्रथमं कृत्वा ततश्च पितृतर्पणम् ।
याचेभ्य अर्थं दद्याच रत्नादिकं ददौ अपि ॥
विशेषे च तत्तीर्थे तत्क्षेत्रेशं प्रपूजितम् ।
पुनः पुनः पूजां कृत्वा मनुजाद्यमानवाः ॥
तीर्थे च यात्रीणा[1] सह भ्रातृमित्रपरिवृतः ।
प्रतिदिने पूजां कृत्वा रात्रौ जागरणं कृतम् ॥
असमाप्ते दिन कार्ये[2] नित्यं पूजा कृतं कृतम्[3] ।
तन्नाथेशं तत्क्षेत्रेशं तदीश्वरं प्रपूजितम् ॥
नवमे च चिन्तामणौ तीर्थैकविंशतिदिनं[4] ।
स्नानं प्राप्नोति ये नियतं मानवाद्यमानुषाः ॥
तस्मिं तीर्थे स्नानाच्च विशेषं लभ्यते फलम् ।
दीर्घायु बहुपुत्रार्थं मोक्षं सौखञ्च लभ्यते ॥
चैत्रशुक्लदशम्याञ्च सोमेऽपि शुक्लवासरे ।
चिन्तामणौ परतीर्थे वाग्मत्याञ्च विशेषतः ॥
सङ्गमे केशावत्याञ्च कनकवत्याञ्च[5] सङ्गमे ।
तत्रेश्वराय पूज्ये च[6] विशेषेण तत्र स्थितान् ॥

१ A यास्त्रीणा, B पात्रिणा । २ D दिनकार्ये । ३ B मुद्रा
४ A ०दिन । ५ A केशावत्या च कनकवत्या च । ६ B पूज्यश्च

मर्त्याश्च वनिताश्चापि स्नानं तत्तीर्थकारितम् ।
तदुपचारविधिभिः तीर्थशेवां कृतं भवेत् ॥
तनुना गिरा मनेन एकीभावकृतेन च ।
मात्सर्ज्य(ज्य)चित्तं सन्त्यज्य बोधिचित्तञ्च प्राप्यते ॥
फाल्गुणकृष्णपञ्चम्याः चैत्रशुक्लदशमके ॥
एकविंशतिदिवसं विधिना स्नानमाचरेत् ॥
पश्चात्पि सप्तदिवसं योगस्तपध्यानेन च ।
मन्त्रजापादियुक्तेन धारणीश्च(च) पठेत्मुदा ॥
दिने दत्वा स्नात्वा दीनं पूर्णं पात्रे कृतेन च ।
आभरणादिकं तस्मात् मनोरथं प्रपूरितम् ॥
पुष्पै धूपैश्च गन्धैश्च दीपै नैवेद्यकैरपि ।
नानोपचारकैः पूज्यैः पूजयामास चैत्रजान् ॥
यामिनीजागरं कृत्वा प्रभातेऽपि स्नान कृतम् ।
अष्टाविंशतिदिनान्ते सर्वपूर्णादि कारितम् ॥
सुवर्णप्रभादियानं महायानञ्च पाठकम् ।
स्तोत्रयामास भावेन तीर्थसे(शे)वा परायणुः ॥
विधिनोक्तेन इत्थं ये मुदा अपि च कारितम् ।
विधिर्युक्तं[1] एवं कृत्वा मानव्यमानवादयः ॥
कृतं स्नानं पुनः येपि वञ्छितं लभ्यते फलम् ।
दीर्घायुमपि आरोग्यं धनधान्यं प्रलभ्यते ॥

१ D एवं कृत्वा विधिर्युक्तम्

तद्यथा ।

आयुर्वृद्धिर्यशोवृद्धिः वृद्धिप्रज्ञा तथा अपि ।
सुखं चापि जनं चैव धनं सन्तानमेव च ॥
इत्थमेव सप्तवृद्धिः मनुजाद्यः प्रापिताः ।
तत्तीर्थस्य प्रसादाच्च निःसंशयं प्रलभ्यते ॥

अपि च ।

अकुशलानां दशानां मध्ये एकं(क) प्रनाशितम् ।
अभिध्याव्यापादपापं आशु तीर्थाद्दूरी(री) कृतम्॥
प्रथमं स्नानकं कृत्वा ततोऽपि पितृतर्पणम् ।
पुनश्च अतिथिभ्योऽपि दानं ददौ मुदा अपि ॥
विशेषेण च तत्तीर्थे स्नानादि(दी)षु फलं लभे(त्) ।
इति मत्वा च मानुष्याः स्नानं पुनः पुनः कृतम् ॥
सर्वेषां अपि तीर्थानां तत्तीर्थञ्च[1] प्रसिद्धकम् ।
असम्पूर्णे दिने कार्ये(य) तीर्थसे(शे)वा कृतं पुनः ॥
तत्रेश्वरं तत्क्षेत्रेशं तन्नाथञ्च प्रपूजितम् ॥
दशमे प्रमोदतीर्थेऽपि दिवसान्येकविंशति ।
विधिना स्नानं(न) दानञ्च कृतञ्च मनुजाद्यः ॥
तत्तीर्थे एकचित्तेन मानुजाः स्नानमाचरेत् ।
रतिप्रीतिकर[2]ञ्चापि सुखञ्च फललभ्यते[3] ॥

---

१ B omits तत्तीर्थञ्च । २ B ०फलम् ।
३ B प्रलभ्यते ।

राध[1]शुक्ले एकादश्या:(श्या:) वृषेऽपि गुरुवासरे।
प्रमोदतीर्थे नाम्नि द्वाभ्यामपि च सङ्गमे ॥
रत्नावत्यां रचिते सङ्गे[2] वाग्मत्याञ्च विशेषतः।
तदीश्वरेण संयुक्ते प्रज्ञोपायमिव स्थिते ॥
मानवा नार्य्यपि चापि[3] तस्यां स्नानञ्च कारितम्।
पञ्चोपचारविधिभिः स्नानं कृतं[4] मुदा अपि ॥
[5][विग्रहेन वाचा हृदा एकभावकृतेन च[6] ॥
[7]क्रोधचित्तं परित्यज्य पुण्यचित्तं कृतादपि।
चैत्रकस्य कृष्णषष्ठ्या: राधशुक्लएकादशी ॥
एकविंशतिदिवसं] विधिना स्नानमाचरेत्।
ततश्च सप्तदिवसं मन्त्रजपध्यानेन च ॥
जपमालादियुक्तेन यानसूत्रं पठेत् मुदा।
प्रतिदिने प्रतिस्नाला दानं पूर्णकृतेन च ॥
कलुषञ्च परित्यज्य सुरूपञ्च प्रलभ्यते।
धूपैः पुष्पैश्च दीपैश्च नैवेद्ये गन्धकैरपि ॥
नानोपचारविधिभिः अर्च्चयामास चैत्रजान्।
विभावरीजागरञ्च अर्द्धमुखस्नानं अपि ॥

---

१ B माघ०। २ D रत्नावत्याचित्ते सङ्गे। ३ B D मानव्यमानवाश्चापि।
४ D कृतं स्नानम्। ५ C omits the portion bracketted.
६ B D एकत्वैव कृतेन च। ७ B D omit the line commncing with क्रोधचित्तं।

अष्टाविंशद्वासरान्ते अध्वरं पूर्णकं कृतम्।
पञ्चलक्षादिपाठञ्च नानापाठानपि तथा॥
भाषयामास भावेन तस्य से(शे)वापरायणः।
उक्तेन विधिना इत्थं ये कारितं अपि मुदा॥
कृत्वा विधिर्युक्तमेव मनुजा मानवादयः।
स्नानं कृतं पुनः येऽपि लभ्यते वाञ्छितं फलम्॥
तस्मात्पुण्यप्रशादाच्च रतिप्रीतिसुखं भवेत्।

तद्यथा॥

रतिप्रीतिसुखञ्चापि प्राप्यते मानवादयः।
स प्रीतिसुखं वापि फलञ्च लभ्यतेनिशम्॥
अनेगदोषदुष्टादि मायाचित्तैः परित्यज्येत्।
तत्तीर्थे स्नानमात्रेण सर्वदोषं दूलीकृतम्[१]॥

अपि च॥

अकौशल[२]दशानां एकं मध्ये प्रनाशितम्।
मिथ्यादृष्टिमपि पापं तस्मात्तीर्थात्प्रनाशितम्॥
प्रागपि स्नानकं कृत्वा ततोऽपि पितृतर्पण(न)म्।
अतोऽपि आगन्तुकेभ्यो ब्रीहिआदिन्ददौ[३] मुदा॥
विशेषेण च तत्तीर्थे स्नानं कृतं[४] मुदा अपि।
मानव्यमानूजा[५]श्चापि तत्क्षेत्रेशं प्रपूजितम्॥

---

१ D सर्व्वदोषदूरीकृतम्। २ B D अकौशलानाम्।
३ D आदिददौ। ४ D कृतं स्नान। ५ B ०मनुजा।

आत्मजेन पुत्र्या युक्त्यान्त्रि(त्रि)मित्रसुहृदा सह ।
मुदा यात्राकृतं स्नानात् तस्मात्पुण्यं[1] प्रलभ्यते ॥
उक्तमित्थं दिने पूजां असमाप्ते च कार्य्यके ।
तत्क्षेत्रेशं तदीश्वरं तन्नाथञ्च प्रपूजितम् ॥

एकादशे सुलक्षणे दिवसान्येकविंशति ।
विधिना स्नानं दानञ्च[2] कृतञ्च मनुजादयः ॥
एकाग्रचित्त तत्तीर्थे स्नानं कृतञ्च मानवाः ।
रूपसौभाग्यकं वापि फलसमाधिभाग्भवेत्[3] ॥
ज्येष्ठशुक्लद्वादश्याञ्च मिथुने[4] बुधवासरे ।
तीर्थे सुलक्षणे चापि प्रज्ञोपाय इव स्थिते ॥
चारुमत्यां वाग्मत्याञ्च सङ्गमे च प्रसिद्धके[5] ।
तत्स्थानेश्वरेण[6] युक्ते[7] वाग्मत्यां विशेषतः ॥
तत्रस्थ मनुजाश्चापि तत्तीर्थे स्नानकं अपि ।
पञ्चोपचारकै युक्तैः तीर्थसे(शे)वा कृतं कृतम् ॥
देहेन वाण्या चेतसा एकभावकृतेन च ।
मत्सरचित्तं सन्त्यज्य सच्चित्तञ्च[8] कृतं मुदा ॥
वैशाखकृष्णसप्तम्यां ज्येष्ठशुक्लेऽपि द्वादशे ।
एकविंशतिदिव(श)सं विधिना स्नानमाचरेत् ॥

---

१ D पुण्य । २ D स्नानदानञ्च । ३ A ०समाभिभाभवेत् ।
४ D मिथुने च । ५ D प्रसिद्धये । ६ A D तत्स्थानेशश्वेरण ।
७ B युक्तम् । ८ B omits सन्त्यज्य सच्चित्तं, D सत्यज्य सचित्तं ।

ततोऽपि सप्तदिवसं जपस्तपध्यानेन च।
मन्त्रसूत्रादियुक्तेन सद्धर्मञ्च पठेत् मुदा॥
प्रतिदिने स्नात्वा दत्वा पूर्णदानं कृतेन च।
रूपसौभाग्यकं प्राप्ता शुद्धदेहञ्च लभ्यते॥
दीपैगन्धैश्च पुष्पैश्च[१] नैवेद्यैर्धूपकैरपि।
पञ्चोपचारविधिभिः पूजयामास चेत्रजान्॥
रजनीजागरं कृत्वा प्रत्यूषस्थिरस्नानं कृतम्।
अष्टाविंशतिदिनान्ते या(जा)गञ्चापि च कारितम्॥
सप्तवारादिपाठाञ्च धारणीन् विविधानपि[२]।
पाठयामास भावेन तस्य से(प्रे)वा कृतं पुनः॥
विधिनोक्तेन य इत्यं कारितञ्च मुदा अपि।
एवं कृत्वा विधियुक्तं द्विजादय नरा अपि॥
पुनः कृतं स्नानं येऽपि वाञ्छितं लभ्यते फलम्[३]।
तस्मात्पुण्यप्रसादाच्च रूपसौभाग्यं प्राप्यते॥

तद्यथा॥

रूपवान् सुन्दरं(र) देहं सर्वलक्षणमण्डितम्।
स्त्रि(चि)यस्य पुरुषा वापि[४] दिव्यदेहञ्च प्राप्यते॥
सर्वेषां च जनानाञ्च सौभाग्यफल लभ्यते।
भोग्येन च अलङ्कारैः(लैः) सुखभोग्यं प्रलभ्यते॥

---

१ B omits पुष्पैश्च। २ A धारणीन्विधानपि ये।
३ A omits फलम्। ४ B D स्वापि।

अपि च ॥

पञ्चमहापातकादीन् पापभोग्यं दूरी(री)कृतम्।
तस्य तीर्थस्य स्नानाच्च सर्वपापं(प) प्रनाशितम् ॥
स्नानकं प्रथमं कृत्वा ततश्च पितृतर्पणम्।
प्रार्थनेभ्यो ददौ दानं विविधान् वस्त्रजानपि ॥
विशेषेण च तत्तीर्थे तत्क्षेत्रेशं प्रपूजितम्।
पुनः पुनः पूजां कृत्वा मनुजा मानवादयः ॥
तीर्थगोष्ठी(ष्ठि)ना सह च भ्रातृमित्रपरिवृतः।
प्रतिदिने पूजां कृत्वा रात्रौ जागरणं कृतम् ॥
असमाप्ते कार्य्ये दिने[1] पुनः पूजां कृतं कृतम्।
तन्नाथेशं तत्क्षेत्रेशं तदीश्वरं प्रपूजितम् ॥
द्वादशे च जयतीर्थे एकविंशतिवासरम्।
प्राप्नोति नियतं[2] मनुजा मानव्य[3]मानवादयः ॥
तत्तीर्थञ्च स्नानाच विशेषं लभ्यते फलम्।
द्वेषादिशत्रुनाशाय फलञ्च प्राप्यते ननु ॥
शुचि[4]शुक्लत्रयोदश्यां कर्कटे[5] सोमवासरे।
जयतीर्थे विशेषेण वाग्मत्या च विशेषतः ॥
प्रभामत्याञ्च वाग्मत्यां सङ्गमे जयतीर्थके।
तत्क्षेत्रेशाय पूज्यञ्च विशेषेण च कारितम् ॥

---

१ B दिने कार्य्यम्। २ D स्नात्वा प्राप्नोति।
३ B D omit मानव्य। ४ A omits शुचि०। ५ A कर्कटे।

प्रदक्षिणं नराश्चापि[१] स्नानं तत्तीर्थके अपि ।
नानोपचारविधिभिः तीर्थसे(शे)वां कृतं भवेत् ॥
कायेन वाचा मनसा एकभावकृतेन च ।
मन्दचित्तं परित्यज्य मुनिचित्तञ्च प्रापितम्
ज्येष्ठकृष्णाष्टम्यांश्च शुचिशुक्लत्रयोदशे ।
एकविंशतिदिवसं(शं) विधिना स्नान[illegible]त् ॥
पश्चाच्च सप्तदिवसं [२][जपतप[३]ध्यानेन च ।
मन्त्रजापादिमालाञ्च पठेन्मुदा[४] सत्धारणी ॥
दिने दिने दत्वा स्नात्वा दानं पूर्णं(र्णं) कृतेन च ।
द्रव्यादिफलस]म्प्रा(प्त) अतः तीर्थात् प्रलभ्यते ॥
पुष्पै धूपैश्च दीपैश्च नैवेद्यकैरपि ।
नानोपचारकैः पूज्यैः पूजयामास चैत्रजान् ॥
तपस्विनीजागरणञ्च प्रभाते च स्नानमपि ।
अष्टाविंशतिदिनान्ते कृतुपूर्णं कृतं अपि ॥
करुणापूण्डरीकादीन्[५] सद्धर्मान्पाठयन्मुदा ।
मनुजाद्यमानूष्याः तस्य से(शे)वा परायणः ॥
विधिनोक्तेन इत्थं ये मुदा अपि च कारितम् ।
विधिर्युक्तं एवं कृत्वा[६] मानव्यमानवादयः ॥

१ D प्रदक्षिणराश्चापि । २ C omits the portion bracketted.
३ B D जपस्तप० । ४ B मन्त्रायानं पठेन्मुदा, D माला च पथेन्मुदा सधारणी । ५ A ०पूर्णरीकादीन् । ६ D एवं कृत्वा विधिर्युक्ताम् ।

कृतं स्नानं पुनर्येऽपि वाञ्छितं लभ्यते फलम्।
तस्मात्पुण्यप्रसा(शा)दाच्च कलिमलविनाशिनी॥

तद्यथा।

रागद्वेषसमोहादि गुह्यशत्रून् प्रनश्यति।
तस्मिं तीर्थे स्नानाच्च कलुषमपि नश्यति॥
मनुजासुरभूतादीन् सर्वशत्रून्प्र(प्र)नाशि(सि)तम्।

अपि च।

सर्वेषामपि पापानां सङ्गभेदश्च नाशि(सि)तम्।
तस्मात्तीर्थात् सनानाच्च[1] फलञ्च प्राप्यते ननु॥
प्रथमं स्नानकं चापि ततःपश्चात् पितृतर्पणम्।
पुनश्च अतिथिभ्योऽपि धनं ददौ मुदा अपि॥
विशेषेण च तत्तीर्थे स्नानं कृत्वा शत्रुहरम्[2]।
इत्थं ज्ञात्वा च मानुष्या तस्मिन्[3] पुनः स्नानं कृतम्॥
रो(रा)गादिशत्रुनाशाय तत्तीर्थे स्नानं कृतम्।
मनुष्या इति मत्वा च विशेषैर्लभ्यते फलम्॥
असम्पूर्णे दिने कार्य्ये तत्तीर्थस्य सेवा कृतम्।
तत्रेश्वरं तत्क्षेत्रेशं तन्नाथञ्च च प्रपूजितम्॥
इत्थं द्वादशतीर्थानां फलानि(नी) च पृथक् पृथक्।
मानवाश्च प्रइच्छन्ति पृथक् पृथक् च्छेवां(वा)कृतम्॥

१ D स्नानानाच। २ A कृतच्छत्रुहरम्, D कृच्छत्रुहरम्
३ A D मानुष्यान्तस्मी।

संपूर्णं फलं मित्यं ये यूयंपि[1] वाञ्छितं भवेत् ।
द्वादशानां च सर्वेषां तीर्थसे(शे)वा कृतं भवेत् ॥
द्वादशानां च तीर्थानां फलमुक्तैस्तथागतैः ।
अतीतानागतैर्बुद्धैः पुनः पुनः प्रशंसितम् ॥
भूतभविष्यवर्त्ते च अत्र वा[2] वासिना जनाः ।
मानयिष्यन्ति[3] मानयन् मानित भवति सदा ॥

पुनः शृणु मैत्रेय तत्रोत्पन्नतीर्थानां फलम्[4] ।
पृथक् पृथक् स्नानस्य कथयामि फलं पृथक् ॥
लोकानां च हितार्थाय ब्राह्मणानां विशेषतः ।
[5]तीर्थिकानाञ्च हर्षाय वक्ष्येऽहं उत्पन्नतीर्थकम् ॥

प्रथमे चैत्रकृष्णाञ्च[6] प्रतिपद्यां रविवासरे ।
मेषसंज्ञे च संक्रान्तौ अनालिंगे च तीर्थके[7] ॥
मानव्यमानवाश्चापि तत्तीर्थेऽपि[8] स्नानं कृतम् ।
तस्य पुण्यप्रसा(शा)दाच्च(च) आयुर्वृद्धिं[9] फलं लभेत्

द्वितीये वैशाखकृष्णे द्वितीयासोमवासरे[10] ।

१ B यूयञ्च । २ B D अत्रैव । ३ D मानयन्मानयिष्यन्ति ।
४ D पुनः शृणु मैत्रेय तीर्थानां फलमुत्तमम् । ५ B तीर्थिकानां हिताय वक्ष्येऽहं उपतीर्थकम् D तीर्थिकानां हर्षाय वक्ष्येऽहं उपतीर्थिकम् ।
६ B °कृष्णे च । ७ B D मेषाख्येऽपि च .......... सुतीर्थके ।
८ B हि । ९ D आयुर्वृद्धी । १० B राधकृष्णे च .... इन्दुवारयोः ।

[१]वृषे अपि च संक्रान्तौ मणिगिरे च[२] तीर्थके ।
मनुजा महिलाश्चापि तत्र तीर्थे स्नानं[३] कृतम् ॥
तस्मात् पुण्यप्रशादाच्च यशवृद्धिं[४] फलं लभेत् ॥
तृतीये ज्येष्ठ[५]कृष्णे च तृतीयाबुद्धवासरे ।
मिथुनेऽपि च संक्रान्तौ गोड़ावर्यां च तीर्थके ॥
नानाश्च[६] अवरावापि तीर्थे तत्र स्नानं कृतम् ।
तत्तीर्थप्रसा(शा)दाच्च प्रज्ञावृद्धिं फलं लभेत् ॥
चतुर्थे आषाढे कृष्णे पञ्चम्यां गुरुवासरे ।
कर्कटेऽपि च[७] संक्रान्तौ नदिकठे च[८] तीर्थके ॥
स्त्रीयश्च मानुषाश्चापि तस्मिं तीर्थे स्नानं कृतम् ।
तस्मात्तीर्थप्रसादाच्च[९] जनवृद्धिफलं लभेत् ॥
पञ्चमे[१०] श्रावणकृष्णे षष्ठ्यां च शुक्रवासरे ।
सिंहेऽपि च संक्रान्तौ माता तीर्थे[११] विशेषतः ॥
योषिद मानुषाश्चापि तीर्थे तस्मिं च स्नानकम्[१२] ॥
तस्मात् पुण्यप्रसादाच्च धनवृद्धिं प्रलभ्यते ॥

१ B वृषाख्ये च सङ्क्रान्तौ शशिराद्धके च तीर्थके । २ D मनसीला च ।
३ A स्नानकं । ४ B तत्तीर्थस्य प्रसादाच्च जस० । D जशवृद्धिम् ।
५ B शुचि० । ६ B D नराश्च अवराचापि । ७ A D कर्कटेऽपि च ।
८ B नदिकाठे च । D नदीकाथे च । ९ B तत्तीर्थस्य प्रसादाच्च ।
१० B शीशगे । D पञ्चमे श्रावणेकृष्णे । ११ B पञ्चास्ये च...अम्बातीर्थे ।
१२ B तत्तीर्थे स्नानकं कृतम् ।

षष्ठे च[१] भाद्रवकृष्णे सप्तम्यां शनिवासरे ।
कन्यायामपिसङ्क्रान्तौ मच्छमुखे[२] च तीर्थके ॥
पुरुषा मानवा रामाश्च तीर्थेऽस्मिं स्नानकं भवेत्[३] ।
तत्तीर्थस्य प्रसादाच्च पुत्रवृद्धिं प्रलभ्यते ॥
अष्टमे[४] कार्त्तिके कृष्णे दशम्यां शुक्रवासरे ।
विच्छे अपि च सङ्क्रान्तौ कृतितीर्थे प्रसिद्धके[५] ॥
पञ्चजना अपि मत्याः[६] स्नानं कृतं तत्तीर्थके ।
तस्मात्तीर्थप्रसादाच्च पौत्त्रौ[७]फलं प्रलभ्यते ॥
नवमे[८] मार्गकृष्णे च एकादश्यां गुरुवासरे ।
धनूरपि च सङ्क्रान्तौ [९][नवलिङ्गे च तीर्थके ॥]
पुमान्सश्च प्रदर्शिन्यः तत्तीर्थेऽपि स्नानं कृतम् ।
तस्य तीर्थप्रसादाच्च स्त्रीलाभश्च प्रलभ्यते ॥
दशमे[१०] पौषकृष्णेऽपि द्वादश्यां बुधवासरे ।
मकरेऽपि च सङ्क्रान्तौ काकेश्वरे च तीर्थके ॥
पुरुषा वनिताश्चापि तीर्थे तत्र स्नानं कृतम् ।
तस्य पुण्यप्रसादाच्च मित्रलाभं प्रलभ्यते ॥
एकादशे माघकृष्णे त्रयोदश्यां सोमवासरे[११] ।

---

१ B ऋतौ च । २ B मच्छाख्ये । ३ B पुरुषा मानव्यश्चापि तस्मिन् तीर्थे स्नानं कृतम् । ४ B सङ्कूले । ५ B वृद्धनीलकण्ठाख्यके । ६ B पञ्चजनाः श्रीमन्तिन्यः । ७ D पौत्रौ० । ८ B ग्रहे तु । ९ C omits the portion bracketted. १० B दिगेव । ११ B रौद्रेऽपि च तप कृष्णे त्रयोदश्यां मृदुवासरे ।

[१]कुम्भे अपि च सङ्क्रान्तौ ते चापे चापि तीर्थके[२] ॥
नार्य्ये अपि[३] मनुष्याश्च तीर्थे तस्मिं स्नानं कृतम् ।
तत्तीर्थस्य प्रसादाच्च नानारत्नं प्रलभ्यते ॥
द्वादशे[४] फाल्गुण(णे)कृष्णे अमावास्यां रविवासरे ।
मीनाख्येऽपि[५] च सङ्क्रान्तौ वागेश्वरे च तीर्थके ॥
मानव्य मानवाश्चापि तस्मिं तीर्थे स्नानं कृतम् ।
तत्तीर्थस्यापि पुण्याच्च[६] नानाव्रीहिं(हि) प्रलभ्यते ॥
इत्युत्पन्नतीर्थानां[७] द्वादशानां विशेषतः ।
ये वाञ्छितं फलं पृथक् पृथक् स्नानं कृतम्[८] ॥
यूयं पि[९]संपूर्णं फलं इच्छन्ति ये च मानवाः ।
संपूर्णोत्पन्नतीर्थेऽपि[१०] स्नानं कृतं च निश्चयम्(य) ॥
[११]यद्वसंभेदतीर्थानां द्वादशानां अस्तिफलम्[१२] ।
तद्वत् उत्पन्नतीर्थानां सर्वेषां फलमस्ति च ॥
अथ च शृणु मैत्रेय सर्वतीर्थानां च फलम्[१३] ।
यत्रापि नदीसंभेदं तत्र तीर्थं प्रकीर्त्तितम् ॥
जलोत्पन्नरत्नानि च यत्र नेपाले(ल) संस्थितम् ।

---

१ B घटेऽपि च संक्रान्तौ तस्मिन् वा पञ्चतीर्थके ।
२ D ते चापि चापतिर्थके । ३ B वाव । ४ B ऋषभे ।
५ B भषाख्यो । ६ B तत्तीर्थस्य प्रसादाच्च ।
७ B D इत्येवं पुण्यतीर्थानाम् । ८ D कृतं मुदा । ९ B नार्य्यपि ।
१० B संपूर्णोत्पुपतीर्थेषु । ११ B यद्वदसंभेदं यद्वत् ।
१२ D द्वादशानास्ति फलंभवे । १३ D सर्व्वत्र तीर्थानाञ्च फलं पुनः ।

तत्र तीर्थानि ज्ञातव्यं अत्र नेपालवासि(सि)नः ॥
श्रावणस्या(स्यां) पूर्णमास्यां सिंहे श्रावण ऋक्षके[१] ।
सर्वत्र नदीसम्भेदे जलोत्पन्ने च गर्त्तके ॥
ह्रदे च पल्वले कूपे सरसि वाप्यां पनाल्यां[२] ।
जलाश्रयेषु एतेषु स्नानं कृतञ्च मानवाः ॥
मानव्य मानवा[३]श्चापि यत्र यत्र प्रदृच्छन्ति ।
तत्र तत्रापि स्नानाच्च नानाफलं प्रलभ्यते ॥
पुष्पैर्धूपैश्च दीपैश्च गन्धैर्नैवेद्यैर्दुग्धकैः[४] ।
सर्वाश्च[५]नागिनीर्नागान् नागगृहञ्च पूजितम् ॥
इत्थं ये मानवाः सर्वे सर्वान्नागाञ्च[६] पूजितम् ।
तस्मात्पुण्यप्रसा(सा)दाच्च धान्यादिव्रीहिवर्द्धितम् ॥
सर्वे च नागिन्य[७] नागाः काले काले वृष्टिकृतम् ।
नागपूजां(जा) विनाकृत्वा[८] न वृष्टिः अत्र मण्डले ॥
इति ज्ञात्वा च मानूष्याः अत्र नेपालदेशजाः ।
काले दिने[९] नागपूजां विशेषेण च कारित(ता)म् ॥
अथापि प्रश्र्णु मैत्रेय निम्नगयां[१०] तदुपरि ।
वाग्मत्याञ्च द्वादरेऽपि सहस्रदर्य्यां[११] नामके ॥

---

१ B ऋच्छके, C ऋक्षके । २ B वापीधारयोः । D वाप्यां प्रणालिके
३ B मानव्य प्रमदाश्चापि । ४ D नैवेद्यदुग्धकैः । ५ D सर्व्वा नागिनीनागा । ६ D नरासर्व्वे सर्व्वानागाश्च । ७ D नागिनी
८ B विना जातम् । ९ B पर्व्वकाले ।
१० B नदीनाञ्च, D निम्नगर्य्यां । ११ A D सहदर्य्याञ्च ।

नाम्ना सहजसाद्य्यां नागिनी तत्र वासिनी[1] ।
तस्यां दर्य्यान्तु द्वाराश्च[2] उपरिं गच्छति नराः ॥
प्रथमं नभकृष्णे च[3] त्रयोदश्यां गुरुवासरे ।
सिंहेऽपि च सङ्क्रान्तौ कलियुगोदयेपि च[4] ॥

अपि च[5] ।

प्रागपि तद्वारे स्नात्वा पश्चात्सुन्दरीं(री) पूजितम् ।
ततोऽपि निम्नगायाञ्च उपरि[6] प्रगच्छति ॥
नाम्ना च सुन्दरी नागी नागीनां मध्ये नहि ।
सहस्रनागिनीनाञ्च एषा श्रेष्ठा त्रिलोकिषु ॥
अनन्तनागराजस्य सा पत्नी(त्नि) धर्म्मचारिणी ।
सत्सती पतिव्रती च पुण्यात्मा धर्म्मशीलिनी[7] ॥
त्रि(त्ये)तीशकोटिनागानां तत्र नेपालवासिनम् ।
सर्व्वेषामपि नागीनां राजपत्नी इतीरिता ॥
पुष्पै धूपैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि ।
तस्यै च पूजनायाश्च[8] वाञ्छित लभ्यते फलम् ॥
मानुषाश्च स्त्रियश्चापि तस्यै पूजां(जा) कृतं ननु ।
वाञ्छितं फलं सम्प्राप्ता श्रीसम्पदं प्रलभ्यते ॥
दर्य्यान्तु शृणु मैत्रेय उपरि तीर्थानां फलम् ।

१ B नाम्ना सहस्रसुन्दरी नागिनी यत्र वासिना, D नाम्ना सहस्रसौदर्य्या नागिनी तत्र वासिनि । २ D दर्य्यामुद्धाराश्च । ३ A नभाकृष्णे । ४ A omit अपि च । ५ D omits अपि च । ६ B तदुपरि । ७ D ०शिलीनी । ८ B तस्यै पूजां प्रकृतात् ।

त्रयस्तीर्थे स्नानाच्च कथयामि फलं पृथक् ॥
तीर्थिकानां ब्राह्मणानां लोकानां य(च) हिताय च ।
हर्षाय चापि युष्माकं वक्ष्येऽहं तत्त्वतः(त) शृणु ॥
प्रथमं कार्त्तिके शुक्ले[1] नवम्यां बुद्धवासरे[2] ।
विच्छेऽपि च संक्रान्तौ सत्ययुगेद्य अपि ॥
अगस्त्यह्रदं समासाद्य स्नानञ्चापि कृतं मुदा ।
ततः पश्चादगस्त्यश्च मुनिश्चापि प्रपूजितम् ॥
पुष्पैर्धूपैश्च गन्धैश्च दीपै नैवेद्यकैरपि ।
पूजयामास भावेन अगस्त्यं मुनिनायकम् ॥
तद्ध्रदस्य च मध्ये तु एक कुम्भ प्रतिस्थि(ष्ठि)तम् ।
नाम्ना च अगस्त्यकुम्भं अगस्त्यमुनिस्थापितम् ॥
स्नानपिण्डिका उपरि घटरत्नमिव स्थितम् ।
तस्य मुनेनुभावाच्च शिलाकृतमिव स्थितम् ॥
तस्मिं ह्रदेऽपि स्नानाच्च धर्माद्ध(ध)र्मं[3] प्रलभ्यते ।
मनुजादय मानुष्याः मनोरथं(थ) प्रलभ्यते ॥
प्रथमं स्नानकं कृत्वा पश्चात्तु पितृतर्पणम् ।
ततश्चापि याचकेभ्यः व्रीह्यादींश्च ददौ मुदा ॥
पुनश्च सद्धर्मादीन्[4] धारणीञ्च(च) पठे(थे)न्मुदा ।
एवं कृत्वा च मानुष्या धर्मफलं प्रलभ्यते ॥
द्वितीये माघशुक्ले च[5] पूर्णमास्यां रविवासरे[6] ।

१ A omits शुक्ले । २ B रविवासरे । ३ B महत्पुण्यम् ।
४ B सद्धर्माख्यम् । ५ A omits च । ६ B रविकरे ।

कुम्भे[१] अपि च संक्रान्तौ त्रेतायुगोदये अपि ॥
अनन्तह्रदं(द) समासाद्य स्नानञ्चापि मुदा कृतम्।
पश्चादपि अनन्तञ्च[२] नागराजं(ज) प्रपूजितम् ॥
धूपैश्च गन्धै दीपैश्च नैवेद्यैः(द्यै) पुष्पकैरपि।
अर्च्चयामास भावेन अनन्तं भुजगेश्वरम् ॥
तद्ध्रदस्य च मध्ये तु श्रीअनन्तं नागराजकम्[३]।
त्रितीकोटिनागानां च श्रेष्ठ त्रिलोकिषु[४] ॥
तस्मिं ह्रदेऽपि स्नानाच्च अर्थफलं[५] प्रलभ्यते।
[६]मानूष्याश्च मानूष्यश्च निधिफलं प्रलभ्यते ॥
प्राक् स्नानकं कृत्वा पश्चादपि जलतर्पणम्[७]।
[८]पुनरतिथिभ्योऽपि तण्डुलादीन् ददौ मुदा ॥
अपि च मेघसूत्रादीन् धारणीञ्च(श्च) पठेन्मुदा।
इति कृत्वा च मानूष्याः[९] अर्थफलं प्रलभ्यते ॥
तृतीये(य) वैशाखशुक्ले तृतीया सोमवासरे।
वृषेऽपि च संक्रान्तौ द्वापरस्य युगोदये ॥
ताराह्रदं समासाद्य मुदा स्नानं कृतं च ये[१०]।

---

१ C कुह्व। २ B पश्चात्तदनन्ताख्यम्। ३ A श्रीअनन्तनागराजः, D अनन्तनागराजकम्। ४ B त्रितीश्चकोटिनागानां एष श्रेष्ठ त्रिलोकिके D तृतीय कोटिनागां च श्रेष्ठ एषु त्रिलोकिषु। ५ B ह्रदे च स्नानेन नानार्थञ्च। ६ B मानुष्या नारीजनाश्च। ७ B पश्चात् पितृतर्पणं। ८ A D पुनश्च अतितेभ्योऽपि तण्डुरादीन्ददुर्मु(मु)दा। ९ A मानुषाः। १० B स्नानं कृतं मुदा च ये।

ततोऽपि आर्य्य[1]तारा च देवीञ्चा(चा)पि प्रपूजितम् ॥
गन्धै(र्द्दी)दीपैश्च नैवेद्यैः पुष्पै धूपैरपि तथा ।
महयामास[2] भावेन आर्य्यतारामनोहरीम्[3] ॥
तद्ध्रदस्य च मध्ये तु आर्य्य[4]तारा सुलक्षणीम्[5] ।
त्टतीकोटि[6] ताराणाञ्च एषा शास्ता प्रसिद्धिदा ॥
तस्मिं ह्रदेवि स्नानाच्च कामफलं प्रलभ्यते ।
मनुजाश्च मानव्यश्च सौभाग्यफलं लभ्यते ॥
प्रागपि[7] स्नानकं कृत्वा पश्चाच्च पितृतर्पणम् ।
ततोऽपि सर्वयाञ्च(चे)भ्य द्रव्यादीञ्च[8] ददौ मुदा ॥
अथापि स्रग्धरादीश्च(ञ्च)[9] तारास्तोत्रं पठेन्मुदा ।
एवं कृत्वा मानुजाश्च वाञ्छाफलं प्रलभ्यते ॥
अतः पश्चा[10]द्वाग्मत्यां च समासाद्य स्नानं कृतम् ।
मानुषाश्च स्त्रियश्चापि वाग्मत्यां च विशेषतः ॥
चतुर्थाध्याय[11] उक्तेन सङ्क्रान्तौ तिथिवासरे ।
वाग्मत्यां विशेषेण स्नानं कृतञ्च मानवाः ॥
प्रथमं स्नानकं कृत्वा ततः पश्चाज्जलतर्पणम् ।
ततोऽपि श्रीवज्र(ज)सत्वं जगद्गुरुं प्रपूजितम् ॥

---

१ B तस्मिन् श्रीराज्य० । २ B D अर्चयामास । ३ D मनोहरी । ४ B मध्ये श्रीराज्य० । ५ D सुलक्षणी । ६ B त्टतीश०, D त्टतीयकोटि० । ७ A पूर्वं पि D पूर्व्वेऽपि । ८ B नानाद्रव्यं । ९ B स्रग्धराख्यं हि । १० B अतः परं । ११ A चतुर्थेऽध्याय ।

पश्चादपि च सर्वज्ञं क्रकुच्छन्दञ्च[१] नायकम् ।
ततः पश्चाद्याञ्चकेभ्यः याच्यं(च्य) वस्तु[२] मुदा ददौ ॥
पुनः प्रज्ञापारमितां लब्धा भगवतीं पठेत्[३] ।
मन्त्रजापादिविधिना यज्ञसम्पूर्णं कृतादपि[४] ॥
धूपैर्गन्धैश्च दीपै नैवेद्यभोजनै सह[५] ।
पूजयामास भावेन तत्रेशानपि देवतान् ॥
इत्थं ये कृतस्नानाद्याः मानव्यमानवादयः ।
सर्वफलं प्रलभ्यन्ते(ते) वाञ्छितं लभ्यते[६] फलम् ॥
अष्टानामपि तीर्थानां वाग्मती(तीं) मूलमुच्यते ।
तस्माच्च(च) कारणादेवं सम्पूर्णं फल लभ्यते ॥
अथापि शृणु मैत्रेय तस्मात्ती(ती)र्थाच्च(च) साम्प्रतम् ।
शङ्कुपर्वतशिरसि अवरूढं मुदा कृतम् ॥
शङ्कुपर्वतस्योपरि महाञ्छिरायाश्चोपरि ।
क्रकुच्छन्द[७]स्वयम्भूश्च सहस्रचैत्यं प्रपूजितम् ॥
पुष्पैर्दी(दी)पैश्च गन्धैश्च धूपै नैवेद्यकैरपि ।
अर्च्चयामासु मोदेन सर्वं च या(पा)त्रयगणाः ॥

१ D क्रकुच्छन्दं ।  २ B सर्व्वयाचेभ्यः ... द्रव्य ।
३ B ततः शतसाहस्रिकां रत्नां भगवतीं पठेत् ।
४ B जापयज्ञकृतादपि ।  ५ B धूपैर्गन्धैश्च पुष्पैश्च दीपै नैवेद्यकैरपि ।
D धूपैर्दीपैश्च गन्धैश्च नैवेद्यैर्भोजनैः सह ।  ६ D लभते ।
७ D क्रकुच्छन्दः ।

यद्वच्च पर्वतं शङ्कमवरूढं मुदा च ये ।
तद्वच्च नाकं प्रगच्छन्ति जन्मजन्मान्तरे अपि ॥
पुनरपि शृणु मैत्रेय तस्मात्केशावती नदी ।
नाम्ना केशावती ख्याता भिक्षुकेशेभ्यो उद्भुतम्[१] ॥
चतुर्तौ(तौ)र्थाना मूलेयं केशावतीति ख्यापिता ।
सर्वक्लेशप्रणाशिलात् केशावती प्रसिद्धिता ॥
श्रावणशुक्ले अष्टम्यां शुक्रवासरेऽपि च[२] ।
केशावत्या[३] उत्पन्ने च विशेषेण स्नानं कृतम् ॥
तस्यां स्नानं पुनः कृत्वा मनुजाद्य मानवाः ।
तत्पुण्यस्य प्रसा(शा)दाच्च सर्वक्लेशं(श) प्रनाशितम् ॥
धूपैर्दीपैश्च पुष्पैश्च गन्धै नैवेद्यकैरपि ।
तत्तीर्थञ्च प्रपूजित्वा अतिथिभ्यः[४] दान ददौ ॥
इत्थं येऽपि मुदा कृत्वा मनुजा मानवादयः[५] ।
तत्तीर्थस्य स्नानाच्च क्लेशादीन् दुःखनाशितम् ॥
विशेषैः शृणु मैत्रेय कापोतलस्य च[६] कथाम् ।
सर्वेषाञ्च नदीनाञ्च सम्भेदाच्च(च) विनिर्गतम् ।
कापोतलञ्च नामेन कालीहृदजलस्य च ।

---

१ B भिक्षाकेशेभ्यरुद्भूतं C भिक्षुकेशे उद्भूतं ।
२ A D ०वासरेसि अपि । ३ D केशावत्यां ।
४ A अतिर्थिभ्यः । ५ B मनुजा मानव्यादयः ।
६ B तत्तीर्थेषु च ।

विनिर्गतं नेपालाच्च जलानां[१] पादवी इति ॥
[२]मञ्जूदेवाख्याचार्य्येण चन्द्रहासेन छेदितम् ।
यदा कालिह्रद(दे)स्यापि जलशुष्काय च कृतम् ॥
तस्या दर्य्या अभ्यन्तरे शृङ्गानामूर्द्धभूमिषु ।
आर्य्यावलोकितेशस्य तत्र स्थानं प्रकीर्त्तितम् ॥
[३]तस्यादेः आसन्नभूमेः महासुन्दरीन्तु[४] वर्त्तते ।
नेपालजान् जलान् सर्व्वान् यस्यां दर्य्यां विनिर्गताः[५] ॥
इत्थं जलमये दर्य्यां जलाधोऽभ्यन्तरे अपि ।
महाप्रमाण[६]देहलीं शिलामय प्रथापितम् ॥
मञ्जुदेवेनाचार्य्येण ह्रदच्छेदादनन्तरम् ।
देहली स्थापयामास तस्यां दर्य्यां[७] विशेषतः ॥
यत्र कापोतराख्या च सर्वनदीसमूहके ।
नेपालजानि जलानि अब्धिमिव विनिर्गता ॥
श्रावणशुक्ले अष्टम्यां शुक्रवासरे सिंहे अपि[८] ।
[९][केशावती उत्पन्नेच विशेषेण स्नानं कृतम्] ॥
इत्थं जलमये युक्ते कापोतले विशेषतः ।
मनुजाश्च स्त्रियश्चापि स्नानं कृतं मुदा अपि ॥

---

१ A जरानां । २ A D मञ्जुदेवराचार्य्येण ।
३ B तस्येव......महादरी प्रवर्त्तते । ४ D महासुन्दरि तु ।
५ A नेपालजाश्चलात्सवान् तस्या दया D जलान् सवान तस्या दया विनिर्गता।
६ A महान्प्रमाण० । ७ D तस्या दर्य्या । ८ B सिंहाख्यशुक्रवारयोः
D omits सिंहे । ९ B omits the portion bracketted.

सर्वमासे शुक्ल[१]पक्षे सर्वतिथौ विशेषतः ।
सर्वसङ्क्रान्तिके वारे स्नानं कृतञ्च[२] मानवाः ॥
ये च या वा कृतं स्नानात् सर्वफलं प्रलभ्यते ।
सर्वेषामपि तीर्थानां जल सर्वं समागता(त्) ॥
इत्थं गुणमये अत्र[३] प्रथमं स्नानकं कृतम् ।
पश्चाद्यानपि चैत्येशान्[४] देवाश्चापि प्रपूजितम् ॥
पुष्पैर्धूपैश्च गन्धैश्च दीपै नैवेद्यकैरपि ।
पूजयामास भावेन तत्चैत्येश[५]लोकेश्वरम् ॥
यथा कापोतलं गत्वा तथा च नारकं न हि ।
लोकेश्वरप्रसादेन[६] सुखावति गतिं लभेत्[७] ॥
इति मत्वा च मानूष्याः सर्वे च मनुजादयः ।
ज्ञात्वा बुद्धस्य भावेन कापोतलजात्रां व्रजेत् ॥
तस्मिं(न्) काले च मैत्रेय लोकपालादयः गणाः ।
स्वस्वदेवगणैः सार्द्धं तीर्थानाञ्च जात्रा कृतम् ॥
प्रथमं देवराजेन[८] देवगणैः परिवृतः ।
अनेकै स्त्रिदशैस्सार्द्धं तीर्थजात्रां[९] कृतं अपि ॥
द्वितीयं यमराजेन स्वगणैश्च[१०] परिवृतः ।

१ D शुक्लो । २ D कृतं स्नानञ्च । ३ B गुणमय भूत्वा । ४ B पश्चात् सर्व्वान् तत् चैत्येशान् D पश्चातपि देवांश्चापि । ५ D ०चैत्येशं ।
६ A D ०प्रसादे स । ७ B सुखावतिं तथागतं ।
८ A D इन्द्रराजेन । ९ D ०जात्रा । १० D ०गनैश्च ।

अनेकैः किङ्करैः[१] सार्द्धं जात्रामपि कृतं मुदा ॥
तृतीयं वरुणाख्येन नागराजेन च अपि ।
नानानागगणैर्युक्तं तीर्थसे(श्रे)वा कृतं अपि ॥
चतुर्थं धनपतिना स्वयक्षपत्नीभिः सह[२] ।
अनेकैः यक्षिणीयक्षैः[३] तेषां जात्रा कृतं कृतम् ॥
पञ्चमं कृतभुजापि स्वगणैश्च समावृतः[४] ।
अनेकैरग्निभिः सार्द्धं तीर्थानाञ्च जात्रा कृतम् ॥
षष्ठमं नैऋत्येनापि राजगणैरावृतः[५] ।
असंख्यैः राक्षसैः सार्द्धं तीर्थजात्रा कृतं अपि[६] ॥
सप्तमं(म) वायुदेवेन स्वगणेन[७] समागतः(ताः) ।
[८]स्वगणैश्च समायुक्तं तीर्थस्यापि जात्रा कृतम् ॥
अष्टमं ईश्वरेणापि स्वगणैश्च परिवृतः[९] ।
[१०]पुत्रपुत्र्यादिभिर्युक्तं जात्रा तीर्थानाञ्च कृतम् ॥
नवमं विष्णुना चापि स्वपत्नीभिः[११] परिवृतः ।
अनेकैः गोपकन्याभिः राधाभिश्च जात्रां कृतम् ॥
दशमं ब्रह्मणेनापि ब्रह्मगणैस्समावृतः ।

---

१ D किन्नरैः । २ B D नानायक्षगणैः सह ।
३ B अनेकयक्षिणीभिश्च तीर्थयात्रां.... D यक्षणी० । ४ B परिवृतः ।
५ D तस्मात् राजगणैर्वृतः । ६ B मुदा । ७ A स्वगुणेन ।
८ B वायुगणैः समायुक्तैः तीर्थयात्रां कृतं मुदा । ९ D परिवृतं ।
१० B पुत्रपौत्र्यादिभिर्युक्ताः तीर्थयात्रा मुदा कृतं । D पुत्रपौत्र्यादिभिर्युक्ता जात्रा । ११ A कन्याभिः ।

अनेकैः ब्रह्मभिः सार्द्धं जात्रां अपि कृतं कृतम्[१] ॥
गन्धर्वैश्च गन्धर्वैश्च कुम्भाण्डैश्च कुम्भाण्डकैः[२] ।
किन्नरैश्च किन्नरैश्च यक्षैश्च यक्षभिस्तथा ॥
स्वस्वगण समावृत्य पुत्रपुत्र्यादिभिरपि[३] ।
दासकदासिभिर्युक्तः तेषां जात्रां कृतं अपि[४] ॥
ब्रह्मभिः क्षत्रियैः शूद्रैः अत्र नेपालवासिभिः[५] ।
काले दिने पर्वते च तेषां जात्रां कृतं अपि ॥
पूर्वाच्च दक्षिणाच्चापि पश्चिमादुत्तरात्तथा ।
अन्यत्र देशजैश्चापि तीर्थजात्रां अपि कृतम्[६] ॥
पुष्पै(ष्पैः) धूपैश्च दीपैश्च गन्धै नैवेद्यकैरपि ।
पूज्ययोग्यं[७] समागत्य तीर्थजात्रां कृतं मुदा ॥
इत्थं देवाश्च मनुष्याः नाकजा मर्त्त्यजादयः ।
पूर्वोक्तदिने स्नात्वापि [८]यात्रामहं कृतं कृतम् ॥
द्वयोर्मानुष्ययो मध्ये [९]एकमस्ति च देवता ।
देवपुत्रद्वयोर्मध्ये एकमस्ति च मानुषः[१०] ॥
असुरादयः इत्थं ये स्वगणैश्च परिवृताः ।

---

१ B तीर्थयात्रां कृतं मुदा । २ A गन्धर्व्वै गन्धर्व्वैश्चः कुम्भाण्डैः D गन्धर्व्वैः गन्धर्व्वैश्चैः कुम्भाण्डैः कुम्भसंज्ञकैः । ३ B पुत्रपौत्र्यादिभिरपि । ४ B तीर्थयात्रां मुदा कृतं । ५ A ०वाविश्चिः । ६ B मुदा कृतं D कृतं मुदा । ७ B पूज्याङ्गञ्च । ८ B च तीर्थयात्रा कृतं मुदा । ९ B एक स्थित्वात्र देवकं । १० B स्थित्वात्र मानवं ।

समायाताश्च नेपाले तीर्थजात्रामहं कृतम्[1] ॥
देवासुरनरा इत्थं दैत्य[2]गन्धर्वकिन्नराः ।
राक्षसाश्च समायाताः अत्र इत्थं जात्रा कृतम्[3] ॥
मण्डलं वादितं केचित् केचित् मृदङ्ग वादितम् ।
पटहं वादितं केचित् केचित् ढक्काश्च वादितम्[4] ॥
ध्वनश्च[5] वादितं केचित् केचिद्दुन्दुभि वादितम् ।
मड्डुश्च वादितं केचित् केचिच्च डिण्डिमं अपि ॥
ताड़नं[6] वादितं केचित् केचिद्वीणाञ्च वादितम् ।
घण्टञ्च वादितं केचित् केचिच्च कांस्यजं अपि ॥
मनुजादयमानुष्याः अत्रजा अन्यजा अपि[7] ।
नानावाद्यं प्रवादित्वा अत्र जात्रामहं कृतम्[8] ॥
केचित्तूर्य्ये च काहालं जन्तुशृङ्गं शङ्खं अपि ।
भेलीश्चापि घोषवाद्यं घोषयामासु जात्रिकाः[9] ॥
गानं गीतञ्च केचिच्च उत्साहं वापि च कृतम्[10] ।
पूर्व्वोक्तदिने पर्वते यात्रामहं कृतं अपि[11] ॥
[12]प्रथमं गोकर्णतीर्थे द्वितीयं शान्ततीर्थके ।
तृतीयं शंकरे तीर्थे चतुर्थं राजमञ्जलेः ॥

---

१ B ०यात्रां कृतं मुदा । २ B नाना० । ३ B तीर्थयात्रां कृतं मुदा । ४ D वादिता......ढक्कारिवादितम् । ५ B धरच्च, C धनच्च । ६ D ताड़ितम् । ७ B मनुजा स्वर्गलोकजा.............पि च । ८ B तीर्थयात्रां कृतं मुदा । ९ B वाद्यकम् । १० B सुघोषञ्च उत्साहञ्च कृतं मुदा । ११ B पूर्व्वोक्तपर्व्वते काले तीर्थकृतं मुदा, D पूर्व्वोक्ते च दिने अत्र कृतं जात्रामहमपि । १२ D गोकर्णे प्रथमम् ।

पञ्चमं मनोरथे तीर्थे षष्ठमं निर्मले अपि ।
सप्तमं निधानतीर्थे अष्टमं ज्ञानतीर्थके ॥
नवमं चिन्तामणौ तीर्थे दशमञ्च प्रमोदके ।
एकादशं सुलक्षणे तीर्थे द्वादशं जयतीर्थके[१] ॥
इति द्वादशतीर्थेषु यथा स्नानं कृतं भवे[२] ।
यत्र यत्रापि स्नानाच्च[३] तस्य[४] तस्य फलं लभेत् ॥
यद्वद्द्वादशतीर्थानां फलमस्ति च निश्चयम्[५] ।
[६][तद्वच्च उपतीर्थानां फलमस्ति च सर्वदा ॥
यद्वच्च उपतीर्थानां फलमस्ति निःसंशयम्[७] ।
तद्वदुपरितीर्थानां फलमस्ति न संशयम्[७] ॥]
तद्वच्चोपरितीर्थानां तद्वदपि वाग्मतीफलम्[८] ।
सङ्ग-मूर्ध्नी तथा वापि केशावत्या तथा अपि ॥
[९]एकस्मिन्नेव तीर्थे च स्नात्वा एकफलं लभेत् ।
सम्पूर्णतीर्थस्नानाच्च सम्पूर्णं लभ्यते फलम् ।
विशेषमासे संक्रान्तौ तिथिवारेण संयुते ॥
त्रययोगे प्रवर्त्ते च[१०] उत्तमं लभ्यते फलम् ।
[११][अथवा तिथिसंक्रान्तौ वारे तिथौ संक्रान्तौ च ॥]

---

१ D द्वादशकं जये । २ B मुदा कृतम् । ३ D स्नानापि । ४ A omits तस्य । ५ B महत्तरम् D न संशय । ६ D omits the portion bracketted. ७ B महत्तरम् । ८ BD तद्वत् वाग्मतीनाञ्च फलमस्ति महत्तरम् । ९ A D एकः एके तीर्थे स्नानात् एक एकस्य च फलम् । १० A प्रवर्ते च, D पर्वते च । ११ B omits this line.

द्विसंयो प्रवर्त्ते च[1] मध्यमं लभ्यते फलम् ।
अथापि एकं एकेऽपि वारे तिथौ संक्रान्तौ च[2] ॥
एकयोगे पर्वते च स्वल्पफलं प्रलभ्यते ।
संपूर्णं(र्ण) फलमिच्छन्त्यः मानव्य मानवादयः ॥
तेषु तीर्थेषु सर्वेषु जात्रामहं कृतं कृतम्[3] ।
इत्थं सर्वेषु तीर्थेषु जात्रां(त्रा) कृत्वा पश्चादपि ॥
मणिप्रक्षालनतीर्थे विशेषशत्रु[4]निर्झरे ।
सर्ववारे दिने मासे स्नानात्सवें(र्वे) फलं लभेत् ॥
श्रीस्वयम्भूधर्मधातौ जात्रामहं कृतं ततः[5] ।
पुष्पै धूपैश्च गन्धैश्च दीपै नैवेद्यकैरपि ॥
स्वयम्भुवः पुराणञ्च धारणीन्विविधानपि[6] ।
पञ्चरक्षादिपाठाञ्च सप्तवारान्तथा अपि ॥
नाम[7]संगीत्यादिस्तोत्रान्[8] चक्रु तस्मै च मानवाः ॥
यथा तीर्थं(र्थे) प्रपूजित्वा[9] नानावाद्यैस्सुपूरितम् ।
[10]तस्मादधिकाच्छायम्भु जगन्नाथं प्रपूजितम् ॥
मनुजा मानव्यश्चापि स्वयम्भुव जात्रा कृतम्[11] ।
तस्मात् सर्वं(र्व) फल प्राप्ता सर्वतीर्थाद्विशेषतः ॥

१ A D पर्व्वते च । २ B तिथौ संक्रान्तौ वासरे । ३ B तीर्थयात्रां कृतं मुदा, D कृती । ४ B ०शम्भु० । ५ D कृतं जात्रामहं ततः । ६ D धारणी विविधानपि । ७ B नाग० । ८ D ०स्तोत्रम् । ९ B प्रपूजितं हि । १० B तदधिकाच स्वयम्भु D तस्मादधिकाच स्वयम्भु जगन्नाथ प्रपूजितं । ११ D मानवाश्चापि कृतं जात्रा स्वयम्भुवा ।

विना पूजा स्वयम्भोश्च तीर्थजात्राफलं न हि ।
तीर्थजात्रा विना चापि शम्भुपूजा महत्फलम् ॥
तस्मात्सर्वप्रकारेण स्वयम्भूपूजनं कृतम्[१] ।
स्वयम्भूपूज्यमात्रेण सर्वतीर्थं[२] प्रपूजितम् ॥
सर्वेषामपि तीर्थानां पितामह स्वयम्भुव[३] ।
स्वयम्भूत्पन्नमात्राच्च सर्वतीर्थं समुद्भुतम् ॥
इति मत्वा च मानुष्याः केवलं शम्भुपूजितम् ।
शम्भुपूजा विना अन्यं पूजाफलं न विद्यते ॥
अतीतानागतैर्बु(बु)द्धैः धर्मधातु स्वयम्भुवम् ।
देवै नागैश्च मानुष्यैः कथितं[४] च पुनः पुनः ॥
पुनोऽपि शृणु मैत्रेय अष्टपीठादि[५]लक्षणम् ।
चतुर्विंशादिभिः पीथैः नानापीथैः सुपूरितम्[६] ॥
[७]प्राक्पूर्वं शान्ततीर्थे इश[८]कृष्णे प्रतिपदे ।
[९]रविवारे सुसंयुक्ते राज्येश्वरीं प्रपूजितम् ॥
अकारबीजसंजातं ब्रह्मायणीं सुपीतकम्[१०] ।
पीता प्रयागक्षेत्रञ्च [११]इन्द्रणाय सुसंस्थितम् ॥
भैरवं असिताङ्गञ्च वर्णञ्च[१२] कृष्णसन्निभम् ।

---

१ D कृतं पूजा स्वयम्भुवम् । २ D ०तीर्थं । ३ B स्वयम्भुवम् ।
४ B पूजितम् । ५ A ०पीथादि० । ६ B D पीठं नानालक्षणा-मण्डितम् । ७ B प्रागभावे............प्रतिपदि । ८ D इष० ।
९ B नवम्यां रविवारे च । १० D ब्रह्मायणी सुपीठकम् ।
११ B इन्द्रेण सह संस्थितम् । १२ C पर्णं च ।

नागकेशर[१]वृत्तञ्च महापद्म च पीतकम्[२] ॥
चैत्यञ्च विश्ववज्राख्यं वीना(णा)देवीं तथा अपि ।
चण्डोग[३]मपि श्मशानं कंकालैश्च[४] सुपूरितम् ॥
काकैरपि परिपूर्णं सिद्धा च कच्छपाख्यया[५] ।
गङ्गानदीशीतजलं गर्जित(तं) घनसंयुतम् ॥
भुगुतिं रुधिरञ्चापि पञ्चपताकेन सह ।
ध्वजेन लाञ्छनी देवीं ब्रह्मायणीं[६] पशुपतिम् ॥
पश्चाद्भैरवं चेत्रेशं[७] गणेशं षड्मुखं अपि ।
सिंघिनी[८] व्याघ्रिणीं देवीं[९] मुदा च पूजितं कृतम्[१०] ॥
धूपैः पुष्पैश्च दीपैश्च सिन्धुराजैर्नैवेद्यकैः[११] ।
मद्यैः मांसैश्च लेह्यैश्च[१२] पेयैश्च पिष्टकैरपि ॥
दिने उपोषधं कृत्वा सर्वरीं(री) देवी पूजितम् ।
रागचित्तं परित्यज्य शान्तिफलं प्रलभ्यते ॥
आचार्य्यणाचार्य्यिणीभिः ध्यानमन्त्रजापेन च ।
[१३]देवीस्तोत्रं क्षमां कृत्वा पश्चाच्च भक्ष्यभोज्यकम् ॥
[१४]तृप्तिं कृत्वा निजात्मानं तदन्ते ये गताश्च ते ।

---

१ A ०केशल० B फणीकेशर० । २ D ०पद्मञ्च पीठकम् । ३ B चण्डोग्रमपि । ४ D कंकारैश्च । ५ B कच्छपाख्यका, D कच्छपायया । ६ D देवी ब्रह्मायणी । ७ D भैरवञ्चेत्रेशम् । ८ A सिंघ्रिणी । ९ D देवि । १० B सदा । ११ B सिन्धुरैर्नैवेद्यैरपि, D सिन्दुरैर्नैवेद्यकैरपि । १२ A omits च । १३ A देवीतिम् स्तोत्रं कृत्वा पश्चाद्भक्ष्यभोज्यकं तथा । B देवीस्तोत्रं क्षमां कृत्वा तद नेपालराजकम् ।
१४ A C D omit this line :—

द्वितीयोत्तरे मनोरथे मार्गकृष्णे द्वितीयके[१] ।
सोमवार(रे)युक्ते[२] मनोरथेश्वरीं प्रपूजितम् ॥
ककारवीजसंजातां महेश्वरीं श्वितवर्णकम् ।
कोरागिरी[३]क्षेत्रे चापि कुवेरेणापि संस्थितम् ॥
भैरवञ्च शुक्र[४]ञ्चैव रक्तवर्णसुसन्निभम् ।
पुन्नागवृक्षकञ्च विवीतञ्च[५] शङ्खपालकम् ॥
चैत्रञ्च कृष्णवज्राख्यं वंशादेवीं[६] तथा अपि ।
गह्वलमपि श्मशानं शूल(र)भिन्नैस्सुपूरितम् ॥
उलूकैश्च परिपूर्णं[७] सिद्ध[८]शवरिपा अपि ।
सिन्धुनदी लघुजलं घुर्णित[९]घनसंयुतम् ॥
भुगुतिं मांसपेसीञ्च माहिषस्य विशेषतः ।
गजेन लाञ्छनीं देवीं महेश्वरीं(रिं)[१०] सदीश्वरं ततः ॥
भैरवं चैत्रेशं गजमुखं षड़ाननम् ।
सिंहमुखं व्याघ्रमुखं मुद्रा च देवीं पूजितम्[११] ॥
पुष्पै दीपैश्च धूपैश्च नैवेद्यैः सिन्धुरैरपि[१२] ।
मांसै लेह्यैः पिष्टकै विविधैरपि[१३] ॥
घस्रो[१४] उपोषधं कृत्वा निशायां देवीं[१५] पूजितम् ।

---

१ A ०कृष्णद्वितीये । २ B दिगेन्दुवारे च । ३ D कोलागिरि० ।
४ B शुकम् । ५ B D चापि पीतञ्च । ६ B D वंशादेवी ।
७ A परिमपि । ८ D सिद्धा । ९ A घुणित । १० A D लाञ्छदेवीं महेश्वरिम् । ११ D देवी प्रपूजितम् । १२ D सिन्दुरैरपि ।
१३ D आज्यै पिष्टकैश्च पिष्टकै विविधैरपि । १४ B कल्पे । १५ D देवि ।

द्वेषचित्तं परित्यज्य पुष्टिफलं प्रलभ्यते ॥
योगिभिर्योगिनीभिश्च[1] मन्त्रजापध्यानेन च।
देवीं स्तवं स्तोत्रं[2] कृत्वा ततश्च भक्ष्यभोज्यकम् ॥
[3]तृप्तिं कृत्वा निजात्मानं सर्व्वे च ते गताश्च ये।
तृतीयेऽग्नौ शङ्करे तीर्थे पौषकृष्णतृतीये[4]।
अङ्गारवारसंयुक्ते[5] शङ्करेश्वरीं प्रपूजितम् ॥
चकारवीजसंजातं कौमारीं[6] रक्तसन्निभम्।
अट्टाट्टहासचेत्रञ्च अग्निनापि[7] सुसंस्थितम् ॥
भैरवं क्रोधनामाख्यं वर्णञ्च हरितं[8] अपि।
कलञ्ज[9]वृक्षकञ्चापि धवलं[10] पद्मनागकम् ॥
चैत्यञ्च रागवज्राख्यं मृदङ्गादेवीञ्च तथा[11]।
ज्वालांकुलश्मशानञ्च कंकालैश्च[12] प्रपूरितम् ॥
गृध्रैरपि परिपूर्णं सिद्धा च विरूपाख्यया[13]।
[14]वक्षुनदीर्गन्धजलं घोर[15]घनसुपूरितम् ॥
भुगुतिं मन्दकञ्चापि लघु उष्णं सुशोभितम्।
धूमेन लाञ्छनीं देवीं[16] कौमारीं शङ्करेश्वरीम् ॥

---

१ A योगीनिभिश्च। २ D स्तवस्तोत्र। ३ A C D omit this line:—
४ D ०तृतीयके। ५ B एकादश्यां कुजवारे। ६ D कौमारि।
७ B वह्निनापि। ८ B हरितकम्। ९ D करञ्ज०। १० A धवरम्।
११ B संयुता। १२ A लम्बाद्धैश्च, D लम्बादैश्च। १३ B D विरू-
पाख्यका। १४ B बक्षुनदी C D चक्षुर्नदी। १५ D घोरम्।
१६ D लाञ्छनी देवी कौमारी शङ्करेश्वरी।

पश्चात् भैरवं चक्षेत्रं[१] विनायकं षाण्मातुरम्।
सिंहास्यं व्याघ्रास्यं देवीं पुनः पुनः प्रपूजितम्[२]॥
पुष्पैर्धूपैश्च दीपैश्च सिन्दूरैश्च नैवेद्यकैः[३]।
लेह्यैः पेयैः मद्यैर्मांसैः[४] पिष्टकैर्विविधैः युतैः॥
अहान्यपोषधं[५] कृत्वा निशायां देवीं[६] पूजितम्।
मोहचित्तं परित्यज्य वश्यफलं प्रलभ्यते॥
रागीभी रागिनीभिश्च[७] जापमन्त्रध्यानेन च।
देवी दण्डकं स्तुत्वा च पश्चाच्च[८] भक्ष्यभोज्यकम्॥
चतुर्नैऋत्य ज्ञानतीर्थे माघकृष्णे चतुर्थ्याम्[९]।
[१०]बुद्धवारे सुसंयुक्ते ज्ञानेश्वरीं प्रपूजितम्॥
ढकारवीजसञ्जातं विष्णुवीं[११] श्यामवर्णकाम्।
जयन्तिनामक्षेत्रञ्च नैऋत्येनापि[१२] संस्थितम्॥
भैरवं उन्मत्तकञ्च वर्णञ्च कृष्णसन्निभम्।
[१३]पर्कटीवृक्षसंयुक्तं अनन्तनागञ्च नील[१४]॥
चैत्यं संस्कारवज्राख्यं सुरूजादेवीं[१५] तथा अपि।
कलङ्कमपि श्मशानं दग्धभ्रिरैश्च[१६] पूरितम्॥

---

१ D क्षेत्रम्। २ D देवी पुनः प्रपूजितम्। ३ D नैवेद्यकम्। ४ D लेह्यपेयैः मद्यमांसैः। ५ B कल्पे उपोषधम्। ६ D निशायां देवि। ७ B योगीभि योगिनीभिश्च। ८ B तदन्ते। ९ B D चतुर्थेसु ज्ञानतीर्थे माघकृष्णे चतुर्थिके। १० B द्वादश्यां बुद्धवासरे, D बुधवारे। ११ B वैष्णुवीम्। १२ B राक्षसेन्द्रेण। १३ B प्रकटी, D बर्कटी। १४ B नीलकम्। १५ A रुजादेवी०। १६ D ०भ्रीरैश्च।

शृङ्गारैरपि पूर्णञ्च सिद्धा[1]गोरलिपाचका ।
सरस्वतीमधुजलं आवर्त्तघनसंयुतम् ॥
भुगुतिं पिष्टकं चापि तण्डुलानां सुपिष्टकम्[2] ।
ध्यानेन लाञ्छनां(ना)देवीं(वी) वैष्णवी[3] त्रिपुरा(ला)न्तकम् ॥
ततः भैरवं चेचेशं विघ्नराजं स्कन्दमपि[4] ।
[5][सिंहवक्त्रां व्याघ्रवक्त्रां मुदा च पूजित(तं) अपि ॥
दीपैः पुष्पैश्च धूपैश्च नैवेद्यैः सिन्धुरैरपि ।
पेयैर्लेह्यैर्मांसैः मद्यैः पिष्टकैर्विविधैर्गणैः ॥
द्विवसोपोषधं छलार्थिनीं च देवीं[6] पूजितम् ।
मानचित्तं परित्यज्य वशीकलं(ल) फलं लभेत् ॥
ध्यानमन्त्रजापेन च देवीस्तोत्रं पठित्वा च ।
ततश्च भक्ष्यभोज्यकं पचयाम्यराजतीर्थे[7] ॥
फाल्गुणकृष्णपञ्चमे[8] मञ्जेश्वरीं अपूजितम् ।
तकारवीजसञ्जातां(ता) वाराही(हि) रक्तसन्निभां ॥
[9]एकां वकाख्यं चेत्रे च यमेनापि सुसंस्थितम् ।
भैरवं कपालं चैव पिङ्गलवर्णं सुसन्निभम् ॥
चूतञ्च वृत्तकं वापि कुलिकनागञ्च नीलम् ।
चैत्यञ्च चित्तवज्राख्यं हास्यादेवीं अपि तथा ॥

---

१ A गोड़लिपाचय, D गोदलिपाचय । २ D सुपीष्टकं । ३ A D विष्णुवी ।
४ B हेरम्बं शिखिवाहनं । ५ B omits the portion bracketted.
६ D छलार्थिनी च देवी । ७ D पञ्चम्मराजतीर्थकं ।
८ D त्रयोदश्यां गुरुवारे । ९ D एकावकाख्यं ।

अट्टहासश्मशानञ्च कपालैश्च प्रपूजितम् ।
मृणालिकाभिः पूर्णं च सिद्धा च कच्छपाख्यया ॥
शीतानदीभुक्तजल(लं) घनघनेन संयुतम् ।
भृगुतिमपि पताकं पञ्चवर्णजं इति[१] ॥
सिंहेन लाञ्छनीं देवीं वालाहीं[२] श्रीकण्ठं अपि ।
पश्चाद्भैरवं चैवेशं हेरम्बं शिखिवाहनम् ॥]
सिंहवदनं व्याघ्रास्यं हर्षाच्च देवीं(वी) पूजितम्[३] ।
पुष्पैर्दीपैश्च[४] धूपैश्च नैवेद्यैः सिन्धुरैरपि ॥
मांसै र्लेह्यैः पेयैः मद्यैः पिष्टकै स्तण्डुलस्यकैः ।
वासरे पोषधं कृत्वा रात्र्याञ्च देवीं(वी) पूजितम् ॥
ईर्ष्याचित्तं परित्यज्य जम्भनं लभ्यते[५] फलम् ।
आचार्य्यैराचार्य्यिणीभिः मन्त्रजापध्यानेन च ॥
देवीस्तुतिस्तुतिं[६] कृत्वा ततश्च भक्ष्यभोज्यकम्[७] ।
षष्ठं पश्चिमे[८] निधाने तीर्थे चैत्रकृष्णषष्ठ्याम्[९] ॥
[१०]शुक्रवारेण संयुक्ते निधानेश्वरीं प्रपूजितम् ।
पकारबीजसञ्जातं इन्द्रायणी च कुम्कुमम्[११] ॥
वारुणनामक्षेत्रञ्च वरुणेनापि संस्थितम् ।
भैरवं रुरुनामाख्यं[१२] वर्णं च पीतसन्निभम् ॥

---

१ D ०वर्णजुतमिति । २ D लाञ्छनी देवी वालाहि ।
३ B हर्षात् देवीं प्रपूजितं D देवी पूजितं । ४ D धूपैश्च दीपैश्च ।
५ A फलं लभ्यते, D फल लभ्यते । ६ A ०स्तुतिं स्तुतिं० । ७ B तदन्ते भोजनं कृतं । ८ A D षष्ठं पञ्चस्थिमे । ९ B षष्ठ्यां चैत्रकृष्णके ।
१० B चतुदश्यां भृगुवारे । ११ B स ईश्वरी । १२ B ०नामं च ।

अश्वत्थं वृत्तकं चापि श्यामं कर्कोटनागकम् ।
चैत्यञ्च रत्नवज्राख्यं गीतादेवीं[१] तथा अपि ॥
लक्ष्मीवन्त श्मशानञ्च जातुभिश्च पूरितम्[२] ।
चिलिचिल्लिकाभिः पूर्णं सिद्धापि जालंधरिपा[३] ॥
चन्द्रभागा नदी स्वच्छी घणपूर्णं[४] पुरातनम् ।
भुगुतिं मत्स्यकं चापि[५] मत्स्ययुगां[६] सुशोभितम् ॥
नागेण लाञ्छनी देवीं इन्द्रायणीं(णी) मृत्युञ्जयम्(य)
ततः[७] पश्चाद्भैरवं क्षेत्रेशं द्विमातुरं च कुमारम्[८] ॥
सिंहतुण्डं व्याघ्रतुण्डं अपि मुदा प्रपूजितम्[९] ।
पुष्पै धूपैश्च दीपैश्च सिन्धुरै[१०]श्च नैवेद्यकैः[११] ॥
लेह्यैः पेयैः मद्यैर्मांस्यैः[१२] पिष्टकैर्विविधैर्युतैः[१३] ।
दिने उपोषधं[१४] कृत्वा त्रियामां देवीं(वी) पूजितम् ॥
दम्भचित्तं परित्यज्य लभ्भनं फलं[१५] लभ्यते ।
योगिभिर्योगिनीभिश्च मन्त्रजापध्यानेन च ॥
देवीस्तवं स्तोत्रं कृत्वा[१६] ततश्च भक्ष्यभोज्यकम्[१७] ।

१ D ०देवी । २ D प्रपूरितम् । ३ B सिद्धा चैव जालन्धरी ।
४ A स्वच्छं पुरातनघनपूर्णम्, D पूर्णकम् । ५ B omits मत्स्यकञ्चापि ।
६ D मत्स्यायुग्म। ७ B ततः सुभैरवञ्चैव D तत् पश्चात् । ८ D कुमारकम् ।
९ B सिंहतुण्डं व्याघ्रतुण्डं मुदा प्रपूजितं सदा । १० D सिन्दूरैः ।
११ B सुनैवेद्यकैः । १२ D मद्यमांसैः । १३ B रसैः । १४ A उपोषधं B वासरे पोषधं । १५ D फल । १६ D कृत्वा देवीस्तवं स्तोत्रं ।
१७ B भोजनं कृतं ।

[1][सप्तवार्यो निर्म्मलतीर्थे राधाकृष्णसप्तम्याम् ॥
शनिवारेण संयुक्ते निर्म्मलेश्वरीं प्रपूजितम्।]
चकार[2]वीजसञ्जातं चामुण्डां(ण्डा) रक्तसन्निभाम् ॥
देवीकोटाख्यं(ख्य) चेत्रञ्च वायुनापि सुसंस्थितम्।
भैरवं संहाराख्यं च वर्णञ्च रक्तसन्निभम् ॥
उडुम्बरवृत्तं चापि गौरवर्णं[3] च वाशुकि(कीं)।
चैत्यञ्च कर्म्मवज्राख्यं नृत्यादेवीं तथा अपि[4] ॥
घोरान्धकारश्मशानं कवन्धैश्च प्रपूरितम्।
सिंहमुखैरपि पूर्णं सिद्धा च ररपतिपा[5] ॥
वरुणनदीस्निग्धं[6] च वर्षघनसुपूरितम्।
भुगुतिं सि(न्धु)न्दूली चापि अञ्जनं च तथा अपि
खलेन लाञ्छनीं देवीं चामुण्डां कपालभृतम्[7]।
पश्चाद्भैरवं चेत्रेशं गणाधि[8]पं शक्तिधरम् ॥
सिंहाननं व्याघ्राननं[9] पुनः देवीं(वी) प्रपूजितम्।
पुष्पै धूपैश्च दीपैश्च सिन्दूरैश्च[10] नैवेद्यकैः ॥
लेह्यैः पेयैर्मद्यैर्मांस्यैः पिष्टकैर्विविधैर्युतैः[11]।

---

१ B has the following for the portion bracketted :—
सप्तवार्य्यौ निर्मलाख्ये सप्तम्यां राढाकृष्णके। मन्दवारे दर्शतीर्थौ निर्मलेश्वरीं पूजितं। २ B जकार०। ३ B ०वर्नी च। ४ B ०देवी वरप्रदा।
५ B सिंहवक्तं व्याघ्रवक्तं सिद्धा च चरपतिका D चरमपन्तिपा।
६ B स्निग्धा च। ७ B चामुण्डां सुकपालिकां D देवी चामुण्डा कपालभृत्।
८ B ततः ... ... द्विमातुरं। ९ B व्याघ्रमुखं। १० D सिन्धुरैश्च।
११ B रसैः।

अष्टान्युपोषधं[1] कृत्वा चण्डाजागरं कृतम् ॥
मायाचित्तं परित्यज्य मारणं लभ्यते फलम्[2] ।
[3]रागिभी रागिणीभिश्च जापमन्त्रध्यानेन च ॥
देवी दण्डकं स्तुत्वा च तत[4]श्च भक्ष्यभोज्यकम्[5] ।
अष्टमेषे पुण्यतीर्थे ज्येष्ठकृष्णे च अष्टमे[6] ॥
सर्ववारेण संयुक्ते[7] गोकर्णेश्वरीं(री) प्रपूजितम् ।
मकारवीजं सञ्जातं महालक्ष्मीं चापि स्थितम्[8] ॥
[9]चरित्रं नाम चैत्रञ्च ईशानेनापि संस्थितम् ।
[10]भैरवं भीषणाख्ये च वर्णञ्च पिङ्गल[11]सन्निभम् ॥
[12]वटञ्च वृक्षसंयुक्तं तत्रकं रक्तवर्णकम् ।
चैत्यञ्च स्थितवज्राख्यं लाश्यादेवीं अपि तथा[13] ॥
क्रिकलालं(लः) श्मशानञ्च हाडदण्डैश्च पूरितम् ।
[14]व्याघ्रमुखैरपि पूर्णं सिद्धा च गोरापाख्यया ॥
हैमवतीश्वेतजलं(ल)[15] चण्डघ(न)णं सुसंयुतम्[16] ।

---

१ B कल्ये उपोषधं D अष्टान्यमोषधं । २ A मारणं फलं लभ्यते D मारणं फल लभ्यते । ३ B योगिभि योगिणीभिश्च मन्त्रजापध्यानेन च । ४ D omits च । ५ B भोजनं कृतं । ६ B अष्टमेसु पुण्यतीर्थे अष्टम्यां ज्येष्ठक्षिणिके D अष्टमेसु । ७ B दर्शे सप्तवारे च । ८ B स्थितवर्स्निकां, D महालक्ष्मी चापि स्थितम् । ९ B चरित्रकं सुक्षेत्रञ्च ईश्वरेनापि D चरितं .... । १० B भीषणं भैरवं ख्यातं वर्णं च पिग्रसन्निभं । ११ A पिङ्ग॰ । १२ A वटञ्च वक्षसंयुक्तं । B वटवृक्षं महावृक्षं । १३ B वलप्रभा । १४ B व्याघ्रमुखं सिंहमुखं सिद्धा च गोलकाख्यका D व्याघ्रमुखिरपि पूर्णं......गोरपाख्यया । १५ B हीमवती नदी स्वेतजलं । १६ D चण्डघणसंयुतम् ।

[१]भुगुतिं सर्वद्रवञ्च नानामांसं सुपानकम् ॥
ध्वङ्क्षेण लाञ्छनीं देवीं[२] महालक्ष्मीं महेश्वरम्[३] ।
ततः भैरवं क्षेत्रेशं लम्बोदरं[४] शक्तिधरम् ॥
सिंहलपनं व्याघ्रलपनं मुदा च पूजितं अपि[५] ।
दीपैः पुष्पैश्च धूपैश्च नैवेद्यैः सिन्दूरैरपि ॥
पेयैः लेह्यैः मांसैः मद्यैः पिष्टकैर्विविधैर्गणैः[६] ।
दिवसं[७] पोषधं कृत्वा क्षेपादेवीं प्रपूजितम् ॥
मात्सर्य्यचित्तं संत्यज्य उच्चातनसिद्धिं लभेत्[८] ।
ध्यानिभिर्ध्यायिनीभिश्च ध्यानमन्त्रजापेन[९] च ॥
देवीस्तोत्रं पठित्वा च ततश्च भक्ष्यभोज्यकम्[१०] ॥
नवमश्च मध्ये लघौ[११] सर्वमासे सर्वपक्षे[१२] ।
[१३][सर्वतिथौ सर्ववारे भैरवं च प्रपूजितम् ॥]
ऊङ्कारवीजसञ्जातं भैरवं कृष्णवर्णकम् ।
मध्यलघुं नाम क्षेत्रं मातृकाभिः परिवृतम् ॥
अष्टानामपि पीठानां[१४] षोड़शानां तथा अपि ।

---

१ A भुगुति सर्व्ववर्णिं तथा अपि । २ D ध्वाङ्क्षेण लाञ्छणी देवी । ३ B स ईश्वरीं । ४ D रम्बोदरं । ५ B सदा । ६ B रसैः D मांसमद्यैः पिष्टकै विविधैगणैः । ७ B प्रत्यहं । ८ D सिद्धिमुच्चाटनं लभेत् । ९ D ध्यानमन्त्रेन जापि च । १० B तदन्ते भोजनं कृतं । ११ B D मध्यलघौ । १२ B सर्व्वतिथौ D सर्व्वपक्षक । १३ B has the following for this line सर्व्ववारे सुपर्व्वते । योगिभिर्योगिनीभिश्च भैरवञ्च प्रपूजितं । १४ A पीथानां ।

चतुर्विंशतिपीठानां[1] मध्यात्मध्यलघुमिति ॥
भैरवं सर्व्वदेवेशं वर्णञ्च खसमद्भुतम्[2]।
सर्व्ववृक्षैः समायुक्तं सर्व्वनागैः परिवृतम् ॥
चैत्यराजं श्रीस्वयम्भूसर्व्वला(स्था)श्यादिभिर्वृतम्।
[3]श्मशानः(न) सर्व्वभिः वृत्यं करधादिभिस्संवृतम् ॥
[4]सर्व्वभयैः परिवृत्यं सिद्धाभिः सर्व्वभिरपि।
सर्व्वनदी परिवृत्य[5] द्वादशभिश्च[6] तीर्थकैः ॥
भुगुतिं मद्यमान्सैश्च सम्पूर्णेनोक्ता युक्तिभिः।
अष्टवर्गैं(र्गै) लाञ्छनञ्च अष्टमातृकाभिः संयुतम् ॥
पश्चात् मातृकान्[7] एकदण्डं षड्मुखमपि।
सिंहमुखीं व्याघ्रमुखीं प्रमोदेन प्रपूजितम् ॥
पुष्पैर्धूपैश्च दीपैश्च सिन्धुराजैर्नैवेद्यकैः।
[8]मद्यमान्सैश्च लेह्यैश्च पेयैश्च नानापिष्टकैः ॥
दिने[9] उपोषधं कृत्वा सर्व्वरीं देवं[10] पूजितम्।
पापचित्तं परित्यज्य [11]सर्व्वफलं प्रलभ्यते ॥
आचार्य्यैराचार्य्यिणीभिः ध्यानमन्त्रजापेन च[12]।
भैरवदण्डकं स्तुत्वा पश्चाच्च भक्ष्यभोज्यकम्[13] ॥

---

१ A ०पीथानां। २ B खसमद्युतिं D वर्णानखसमद्युति। ३ B श्मशानैः सर्व्वैः सुवृतं कबन्धादिभिः संवृत। ४ B D सर्व्वदेवैः परिवृतं। ५ D परीवृत्य। ६ B द्वादशैभिश्च। ७ B ततः मातृकान् सर्व्वान् ८ B मद्यमान्स-लेह्य-पेयैः नानासुपिष्टकैरपि। ९ B कल्पे। १० D देव। ११ B सर्व्वं च लभ्यते फलं। १२ B ०मन्त्रजपेन च D ०मन्त्रेण जापि च। १३ B भोजनं कृतं।

तद्वत् पश्चात् द्वितीयञ्च[१] अष्टपीथं प्रकीर्त्तितम् ।
दिग्विदिक्षु क्रमेणापि योगिनीनां क्रमेण च ॥
पूर्व्ववन्ता नाम चेत्रं चण्डेश्व(र)री स्थानोत्तरम् ।
[२]अग्न्यालुंभूप्रदेशश्च नैऋत्ये वलषु इति ॥
दक्षिणैके वनस्थानं[३] पश्चिमे ये तलच इति ।
वायव्यां फर्सिचेत्रे च ईशाने कति(टि)नामके[४] ॥
पूर्व्वे चण्डेश्वरीवनं उत्तनं[५] उत्तरे कपिलाग्रकम् ।
अग्ने पनातिसंज्ञञ्च[६] नैऋत्ये योपदेशकम् ॥
दक्षिणे अङ्केश्वरीञ्च[७] पश्चिमे गोषु नामकम् ।
वायव्ये गण्डतीले च[८] ईशाने को(कौ)शिकातीले[९] ॥
इत्यम्भ्य इत्थं द्वितीयपीथैश्च[१०] मातृकाभिः परिवृतम् ।
द्वितीयं[११] चक्रपीठा(था)नां उक्तञ्च पूर्व्वयोगिभिः ।
तद्वत् पुनः तृतीयञ्च अष्टपीठं(थं) प्रकीर्त्तितम् ॥
तद्वच्चापि क्रमेणापि नेपालाच्च[१२] वहिरपि ।
तृतीयं पीठ(थ)ञ्च मातृकाभिः परिवृतम ॥
तृतीयं पीठा(था)नां पूर्णं प्रउक्तं पूर्व्वयोगिभिः ।

---

१ B पीठं द्वितीयञ्च D द्वितीयञ्च । २ B वज्ञ्यालुभूनामधेयं नैऋत्ये वलसु स्मृतं । D नैऋत्यं । ३ B याम्येकवनस्थानं च पाश्च्येतलच्य इत्यपि D पार्श्वेतलजु इत्यपि । ४ B मातर्व्यां......कतिसंज्ञकं D वायुव्यां । ५ D omit उत्तनं । ६ B वह्नौ पनौति सञ्ज्ञञ्च । ७ B यमदिक् अर्केश्वरी देवी । ८ D ०तीलञ्च । ९ B कौशिकाख्यके । १० B D इत्यमित्यं सुपीठैश्च । ११ B द्वितीयं । १२ B नेपाले च ।

इति सम्पूर्णेन पीथं चतुर्विंशतिपीठकम्[१] ॥
एतैश्चक्रैस्तृ(त्रि)तीथैश्च श्रीस्वयम्भू परिवृतम् ।
अपि च[२] ।
प्रतिदेशे पट्टने च अष्टावष्टौ विभूषितम् ।
तस्माच्च अत्र नेपाले[३] वज्रपीठं(थं) प्रवर्त्तते ।
इत्येवं विविधैः पीठैः(थैः) नानापीठै(थैः)[४]समन्ततः ॥
परिवृत्य[५] सुसम्पूर्णं अत्र नेपालमण्डले ।
आचार्य्यैराचार्य्यिणीभिः योगिभिः योगिनीभिरपि[६] ॥
रागिभीरागिणीभिश्च ध्यायिभिः[७] ध्यानीभिरपि ।
[८]एतैरपि सुविधिभिः पीठं(थ)सम्पूर्ण[९]पूजितम् ॥
तस्मात् सर्वप्रसा(सा)दाच्च[१०] सम्पूर्णं लभ्यते फलम् ।
सर्वपीठ(थ)प्रपूजाच्च तस्मात् खगाननां(ना) अपि ॥
तृतीयोऽध्याय उक्तेन विधिभिश्च प्रपूजितम् ।
तस्मात् खगानना पूज्या[११] सम्पूर्णं(र्ण) पीथपूजितम् ॥
ततः[१२] पश्चात् श्रीस्वयम्भू धर्म्मधातु प्रपूजितम् ।
प्रथमोऽध्याय उक्तेन विधिभिश्च प्रपूजितम् ॥
पश्चादपि मञ्जुश्रियं[१३] जगद्गुरुं(रु) प्रपूजितम् ।

१ A पाथकं । २ B omits अपि च । ३ B सुनेपाले ।
४ B नेपालेत्र । ५ A परित्य, B परिवृत्य सुभद्रेण तिष्ठन्ति तत्र मण्डले ।
६ D योगिनीरपि । ७ B D ध्यानिभिः । ८ A एतैरपिभिः विधिभिः । ९ B सर्व्वंच । १० B तेषां सुप्रसादाच्च । ११ A पूज्यात् ।
१२ B ततः श्रीमत् । १३ D मञ्जुश्रीयं ।

३१ [1][पुष्पै धूपैश्च गन्धैश्च दीपै नैवेद्यकैरपि ॥
नामसंगीतिपाठञ्च कृत्वा गुरुं[2] प्रपूजितम् ।]
मानुषाश्च स्त्रियश्चापि मञ्जुश्रियं प्रपूजितम् ॥
तस्मात्[3] पुण्यप्रसा(श्चा)दाच्च सर्वविद्यान् प्रलभ्यते ।
पीठसेवा[4]समं पुण्यं नास्ति हि दिवि भूतले ।
पीठाच्च[5] सर्वसिद्धिञ्च[6] फलञ्च लभ्यते ननु ।
पृथक् पृथक् पीठ(थ)से(श्च)वात् पृथक् फलं प्रलभ्यते ॥
सम्पूर्णपीठसेवायाः[7] सम्पूर्णफलं[8] लभ्यते ।
इत्थं उक्तप्रकारेण पीठसेवा[9] कृतं अपि ॥
मनुजादय मानुष्याः उक्त[10]फल प्रलभ्यते ।

कनकमणिमयाङ्के काञ्चनस्तम्भशोभे
दशवलसुतगेहे केतुच्छत्रादिभूषे ।
पटहमुरुजगीते सर्व्ववाद्यप्रवाद्ये[11]
विरमति शुभहेतुं श्रावयेच्छम्भुधर्मात् ॥

इति श्रीगोशृङ्गपर्वते स्वयम्भूचैत्यभट्टारकोद्देशे [12]तीर्थोप-
तीर्थं पीथञ्च निरूपणगुणवर्णनो नाम
पञ्चमोऽध्यायः ॥

---

१ B omits the portion bracketted.

२ D ०पाथञ्च कृत्वा गुरु । ३ B तस्य । ४ A ०श्चेवा० ।

५ A पीथाच्च । ६ B जायते सिद्धिं । ७ A ०पीथश्चेवायाः ।

८ D ०फल । ९ A पीथसेवा । १० D उक्तं । ११ ACD शब्दवादन्तनादे ।

१२ B तीर्थोपतीर्थपीठोपपीठनिरूपणानां पञ्चमोऽध्यायः ।

# षष्ठोऽध्यायः ।

[[1]नमो बुद्धाय ॥ नमो धर्म्माय ॥ नमः सङ्घाय[2] ॥]

ॐ नमः श्रीमते भगवते शाक्यमुनये नमः ॥

पुनरप्यथ मैत्रेय बोधिसत्व जगद्गुरुम् ।
भगवन्तं मुदा नत्वा सादरेण प्रपृच्छति ॥
भगवन्मुनिशार्द्दूल पुनर्वक्तुन्त्वमर्हति ।
इत्थं गुणमयं चेत्रं नेपालस्य विशेषतः ॥
नानापीठिभि[3]स्सम्पूर्णं नानाश्मशानपूरितम् ।
त्रयस्त्रि(त्रि)भिः कोटिदेवैः नानादेवीभिः[4] पूरितम् ॥
त्रीं(त्रिं)शत्रिभिः कोटिनागैर्नागराजैः सुपूरितम् ।
अनेकैर्नागपत्नी(त्नि)भिः परिपूर्णं(र्ण) समन्ततः ॥
इत्थं गुणमय(यं) युक्तं तत्सर्वञ्च श्रुतं मया ।
भवतश्च प्रसादाच्च पुनर्वक्तुन्त्वमर्हसि ॥
कस्माद्धेतोः कस्य काले सर्वज्ञस्योपजातवान् ।
ख्यातं कीर्त्तिं धर्म्मधातुं वागीश्वरमितीरितम् ॥
अतीतैरपि भूतैश्च देवैश्च[5] मनुजैरपि ।

---

१ B omits the portion bracketted. २ A नमो सङ्घाय ।
३ A ०पीथिभिः । ४ D ०देविभि । ५ B omits देवैश्च ।

ज्योतिरूपं जगन्नाथं श्रीस्वयम्भूं प्रईरितम् ॥
तथागतैश्च सर्वज्ञैर्भिक्षुभिक्षुण्युपास(श)कैः ।
सर्वैरपि देवैश्चापि श्रीस्वयम्भूं प्रकीर्त्तितम् ॥
केनेत्थञ्च प्रभो नाथ केनेत्थं शासिनापि च ।
केन च[1] कारेणापि वागीश्वर इतीरितम्[2] ॥
कस्य नाथस्य काले च कस्य तथागतस्य च ।
किं निमित्तं कृतमित्थं प्रकारेण केन अपि ॥
किं किं प्रयोजनार्थञ्च नाथ तद्ब्रूहि साम्प्रतम् ।
इत्थं गुणमययुक्तं[3] धर्मधातो स्वयम्भुवः ॥
धर्मधातु वागीश्वरं नामं केन प्रथापितम् ।
तत्सर्वं ब्रूहि[4] शीघ्रञ्च नाथ मयि कृपां कुरु ॥
मह्यमर्थं न हि नाथ सत्वानाञ्च हिताय च ।
देवानाञ्च मनुष्याणां असुराणां तथा अपि ॥
यक्षाणां राक्षसानाञ्च किन्नराणान्तथैव च ।
भूतानां प्रेतानाञ्च तिर्य्यगाणां तथैव च ॥
सर्वेषामपि सत्वानां हिताय च सुखाय च ।
ब्राह्मणानां क्षत्रियानां च[5] वैश्यानां शूद्राणामपि ॥
सर्वेषामपि सत्वानां विशेषेणात्र वासिनाम् ।
भिक्षुणां भिक्षुणीनाञ्च उपासिकानां तथैव च ॥
उपाशकानां सर्वेषां शिष्याणाञ्च हिताय च ।

---

१ D omits च । २ D इतिरितं । ३ D गुणमयं युक्तं ।
४ D ब्रुह्री । ५ D omits च ।

अधर्म्मिणां धर्म्मिणे धर्म्मिणाञ्च उद्भूतये ॥
उद्भूतानां फलं(लं) प्राप्तुं पुण्यभोग्याय साम्प्रतम् ॥
एवमुक्ते च मैत्रेय भगवान् प्रोक्तवानिति ।
यथा त्वया प्रश्नुतञ्च तथा सत्वहिताय च ॥
देवानां च मनुष्याणां हिताय च सुखाय च ॥
शृणोषि मैत्रेय सर्वं वागीश्वरनामकथाम् ।
साधु सुष्टु च[१] कृत्वा त्वं मनसि निश्चयङ्कुरु ॥
सर्वलोकहितार्थञ्च शृणोषि वाचयाम्यहम् ।
भूतपूर्वे च मैत्रेय कल्पेऽस्मिन् भद्रसञ्ज्ञके ॥
चिरतलेन[२] कालेन अतिदीर्घगतेन च ।
त्रिंशद्वर्षसहस्राणि प्रजानामायुषि स्थिते ।
मानव्यादिमानवानां इति आयूद्भूते सति ॥
तस्मिन् काले च मैत्रेय शोभावत्यां प्रदेशके ।
श्रीनाम्नि नगर्य्याञ्च श्रीभिश्च परिपूरिते ॥
अनेकजनसङ्कीर्णे राजामात्यसपौरजैः ।
ब्रह्मभिः चत्रियैर्वैश्यैः शूद्रादिविविधैर्जनैः ॥
धनिभिः सार्थवाहैश्च पौरैश्च[३] जिनसेवकैः ।
कर्म्मकरादिकृषिभिरनेकैर्जनपूरिते[४] ॥
ऋद्धे स्फीटे चेमे राज्ये[५] जनैश्च परिपूरिते ।

---

१ A सुष्टुश्च। २ A चिलतलेन। ३ D omits पौरैश्च।
४ D अनेकजनपूजिते। ५ D च्नेमराजे।

३१ अनेकैर्मङ्गलैर्युक्ते सन्नरत्नैः प्रपूरिते ॥
इत्थं गुणमयैर्युक्ते एक विख्यात ब्राह्मणः ।
पत्न्या सह समायुक्तः अग्निहोत्री जटी व्रती(ति)॥
चतुर्वेदाङ्गविन्नाथ ब्रह्मज्ञानविदाम्बरः ।
सर्वेषां वेदशास्त्राणां पितामहमिवस्थितः ॥
तस्यां नगर्य्यां[१] राज्ञस्य सः[२] सद्गुरुः पुरोहितः ।
सर्वेषामपि कर्म्माणां[३] प्रसिद्ध भवति सदा ॥
तस्य सुधर्म्मपत्न्या च एकं पुत्रं प्रसूयते ।
द्वात्रिंशल्लक्षणधरं अशीतिव्यञ्जनैर्युतम् ॥
सर्वलक्षणसंयुक्तं सर्वज्ञञ्च जगद्गुरुम् ।
त्रिसाहस्रे महालोके क्षीरनिधौ चन्द्रमा इव ॥
देवानां च मनुष्याणां शास्ता सर्वज्ञनायकः ।
देवदेवाधिदेवानां पितामहमिवस्थितः ॥
दुम्बील[४]वृक्षमाश्रित्य सर्वज्ञज्ञान प्रापितम्[५] ।
देवानां च मनुष्याणां तथागतो जगद्गुरुः ॥
नाम तस्य भर्म्मसुनिः[६] कनकेन समद्युतिः ।
ज्ञानीनां[७] ज्ञाननाथोऽसौ शुभ्रपक्षे तु[८] चन्द्रमा ॥

१ D तस्या नगर्य्या । २ D omits सः । ३ D विराणां ।
४ B इम्बिल, D दुम्बिरं । ५ A सर्व्वज्ञाज्ञेन प्रापितम् ।
६ D तस्या भर्म्मसुनिः । ७ D ज्ञानिनां ।
८ A omits तु ।

स्वर्गलोके विशेषेण मर्त्यलोके विशेषतः।
धर्मदेशकनाथोसौ सर्वज्ञश्च[1] जगद्गुरुः॥
पातालेषु च पापीनां रक्षक गुरुनायकः।
इत्थं सत्त्रयलोकेषु देवे मर्त्ये पातालजे॥
जगदानन्दकालेन(ण) ख्यातश्च कनकमुनिम्।
सुधर्मराजो नामोहं नामार्थेन च सादृशम्॥
सुधर्माणां राजकल्पे भवामि तस्य सेवकः।
पिण्डपात्रादिपूज्यैश्च शयनासनभैषजैः॥
[2][सङ्घभोज्यादिपूज्यैश्च शयनासनभैषजैः।]
सङ्घभोज्यादिपूज्यैश्च तच्छेवक भवाम्यहम्॥
शोभावत्यां नगर्य्यां च यदा जात जगद्गुरुः।
कनकमुनीति नाम कनकेन च सादृशः॥
तस्य शिष्य अभूत्वाहं सुधर्मराज आख्यया।
यत्र गुरुः प्रगच्छति[3] शिष्यैस्सह त्रिलोकिषु॥
तत्र तत्र प्रगच्छामि कनकमुनेः पृष्ठतः।
अनेकैर्भिक्षुभिक्षुणीभ्युपाशक उपासिकैः[4]॥
स्थविरस्थविरैस्सार्द्धं राजामात्यसपौरजैः।
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः॥
ग्रामैः[5] पट्टनजैश्च अन्यत्र देशजैरपि।

१ D सर्व्वज्ञश्च। २ B D omit this line. ३ D प्रगच्छन्ति।
४ A उपाशिकैः। ५ D ग्रामजै।

दिग्गिजैश्च विदिग्गिजैः नानादेशजजातिभिः ॥
मयापि शिष्यगणैश्च सार्द्धं तत्रागत गुरुः ।
कश्चिद्देशेषु देशेषु जात्रां कृता[१] क्रमेण च ॥
धर्म्मोपदेशकं कृत्वा क्रमेण च तत्रागतः ।
श्रीशम्भुदर्शनं कृत्वा गुरुणा च प्रपूजितम् ॥
पुष्पैर्धूपैश्च गन्धैश्च दीपैर्नैवेद्यैः पाठकैः ।
धारणी[२]भाषजै स्तोत्रैः चकार स्तुतिमादरम् ॥
पञ्चाङ्गैश्चापि अष्टाङ्गैः प्रणिपत्य प्रदक्षिणाम् ।
ततः पश्चात् पुनः नाकं शिष्यैस्सह प्रगच्छति ॥
क्रमेण च चतुर्राजं ततोऽपि त्रयस्त्रिंशके[३] ।
इन्द्रस्य भुवने रम्य धर्म्मं देशयति नायकः ॥
इन्द्रेण सह सर्वैश्च देवताभिः[४] परिवृतः ।
[५]धर्म्मं देशयामास कनक मुनिनायक ॥
सुधर्म्मराजो नामोऽहं भवामि स इत्थं यदा ।
बोधिसत्व सदाशक्तः तदाराधनतत्परः ॥
तदा गुरोः प्रसा(शा)दाच्च दर्शयामि स्वयम्भुवम् ।
मञ्जुदेवं गुरुश्चापि वन्दयाम्यत्र च मुदा ॥
वाराणस्यां नगर्य्यां च विहारे यत्र स्वान्तिके ।
तदा विक्रमशीलस्मि[६] विहारे वसदुत्तमः ॥

---

१ B कृतां ।　　२ B धारणी ।　　३ D त्रयचिंशके ।
४ A देवताधिः, D देवताधि ।　　५ B धर्मञ्च ।　　६ D विक्रमशीलस्य ।

धर्म्मश्रीमित्रो नामोऽयं भिक्षुः पण्डितकञ्चुकः[१] ।
धर्म्मं दिदेशयामास नामसङ्गीति च कथाम् ॥
ब्रह्मभिः क्षत्रि(त्री)यैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ।
वैश्यिच्छैर्गणैस्सार्द्धं पर्षत्कृत्वा काश्यामपि ॥
जैरन्यजैर्वापि देशजैर्ग्रामजै[२]रपि ।
अनेकै[३]र्मानुषैर्वापि पर्षत्कृत्वात्र मण्डले ॥
व्याख्यात्य नामसङ्गीति(तिं) नाम्ना सादरयुक्तितः ।
द्वादशाक्षर अर्थानि जातो वक्तुर्न शक्तधीः ॥
ततः चिन्तापरो जातः श्रुतपूर्वमनुस्मरन् ।
इतोऽस्त्युत्तरदिग्देशे मञ्जुश्रीनाम पर्वतः ॥
ख्यातः पञ्चशीर्षस्तत्र बोधिसत्वो गुणोदधिः ।
[४]मञ्जुश्रीस्तत्परं ज्ञात्वा गत्वा पृच्छामि चिन्तयन् ॥
चीनप्रदेशकैराज्ये अनेकैः जनपूरितो ।
नानामङ्गलसम्पूर्णं ऋद्धे स्फीते[५] मनोरमे ॥
अनेकैर्वि(वि)द्याभिर्युक्ते मञ्जुश्रि(श्री)य प्रसा(शा)दतः ।
त्रिसाहस्रमहालोके विद्याया प्रतिपूरिते ॥
आयामं अथ व्यायामं अष्टमाभे(भिः) सुविस्तरे ।
सप्तभिः परिखावृत्य महाप्रमाणराज्यके ॥
कुक्कूट[६] सम्पातमात्रेण ग्रामैर्देशैः प्रपूरिते[७] ।

---

१ D भिक्षुकञ्चुक० । २ B omits ग्रामजैः । ३ A अन्येकैः ।
४ D मञ्जुश्रीं तत्परं । ५ D ०सम्पूर्णं ऋद्धे स्फोटे ।
६ D ०कुकुट । ७ A पूरिते ।

पट्टनैर्नैगमैराष्ट्रै राजधानिभिः पूरिते ॥
ईदृशं गुणमयं राज्यं त्रैलोक्येऽपि सुदुर्लभम् ।
त्रिसाहस्रे महालोकेऽमरावतीमिवस्थितम् ॥
तस्या नगर्य्याभ्यन्तरे[1] सुराजधानिप्रदेशके ।
पञ्चशीर्षनामगिरिं पञ्चरत्नमयैर्वृतम् ॥
तस्योपरि ह्रदमेकं तन्मध्ये सुप्रासादकम्[2] ।
मञ्जुश्रियं जगन्नाथं पत्नीभ्यां सह संस्थितम् ॥
अतीतैश्च प्रत्युत्पन्नैर्जिनैरपि प्रशंसितम् ।
तस्मिं गुरौ मञ्जुदेवे द्रुतं गत्वा पृच्छाम्यहम् ॥
नाम्नेन मञ्जुदेवोऽय, मञ्जुश्रीप्रतिरूपजः ।
श्रिया लक्ष्म्या गुणेनापि तस्मादृशं न हि कचित् ॥
श्रावकानामपि नाथ प्रत्येकानां तथैव च ।
महायानानां सर्वेषां विद्यानां गुरुःसिद्धकः[3] ॥
भिक्षूणां भिक्षुणीनाञ्च उपाशकानां तथैव च ।
उपाशिकानां सर्वेषां विद्यानां नाथ ख्यापितम् ॥
तन्त्रानामपि नाथस्य पौराणिकानां तथा ।
ज्योतिषाणाञ्च नाथोऽसौ औषधीनां तथैव च ॥
चतुर्वेदादिशास्त्राणां नानाभाषिकानामपि ।
लोकोत्तरादिगाथानां प्रज्ञापारमितार्थकः ॥
देवानामपि दैत्यानां गन्धर्वानां तथैव च ।

---

१ D D तस्यां नगर्य्यान्तरे । २ D सुप्रसादकं । ३ D गुरुसिद्धकः ।

अप्सरादीनां सर्वेषां नानाभाषासुविद्गुरुः ॥
देवासुरमनुष्याणामक्षराणाङ्गुरुः अपि ।
अन्येषामपि विद्यानां गुरुस्त्वासौ त्रिलोकिषु ॥
रत्नाकाराणां नाथोऽसौ स्वर्णकाराणां तथैव च ।
लोहकाराणां शिल्पानां सर्वविद्यानां तथैव च ॥
वाणिजानां[1] कृषीणाञ्च तुलानाञ्च तथैव च ।
न्यायानां उ(द्ध)द्धाराणाञ्च उत्क्षेपानां तथैव च ॥
सर्वेषां काष्ठकाराणां गृहकाराणां तथापि च ।
कर्म्मकराणां सर्वेषां विश्वकर्म्मा इव स्थितः ॥
चित्रकाराणां[2] लेखिणां लिपिकर्म्म प्रकारिणाम् ।
नानादेशजभाषाणां गुरुनाथः प्रसिद्धकः ॥
तस्य पत्नीद्वय[3]श्चासीद्वरदा मोक्षदापि च ।
केशिन्युपकेशिन्यौ प्रतिरूप्यौ प्रख्यापिता ॥
देवीनामप्सराणाञ्च किन्नरीणां तथैव च ।
नागीणां दैत्यस्त्रीणाञ्च गुरु माता प्रकीर्त्तिता ॥
ब्राह्मणीनां क्षत्रिणीनां वैश्यनीनां तथैव च ।
शूद्रानीनाञ्च सर्वासां विद्या माता प्रकीर्त्तिता ॥
तन्तुवस्त्रकारीणाञ्च नानासुवस्त्रकारी(रि)णाम् ।
दूष्यासु वस्त्रकारीणां गुरु माता प्रईरिता ॥
सर्वेषां नारिविद्यानां नर्त्तकीनाञ्च गानिनाम्[4] ।

---

१ D वाणीजानां । २ D चित्रकालानां । ३ D तस्या पत्न्यद्वयः ।
४ D गाचिनां ।

शिल्पकर्मकरादीनां विद्या माता प्रकीर्त्तिता ॥
मानूष्याणाञ्च सर्वेषां मञ्जुदेव जगद्गुरुः ।
[1]सर्वास्वपि च विद्यासु मञ्जुश्रिमिव संस्थितः ॥
मानुषीणाञ्च सर्वासां वरदा मोक्षदा अपि ।
सर्वासां नारिविद्यानां केशिनी उपकेशिनी ॥
मञ्जुदेव जगन्नाथ वरदा मोक्षदा सह ।
यत्र स्थिलात्र गच्छामि पृच्छयामि च अर्थकम् ॥
नामसङ्गीतिव्याख्यानं द्वादशाक्षर अर्थकम् ।
श्रुत्वा च मनसि धृत्वा तत्र गन्तुं च निश्चयम् ॥
तस्मिन्काले कर्कुच्छन्द[2] नाके तिष्ठति नायकः ।
येन येन मार्गेणाहं गच्छामि कतिभिर्दिनैः ॥
कतिमासैः कतिपक्षैः कतिवर्षैः सम्प्रापयिष्यति ।
चीनदेशे पञ्चशीर्षे[3] गच्छामि निश्चयं द्रुतम् ॥
येन दिशा च मार्गेण गच्छाम्यहं यत्र सुखम् ।
इति निश्चित्य धर्मश्री प्रस्थानञ्च चकार सः ॥
दिनैः पक्षैः क्रमेणैव अत्र नेपालमण्डले ।
समायातः स धर्मश्री[4] भिक्षुः पण्डितकञ्चुकः ॥
क्रमेण विषयन्तस्य नेपालस्य विशेषतः ।
प्राप्तवान्सोऽपि यत्नाच्च धर्मश्री नाम पण्डितः ॥

१ D सर्व्वासुपि च विद्यासु मञ्जुश्रीमिव संस्थिता । २ D क्रकुच्छन्द ।
३ D ०शीर्षे । ४ D सद्धर्म्मश्री ।

प्रथमं श्रीस्वयम्भूं च दर्शनं प्राप्तः स भिक्षुकः।
ततः पुष्पैश्च धूपैश्च गन्धैर्नैवेद्यदीपकैः[1] ॥
फलमूलादिभिर्योग्यैः पूज्ययोग्यैश्च विस्तरैः।
पूजयामास भावेन धारणीस्तोत्रपाठकैः[2] ॥
कश्चित्पञ्चप्रणामेन अष्टाङ्गेणापि च मुदा।
सेवयामास भावेन स्वयम्भूं जगदीश्वरम्[3] ॥
लोकोत्तरादिभाषैश्च विविधैर्भाषजैरपि।
स्तोत्रयामास भावेन धर्म्मश्रीमित्रभिक्षुकः ॥
पुनः पुनः प्रदक्षिणां कारयामास शम्भूवम्[4]।
धर्म्मश्री नाम भिक्षुश्च भिक्षुपण्डितकञ्चुकः ॥
ततः सोऽपि शम्भुस्थानादुत्तराभिमुखं गतः।
क्रमेण विषये तस्मिन्प्राप्तवान्सोऽपि यत्नतः ॥
अथ मञ्जुदेव नाथ ज्ञानवान्तस्य दूरतः।
पञ्चाभिज्ञाख्यज्ञानेन ज्ञात्वैवमिह तिष्ठति ॥
दिव्यचक्षुश्च श्रोतञ्च घ्राणञ्चै(चै)व परचित्तकम्।
पूर्वनिवासाज्ञानञ्च ज्ञेयञ्च पञ्चाभिज्ञकम् ॥
भूतं भविष्यं वर्त्तञ्च अतीतानागतमपि।
तत्सर्वं सम्प्रजानाति मञ्जुश्री परम[5]गुरुः ॥
देवदेवाधिदेवानां नाथ नाथ जगद्गुरुः।

---

[1] D गन्धनैवेद्यदीपकैः। [2] D ॰पाथकैः। [3] D स्वयम्भुजगदीश्वरं।
[4] D संभुवं। [5] D परमो।

पितामहादिदेवानां पितामहमित्युच्यते ॥
सर्वविद्यानां नाथोऽसौ सर्वज्ञानां तथा अपि।
षट्शास्त्रादिवेदानाञ्च चतुर्वर्णा[१]मपि वेदजाम् ॥
सर्वेषामपि विद्यानां नाथ नाथ जगद्गुरुः[२]।
मञ्जुश्रीगुरुसादृश्यं[३] त्रैलोक्येऽपि सुदुर्लभम् ॥
इत्थं त्रैलोक्यनाथेन पश्यति[४] दिव्यचक्षुषा।
पञ्चाभिज्ञो मञ्जुदेव ज्ञातवान्दूरतश्च तम् ॥
अथ मञ्जुदेव नाथ तदागतं प्रजानितम्।
तस्माच्च मञ्जुदेवेन ऋद्धिज्ञानञ्च संस्कृतम् ॥
सम्टद्धिदर्शनार्थञ्च माययेत्थं विनिर्म्मितम्।
शार्द्दूलकेशरी द्वाभ्यां हरं भूमौ न्यवाहयत्[५] ॥
मञ्जुश्रीदेवमाचार्य्यं दृष्टवान्स च दूरतः।
धर्म्मश्रीनामभिक्षुश्च दृष्टाज्जातञ्च संशयम् ॥
अयं नहि च मानुष्या देवो भवति केवलम्।
मनुष्याणामिदं[६] ऋद्धिं कस्मिंश्चित् भुवने नहि ॥
इति दृष्ट्वा विचिन्त्योपि धर्म्मश्री नाम पण्डितः।
कदाचिदपि न श्रुतं दृष्टमपि पुनः कथम् ॥
भूतेपि वर्त्तमानेन कथिते बौद्धशास्त्रके।
कस्मिंश्चिद्दृष्टं न श्रुतं [इत्थं ऋद्धि च प्रापितम् ॥][७]

---

१ B चतुर्वेदामपि। २ D जगद्गुरूं। ३ D ०गुरुणा दृश्यं।
४ D पश्यन्ति। ५ D न्यवाहयेत्। ६ D मानुष्याणां।
७ B omits the portion bracketted.

इत्थं ऋद्धं च संप्राप्तं देवलोकेषु गौरवम्।
स्वर्गलोके विशेषेण नोक्तश्च पूर्वपण्डितैः॥
शार्दूलकेशरी[1]द्वाभ्यां हरं भूमौ व्यवन्धतः।
विष्णुना न समर्थायं ऋद्धिं च सम्प्रकुर्वतः॥
विष्णुना अपि देवेन वृषाभ्यां हर सम्बहन्।
कृषिभूमौ विशेषेण हरश्चापि न्यवाहयन्॥
हरिणापि च देवेन यद्वद्धलं न्यवाहयत्।
मानुषैः(ष्यैः)रपि सर्वैश्च तद्वत् कृषिं च कारितम्॥
मानूष्याणामपि लोके मनुषीणां[2] चापि कुतः।
इत्थं ऋद्धिं च संप्राप्तं कथं देव न उच्यते॥
अवश्यं भवति देवः सर्व(ज्ञ)ज्ञः सर्वविद्गुरुः।
तेन च पुरुषेणापि मञ्जुश्रि(श्री)यं न जानति॥
इत्थं विचिन्त्य धर्मश्री आजगाम तदन्तिकम्।
हरष्टतकृषिकस्य पृच्छामि मनसि कृतम्॥
भो महानृद्धिपुरुष कश्चित्मार्गं च देशसि।
उत्तरापथमार्गं गमनाय चीनदेशकम्॥
केन दिशेन[3] मार्गेण उत्तरापथं गम्यते।
चीनदेशे मञ्जुश्रियं मया[4] कृताय दर्शनम्॥
तं प्रपृच्छामि यत्नेन मार्गश्रवणकाङ्क्षयः।

---

१ D केशलि। २ D मानुषीनां। ३ D दीशेन....पथ गम्यते।
४ D महा।

दूत स्थानात् कियद्दूरं मञ्जुश्री नाम पर्वतम् ॥
कतिदिनैः पचैर्मासैः कतिवर्षै(र्षैः)सुदूरकम् ।
केनापि च प्रकारेण गम्यते भवति श्रुतम् ॥
निर्द्दिशयतु तं मार्गं येन प्राप्ता भवामि तत् ।
तेन मार्गश्च दृष्टं मे भो महानृद्धिप्रापकः ॥
भवतश्च प्रसादाच्च मह्यं कृपां दयाङ्कुरुः[१] ।
केन केन प्रकारेण गच्छाय ब्रूहि सत्प्रभो ॥
एवमुक्ते अपि मद्य मञ्जुदेव जगद्गुरुः ।
धर्मश्रीमित्रं(त्र) भिक्षुश्च आजगाम प्रफुल्लितः ॥
भो धर्मश्रीनाम भिक्षुः त्वया श्रुतं वचाम्यहम् ।
मञ्जुदेवस्य[२] नाथस्य पन्थानं नगरमपि ॥
दूतस्थानात् महान्दूरं[३] पन्थानमतिदुष्करम् ।
कतिवर्षेण मासेन भवता च इति श्रुतम् ॥

अपि च ।

हिमालयमपि मार्गं हिमेन च सुपूरितम् ।
तस्मादपि च शीताच्च महद्दुःखञ्च पन्थकम्[४] ॥
गह्वरयुक्तपन्थानमतिदुःखं महत्तरम् ।
वक्रपन्थं अतिदीर्घं अतिघोरं सुशीतलम् ॥
तस्माच्च कारणादेव शामग्रिं[५] च विनापि च ।

---

१ D कुरुः । २ C मञ्जुश्रीदेवस्य । ३ D महादूरं ।
४ D पञ्चकं । ५ A D श्रामग्रिं ।

कथं त्वयात्र गन्तव्यं मयोक्तञ्च तुभ्यं किल: ॥
इति ज्ञात्वा त्वया सद्य रात्रि एक विशेषत: ।
मयि वासङ्कुरु भिक्षो वचामि लङ्घितार्थकम् ॥
इत स्थानादेकवर्षात् सम्प्राप्तं चीनदेशकम् ।
इति ज्ञात्वा त्वया सद्य वासं[१] मम मन्दि(ण्डि)रे ॥
भो प्राङ्गनक[२] भिक्षो किल दूरात्[३] त्वमागता: ।
अतिखेदञ्च प्राप्तोऽसि चिह्नामि मुखमण्डलात् ॥
केनार्थमागतो भिक्षु किमागमनं प्रयोजनम् ।
अतिदूरं दुष्करम्पान्थं घोरं भवता[४] वाञ्छितम् ॥
कुरु प्रातस्त्वमुत्थाय स्वाभिप्रायं कुरु त्वया ।
यत्कार्य्यं स्वस्तने कृतं[५] तत्कार्य्यं कुरु शीघ्रकम् ॥
एवमुक्ते कविर्भिक्षु धर्म्मश्री नाम वीरक: ।
तुष्णीम्भावात्परं जातं भवेदनुमतञ्च तत् ॥
निमन्त्रितमिदं मत्वा मञ्जुदेवे जगद्गुरौ ।
धर्म्मश्री नाम भिक्षुर्हि मनसा स्वीकृतं परम् ॥
मञ्जुदेवोऽपि सर्वज्ञ: परचित्तज्ञानपर: ।
धर्म्मश्रिया च भिक्षुणा स्वीकृतं जातं सद्गुरु:[६] ॥
इत्थं ज्ञात्वा मञ्जुदेव हृत्तं शीघ्रं प्रमुच्यति ।
त्वया तत् सिंहशार्द्दूलौ स्वद्धा[७]त्वर्द्धापयन्तत: ॥

---

१ D वासं च । २ B प्राघुनक । ३ B कियद्दूरात् ।
४ D पाथं घोरं भवति । ५ D कृत्वा । ६ D जात सद्गुरु ।
७ D स्कद्धा ।

अथापि सिंहशार्द्दूलौ मञ्जुदेवप्रभावतः ।
खपथादपि सुशीघ्रं चान्तर्द्धान भवेदपि ॥
लाङ्गलमपि तत्रैव स्थापयामास सद्गुरुः ।
ज्ञानादपि कृतं पश्चात् ज्ञानभूमि प्रईरिता ॥
ज्ञानीनां[1] ज्ञाननाथेन मञ्जुदेवेन शासिना ।
ज्ञानेनापि कृतात् पश्चात् ज्ञानभूमि प्रकीर्त्तिता ॥
इदानीं तद्भुवि स्थाने ब्रह्मैश्च क्षत्रियैरपि ।
वैश्यैश्च शूद्रकैर्वापि अत्र नेपालवासिभिः ॥
देशजैर्ग्राम(मि)जैर्वापि अत्रजैरन्यजैरपि ।
देवैर्नागैश्च सर्वैश्च मञ्जुश्रीकृषिभूरिति ॥
न तद्दहति भूं वह्नि शावानामिति कथ्यते ।
अत्रजैरन्यजैः सर्वैर्विख्यातद्यौकसैरपि ॥
स्वर्गे मर्त्ये च पाताले देवासुरमनुष्यकैः ।
मञ्जुदेवकृषिभूमिं[2] विख्याता च त्रिलोकिषु ॥

अपिच[3] ।

मञ्जुदेवेन गुरुणा केनेत्थं कृषिकारितम् ।
नेपालवासिभिर्लोके न ज्ञाता ज्ञाताय अपि[4] ॥
पूर्वत्रवासिभिर्जनै न ज्ञातं कृषिकर्मकम्[5] ।
मञ्जुदेवप्रसादाच्च तत्र लोके प्रजानितम् ॥

---

१ D ज्ञानिना । २ D ०भूमि । ३ D omits अपि च ।
४ D न ज्ञाताय मुदा अपि । ५ D ०कर्म्मिकं ।

ततः प्राङ्गणेन[1] सार्द्धं मञ्जुदेव जगद्गुरुः[2] ।
येन श्रीशम्भुमार्गेण तेनापि स्वं(स्व)गृहं ययौ ॥
अथ मञ्जुदेवः(व) शास्ता श्रीस्वयम्भूं जगद्गुरुम् ।
प्रथमं दर्शनं कृत्वा ततस्तस्मै प्रणामकम् ॥
पञ्चाष्टाङ्गेन योगेन प्रणिपत्य पुनः पुनः ।
त्रयः सप्तः पञ्चवारं प्रदक्षिणां(णा) कृतं मुदा ॥
गाथाभिस्संस्कृतैर्वापि धारणीभिश्च भाषजैः ।
विविधैस्तोत्रयामास स्वयम्भुवे पुनः पुनः ॥
ततः पश्चाद्धर्मश्रिया भिक्षुणापि मुदापि च ।
श्रीस्वयम्भूं जगन्नाथं[3] गुरोः प्रसा(शा)दाच्च दर्शितम् ॥
पञ्चप्रणामकेनापि अष्टाङ्गेणापिच मुदा ।
बहुधा च प्रदक्षिणं[4] पुनः पुनश्चकार सः ॥
श्रीस्वयम्भूं जगन्नाथं प्रणिपत्य च आदरात् ।
मञ्जुदेवप्रसा(शा)दाच्च स्वयम्भूं च प्रदर्शित ॥
धर्म्मश्रीमित्रभिक्षुश्च मञ्जुदेवस्य पृष्ठतः ।
यत्र यत्र प्रगच्छति[5] तत्र तत्र स गच्छति ॥
पञ्चाष्टाङ्गप्रणामाच्च बहुधा च प्रदक्षिणात्[6] ।
स्वयम्भुवः(व) सकाशाच्च[7] स्वगृहञ्च प्रगच्छति ॥
धर्म्मश्रीमित्र भिक्षुश्च तत्पृष्ठतः समागतः ।

---

१ B प्राक्जनेनच्छ ।   २ D प्रकीर्त्तितं ।   ३ D श्रीस्वयम्भुजगन्नाथं ।
४ D प्रदक्षिण्य ।   ५ D प्रगच्छन्ति ।   ६ D प्रदक्षिणा ।
७ D प्रसादाच्च ।

मञ्जुदेव पृष्ठ गत्वात् मञ्जुदेवं न जानितम्[१] ॥
मञ्जुदेव च शास्तापि तस्माच्च क्रमेण गतः[२] ।
मञ्जुश्रीपर्वतगृहं सम्प्राप्तवान्सुदूरतः ॥
वरदामोक्षदादेव्यौ दूरेणापि प्रदर्शितम् ।
एकां स्वर्णकमण्डलुं[३] स्वर्णभृङ्गारथालि(रि)काम् ॥
इत्थं गृह्य मुदा देव्यौ द्वारे तिष्ठ(ति)तः सादरम् ।
अर्घं कृत्वा प्रणिपत्य गृहे प्रवेश नायकः ॥
ततः प्राङ्गणेन सार्द्धं मञ्जुदेव[४] गृहं विशत् ।
यत्र आसनं प्रज्ञप्तं वरदा मोक्षदा अपि(पिः) ॥
तत्प्रविश्य मञ्जुदेवः धर्मश्रिया अपि सह ।
धर्मश्रीरपि भिक्षुस्य योग्यासने न्यषीततः ॥
एवं कृत्वा ततः पश्चात् मार्गकृतव्यथाश्रमम् ।
शान्तात् पश्चात् ते देव्यौ च मञ्जुदेवं प्रपूजितम् ॥
पश्चामृतादिभिः पश्च प्रक्षुर्वानैस्सुभोज्यकैः ।
फलमूलादिभिर्भोज्यैर्मञ्जुदेवं(व) प्रपूजितम् ॥
ततः प्राङ्गणकं भिक्षुं वरदा मोक्षदापि च ।
फलमूलादिभिर्भोज्यैश्चकार भोजनं मुदा ॥
भोजयामास अत्यर्थं गौरवेण स्वादरात्[५] ।
ततस्तेन [६]धौताहस्तौ अपनीतं च पातकम् ॥

१ D न जातिकं ।  २ D मञ्जुदेवस्च शास्तापि तस्माच्चंक्रमे गतः ।
३ D ०कमण्डलं ।  ४ D मञ्जुश्रीच ।  ५ D स्वमादरात् ।
६ D धाताहस्तौ अपश्नीतञ्च ।

धर्म्मश्रीसंज्ञकभिक्षुः[1] मञ्जुदेवं समागतः।
मञ्जुदेवोऽपि सर्वज्ञ धर्म्मश्रीमित्रेण सह॥
विविधां मोदनीञ्चापि कथाञ्च भनति[2] प्रभुः।
मञ्जुदेव गु(रु)रुः शास्ता धर्म्मश्रीमित्रमुक्तवान्[3]॥
भो धर्म्मश्रीसंज्ञ मित्र केनार्थं त्वमिहागतः।
मञ्जुदेवस्य वृत्तान्तं श्रुतं त्वया कथं कथम्॥
चीनदेशं महादूरं अतिदुष्करं(र) वत्मकम्।
पूर्व्वोक्तेन मया तुभ्यं श्रीतेन चातिदुष्करम्॥
त्वमागतः कुतः स्थानात् कार्य्यं ते किं किमस्ति च।
तत्सर्वं ब्रूहि मे भिक्षो प्रागमनार्थकमपि॥
मञ्जुदेवोऽपि सर्वज्ञः अस्मिन्काले चीने न हि।
कुत्रास्ति कुत्र गतं न ज्ञास्यामि श्रुतमात्रकम्॥
इत्थं सर्व्वेभ्य लोकेभ्य वा(र्त्ता)र्त्तां श्रुतं चीनजादपि।
अत्र नेपालजं वा(चा)पि मयापि श्रूयतेऽनिशम्॥
भवानपि च भो भिक्षो अतिदुःखेन प्रागतः।
कुतोऽपि च सुदूराच्च पन्थानादृच चागतः॥
एवमुक्ते स धर्म्मश्रीरविज्ञातं च युक्तिकम्।
मञ्जुदेवं[4] जगन्नाथमुवाच स्ववृत्तिकथाम्॥
भो महापुरुष विद्वान् वाराणस्याहमागतः।
विहारादिक्रमाख्याच्च[5] अत्र नेपालमण्डले॥

---

१ D धर्म्मसंज्ञकभिक्षुश्च। २ D मोदनी चापि कथां च भवति। ३ D उक्तिवान्। ४ D मञ्जुदेव०। ५ D विहारा विक्रमाख्याच।

अपि च ।

नामसङ्गीतिव्याख्यानं कथयामि पर्षदि अहम् ।
द्वादशाक्षर अर्थानि वक्तुं मया न शक्यते ॥
पण्डितानां(च) सर्वेषां नाममपि न ज्ञायते ।
द्वादशाक्षरस्यार्थञ्च वक्तुं ज्ञातुं[१] न शक्यते ॥
कर्णमुखपरंपरात् मयापि कथञ्चिच्छ्रुतम् ।
मञ्जुश्रीजगन्नाथ चीनदेशे प्रतिष्ठति ॥
वाराणस्या[२] नगर्य्याञ्च प्राप्यामि अत्र मण्डले ।
कालोऽपि तोऽसौ सप्तघटितस्य रात्रीं गतः ॥
सुप्रलापा[३] तयोश्चापि मञ्जुश्रिया प्रजानितम् ।
धर्म्मश्रीमित्रभिक्षुश्च मञ्जुदेवेनापि सह ।
सुखसंरञ्जनीं सुकथां[४] नानाविधां कथामितः ।
ततो रात्रौ ददौ तस्मै शयनार्थञ्च [५]क्लष्ठकम् ॥
तत्र गत्वा क्षणं सुप्त[६] धर्म्मश्रीमित्र उत्थितः ।
धर्म्मश्री(श्रीः) सुकविर्भिक्षुः मनसि प्राप्तञ्च संशयम् ॥
अत्यर्थं आश्चर्य्यं प्राप्तं तेषां च दर्शनेन च ।
आर्य्यस्य[७] पुरुषो यो(य)हि सत्त्वेष्वपि च श्रेष्ठकः ॥
त्रिसाहस्राधिकश्चैव तत्स्थानमतिश्रेष्ठकम् ।
त्रिसाहस्रे महालोके तेन च सा(शा)दृशं न हि ॥

---

१ D ज्ञान । २ D वाराणस्यां । ३ D सप्रलापात् ।
४ D मुखसंरञ्जनी सुकथां । ५ D कोष्ठकं । ६ D सुप्तं ।
७ D आश्चर्य्यं

गुणेन च सुवर्णेन तेजसा सु(श्रि)(श्रि)यापि च।
भविष्यन्ति अवश्यं ते देवाश्च मानवा न हि॥
ईदृशं ऋद्धिसंप्राप्तं देवलोके न विद्यते।
मानवानां कुतो एवं केवलं देवनिश्चयम्॥
स्वयम्भु(व)वः प्रभावाच्च नाकादवश्यमागताः।
मया चापि श्रुतं पूर्वं स्वयम्भुव कथामपि॥
कनकमुनेः प्रशादाच्च वाराणस्यां विशेषतः।
श्रीस्वयम्भूं जगन्नाथं[1] त्रैलोक्य उत्तमं प्रभुम्[2]॥
श्रिया लक्ष्म्या गुणेनापि भुवने नक्षत्रेण[3] च।
प्रथमं शम्भुवः पूज्ये कर्म्मकर इव स्थितः॥
मानवं न हि तस्माच्च केवलं देव एव तु।
द्वात्रिंश(ल)लक्षणधर अशीतिव्यञ्जनैरपि॥
विराजित[4]सुगात्रञ्च देवदेव इव स्थितः।
द्वाव(पौ)पि पत्नी तस्यासीद्वरदा मोक्षदापि च॥
केशिनीचोपकेशिन्यौ मञ्जुश्रीरिव संस्थिते(तः)।
स्थानमपि च श्रेष्ठं स्वयम्भुवः समीपके॥
नन्दनादपि सौन्दर्य्यं मेरोरधिकगौरवम्।
प्राासा(शा)दमपि श्रेष्ठञ्च द्वारगवाक्षतोरणैः॥
सुलक्षणैस्सुभूषाङ्गं विश्वकर्म्मकृतमिव।

---

१ D श्रीस्वयम्भुजगन्नाथ। २ D प्रभू। ३ D न क्षेत्रेणाच।
४ D विराजितं।

३३ वैजयन्तमिव प्रासा(शा)दमत्यर्थं शोभितं ननु ॥
ईदृशं गुणसम्पन्नं मानवं कुत्र विद्यते ।
आगारेऽपि च कूटे च मानवराजके नहि ॥
बहु(भि)भिः पुष्ट(कै)कैः पूर्णादयं श्रीमञ्जुश्रीरिव ।
किञ्चिन्न विद्यते नूनमस्मिन् प्रासा(शा)दके न च ॥
तत्सर्वं लक्ष्मीभिः पूर्णाद्राजगृहमिव स्थितम्[१] ।
पूर्वकृतमृद्धिश्चापि महाश्च[२] कृतमपि ॥
पश्चादपि च ऋद्धिश्च आश्चर्ययुक्तकं[३] कृतम् ।
सेवकं शम्भुनाथस्य गृहञ्च असमद्युतिम् ॥
द्वावपि च तत्पत्नी तौ अप्सरादधिकसुन्दरौ ।
लक्ष्मी चापि सुसमृद्धं तेजसा असमद्युतिम् ॥
गुणेन च सद्वृत्तेन सचीगात्र इवाभवत् ।
ईदृशैर्गुणैस्सम्पूर्णं त्रैलोक्येऽपि सुदुर्लभम् ॥
न च भवति मा(नु)नूष्यः केवलं देव एव च ।
कथं भवति मानूष्य मे हृदि संशयं न हि ॥
अव(श्यं)श्य देवदेवाश्च अधिदेवोऽयं स्वप्रभुः ।
[४]इति चिन्त्य न युक्तं मे शयनं दीर्घकालिकम् ॥
महर्द्धिकोऽयं भगवान् कथां कां कां वाचिष्यति[५] ।

१ D राजग्रहामिवास्थितं ।  २ D महामुश्च ।  ३ A युक्तक ।
४ D इति चिन्त्यनुयुक्तं मे शयनं दीर्घकालकं ।
५ D कथां कां वाचयिष्यति ।

शृणोमि तत् समुत्थाय सकलं सोऽनुसमर्पयेत् ॥
तद्वारमूलमाश्रित्य[1] निभृतस्तोपतिष्ठवान् ।
वाह्ये च कोष्ठके भिक्षुः मनसा [वचसापि च][2] ॥
कर्म्मणा एकभावेन नि(भृ)भृतस्ताप्यतिष्ठति ।
यथैव ध्यानिना ध्यानं योगिना च योगं कृतम्[3] ॥
तथैव वाह्यकोष्ठे च सोऽपि भिक्षु प्रतिष्ठति ।
तदभ्यन्तरे कोष्ठे च मञ्जुदेव जगद्गुरुः[4] ॥
केशिन्या उपकेशिन्या सह विवेश नायकः ।
ये केशिन्युपकेशिन्यौ प्रावृतादपि ॥
मंजुश्रिया सह कोष्ठे आशने च प्रविशति ।
यदा प्रविशेदाशने ये देव्यौ ते मुदापि च ॥
मंजुदेव जगन्नाथं परमेश्वर्य्यौ स[5] प्रोचतुः ।
भगवन् मंजुदेव त्वं सर्वज्ञानां नाथ गुरुः(रु) ॥
देवदेवाधिदेवानां सर्वेषां नाथ नायक ।
आवां पृच्छावः भवते अल्पप्राज्ञणकस्य च ॥
किमर्थेन प्रयोगेण कामार्थं भिक्षुरागतः[6] ।
केन प्रयोजनेनापि केन कामेन प्रागतः ॥
केनापि वाञ्छायुक्तेन नो गृहे भिक्षुरागतः ।
अयं प्राज्ञणकभि(क्षु)क्षुः केनार्थेनागतोऽत्र च ॥

---

१ D ०मूलमाहृत्य ।　　२ B omits वचसापि च ।
३ D योगणा योगिनीकृतम् ।　४ D जगद्गुरुम् ।　५ A omits स ।
६ D कामार्थेऽनभिरागतः ।

तत्सर्वं ब्रूहि सन् प्रभो आवाभ्यां प्रीतये मुदा ।
तस्माद्देशात्कुतः स्थानात् कस्माच्च विषयादपि ॥
कस्माद्राज्याच्च आयाति कोऽयं भिक्षुकः प्रभो ।
वेशञ्च भिक्षुभावञ्च विहारवासि(शि)नमपि ॥
नारण्यवासिनमेव[1] शास्तृतत्त्वञ्च भिक्षुकम् ।
गुणज्ञानेन विद्वान् सः पञ्चाभिज्ञ[2]पदं नहि ॥
प्रापित भवति तस्मात् ज्ञानजड़[3]पण्डितमिव ।
अंशेन वापिना चापि नियमेनापि च तथा ॥
वेषेण च गुणेनाप्यभिमान[4]पण्डितमिव ।
[5][तस्माच्च भावयुक्तेन[6] आवाभ्यां ज्ञान ज्ञायताम् ॥
भवतः प्र(शा)सादान्नाथ आवयो हृदि संशयम् ।
आवयो हृदि सञ्जातादत्यर्थं संशयमपि ॥]
तच्छंशयं प्रणाशाय शीघ्रं ब्रूहि च सत्प्रभो ।
आवाभ्यां प्रीतिकं कृत्वा पुनर्दर्शयसि नायकः ॥
आवयोः संशयं जातं तस्मिन्[7] काले प्रणाशितम् ।
एवमुक्तेऽपि च सद्य पत्नीभ्यां प्रीतये मुदा ॥
मंजुदेव जगन्ना(थ)र्थं प्रोवाच स स्त्रियावपि[8] ।
ताभ्यामपि स्नेहभावात्तयोवनश्रोतकात् ॥

---

१ D नारण्ये वाशिनामेव । २ D पञ्चाभिज्ञा० । ३ D ज्ञानजो
४ D ०ज्ञान० । ५ C omits the portion bracketted.
६ D तस्माच्छ्भावयुक्तेन । ७ D शंशयं जातमस्मिन् ।
८ D स्त्रियावपिः ।

इति श्रुत्वा नाथनाथः सर्वज्ञनाथ(थः) सद्गुरुः ।
[1]त्रिलोकमातरौ देव्यौ शृणोथां वचनन्तरम्[2] ॥
येनार्थेनागतोऽस्म्यत्र महद्दुःखमचिन्तयन् ।
धर्मश्रीसंज्ञको भिक्षु(वि)र्विहारे विक्रमाख्यके ॥
वाराणस्यां नगर्याञ्च विशेषैर्राज्यकेऽपि च ।
ब्राह्मणैः क्षत्रियैस्सार्द्धं वैश्यैः शूद्रैस्तथापि च ॥
अत्रजैरन्यजैस्सार्द्धं विहारेऽत्र पर्षत्कृतात्[3] ।
अनेके पूज्यविधिभिः पूजां कृत्वा प्रतिदिने ॥
नामसङ्गीतिव्याख्यानं कारयामास पण्डितः ।
नैवापि सोऽर्थं सम्बुद्धे नामसङ्गीतिकस्य च ॥
नार्थं कर्तुं समर्थोऽभूदक्षरद्वादशस्य च ।
वीजस्य मन्त्रतन्त्राणां चतुर्वेदानां तथा[4] ॥
षट्कृत्यान्यपि[5] शास्त्राणां वीजञ्च द्वादशाक्षरम् ।
अक्षराणां व्याकर्णानां काव्यकोषयोरपि ॥
अलङ्काराणां वेद्यानां चिकित्साज्योतिषयोरपि ।
मन्त्राणामपि तन्त्राणां सर्व अक्षराणामपि ॥
इत्थं सर्व अक्षराणाञ्च उत्पन्नाद्वीजमुच्यते[6] ।
प्रज्ञापारमितादीञ्च महायानसूत्रं तथा ॥

---

१ B त्रिदोष० । २ D वचमेनन्तरं । ३ B पर्व्वकृतात् ।
४ D तथा अपि । ५ D षट्काचान्यपि ।
६ D अक्षराणां उत्पन्ना वीजमुच्यते ।

३ अवदानं[1] पुराणञ्च उत्पन्नं द्वादशाक्षरात् ।
धारणीस्तोत्रपाठादिलोकोत्तरादिभाषिकाम् ॥
अक्षरा(जा)ज्ज्ञातशास्त्राणामयं वीज प्रकथ्यते ।
अतीतैरपि बुद्धैश्च अनागतैः प्रत्युत्पन्नकैः ॥
सर्वैश्च सर्वज्ञनाथै[2]र्गूढोक्तमस्य अर्थकम् ।
इत्थं गूढं द्वादशानां अक्षराणाञ्च अर्थकम् ॥
अस्यार्थं कर्तुमशक्यात्तं प्रष्टु[3]मयमागतः ।
वाराणस्यां नगर्याञ्च विहारा[4]दिक्रमाख्यया ॥
यत्र यत्र पण्डितोऽस्ति धर्मश्रीमित्र गच्छति ।
वेदज्ञानां शास्त्रज्ञानां पौराणिकानामेकं(क) न ॥
तान्त्रज्ञानां पण्डितानामस्यार्थं न प्रजानितम् ।
दैवज्ञानां चिकित्सानां वैद्यानां सामर्थ्यं कुतः ॥
पाण्डितानाञ्च सर्वेषांमस्यार्थं न प्रजानितम् ।
तथागतैश्च सर्वज्ञैरस्यार्थं स प्रजानितम् ॥
कर्कूच्छन्दो[5]ऽपि सर्वज्ञः कालेऽस्मि नाके तिष्ठति ।
बोधिसत्वा महासत्वाः अस्य अर्थ प्रजानिकाः ॥
कर्कूच्छन्देनापि[6] सह तिष्ठन्ति नाकमण्डले ।
अद्यास्मिं काले मण्डले सभ्यलोके[7] विशेषतः ॥
अस्य अर्थं प्राजानकं[8] कश्चिदपि न विद्यते ।

---

१ A अवदारं ।　२ D सर्व्वज्ञानाथैः ।　३ A प्रष्टं ।
४ D विहारा ।　५ D क्राकुच्छन्दाऽपि ।　६ D क्राकुच्छन्देनापि ।
७ D सत्ये लोके ।　८ D प्रजानेकं ।

मया विना मण्डलेऽच अस्य अर्थं न जानकम्[१] ॥
नास्ति तस्माद्वाराणस्याम[२]चागतोऽयं भिक्षुकः ।
कर्णमुखपरम्परात् चीनदेशं गच्छनायच ॥
मां द्रष्टु[३] अर्थ श्रोतुञ्च कस्तेन आगत ह्ययं ।
तेन अहं चक्षुदृष्टा मंजुदेवं न जानितम् ॥
अतिखेदं मया दृष्ट्वा अस्मदावाश[४]मन्त्रकम् ।
इति देव्यौ वचः श्रुत्वा प्रोक्तवन्त्यौ[५] जगद्गुरुम् ॥
अक्षराणां कथं तेषां द्वादशानां अर्थं प्रभो ।
सत्प्रभो मंजुदेव त्वं सर्वविद्यानां नायकः ॥
द्वादशाक्षराणां नाथं अर्थञ्चापि पुनः कथम्[६] ।
पूर्वमपि न श्रुताञ्च अस्यापि[७] नाममात्रकम् ॥
भवतश्च प्रशादाच्च श्रूयेथां[८] तस्य नामकम् ।
तेषां अर्थं कथां नाथ द्वादशाक्षराणि कानि[९] ॥
कुत्र ग्रन्थे अस्ति नाथ शीघ्रं मह्यं दयां कुरुः ।
[१०][कियत्प्रकारं गूढार्थं कस्मात्तेषां प्रकाशितम्[११] ॥
सर्वाण्यपि च शास्त्राणि तस्मादक्ष(क्षा)राज्जातकम् ।
तत्सर्वञ्च शीघ्रं ब्रूहि आवाभ्यां प्रीतये मुदा ॥
अनुकम्पां आवाभ्याञ्च कृत्वा शीघ्रं दयां कुरुः ।]

---

१ D न जानिकं । २ A वाराणस्यादचागतोऽयं । ३ D मा द्रष्टुं । ४ A अस्मदावाशा । ५ D प्रोक्तवत्यौ । ६ D कथां । ७ D श्रुता च अस्यापि । ८ D श्रुयतां । ९ D कथं नाथ द्वादशानि क्षराणि च । १० C omits the portion bracketted. ११ D प्रकाशिकं ।

३ एवमुक्ते अपि सद्य मंजुदेव जगद्गुरुः ॥
ताभ्यां प्रोवाच स्नेहेन तस्य अर्थञ्च साम्प्रतम् ।
हे देव्यौ अपि तेषाञ्च[१] अक्षराणाञ्च अर्थकम् ॥
अतिगूढं गूढाद्गूढं युवाभ्यां प्रीतये अपि ।
अप्रकाश्य(श्य)मपि अर्थं युवयोः प्रीतयेऽपि च[२] ॥
वक्ष्यामि शृणुथ युवां रहस्यं परमार्थकम् ।
अप्रकाश्यमिदं[३] गोप्यं अन्येभ्यो देशितं नहि ॥
इति कृते युवाभ्याञ्च ददामि अर्थं निश्चयम् ।
इति सुप्रलापं कृत्वा मंजुदेवः शास्ता गुरुः[४] ॥
ताभ्यां ददाति स्नेहेन द्वादशाक्षर अर्थकम् ।
रहस्यं परमार्थञ्च गूढात्गूढतत्त्वमपि[५] ॥
अकार इकारयोर्ज्जातमेकारञ्च[६] प्रईरितम् ।
उकार अङ्कारयोर्ज्जातं वङ्कारञ्च इति स्मृतम् ॥
एकार[७] प्रज्ञारूपी च वङ्कारं पौरुषमिति ।
प्रज्ञोपायस्वरूपत्वादेवमिति प्रकथ्यते ॥
ताभ्यामेवाक्षराभ्याञ्च महायानन्त(त)थापि च ।
चतुर्वेदषच्छास्त्रञ्च भाष्यं नानापुराणकम् ॥
श्रावकमपि प्रत्येकसष्टं(ष्ट) व्याकरणं तथा ।

---

२ A प्रीतये अपि । ३ D अप्रकाश्यमिव ।
५ D कर्त्तुं गूढतत्त्वमपि । ६ D एकारञ्च

प्रज्ञापारमितादिञ्च[१] नानाशास्त्रं समुद्भूतम् ॥
अवदानं जातकञ्च मन्त्रकर्म्मादि तान्त्रकम्[२] ।
तच्छर्वञ्च पुराणञ्च एवंकाराच्छमागतम् ॥
आलिकालितन्त्राणाञ्च सूत्रस्थानं ताभ्यामपि ।
नानाहृदयमन्त्रञ्च ताभ्यां सर्वं[३] समागतम् ॥
धारणी(णीं) न्यासमन्त्रञ्च कवचं वीजमन्त्रकम् ।
एकलचदशकोटिअचराणामपि तथा ॥
एकलचदशकोटिश्लोकं वापि[४] च ग्रन्थकम् ।
तत्तस्माच्च समुद्भूतादेवङ्कारा समागतम् ॥
इत्थं सर्वगुणैर्युक्तं मेवङ्कार[५]माद्यचरम् ।
ताभ्यामपि वीजस्थानादुत्तमं द्वादशाचरम् ॥
सर्वग्रन्थमचरञ्च द्वादशाचरात्समुद्भूतम्[६] ।
अन्येऽभ्योप्यचरेभ्योऽपि[७] न द्वादशाचरोद्भूतम् ॥
एवं गुणमयैर्युक्तं द्वादशमचरमपि ।
मञ्जुश्रीदृष्टियुक्तेन नामसङ्गीति स्थापितम् ॥
मञ्जुदेवेन ताभ्याञ्च सार्द्धं रात्रिं शरापितम्[८] ।
तच्छर्व(वं) धर्म्मश्रिया च जागरणाच्छ्रुतमिति[९] ॥
श्रुत्वा तद्वचनं सर्वं रहस्यं सकलं(रं) व्रती ।
दृष्टो मञ्जुदेवोऽयं स्यादिति निश्चयतां ययौ ॥

---

१ D ०पारमितादिश्च । २ D ०तान्त्रिकम् । ३ A सर्व्वं ।
४ D चापि । ५ D एवकारं । ६ D समुद्भवं ।
७ D अन्येभ्यो रचणेभ्योऽपि । ८ D प्ररापितम् । ९ D अपि ।

३

मञ्जुदेवोऽयं सर्वज्ञः अवश्यश्च[१] भविष्यति ।
अहं कथं न जानामि मूर्खोऽहमिति निश्चयम् ॥
प्रथमं द्वौ शार्द्दूलसिंहौ हलेनर्द्धि प्रकाशितम् ।
ततः स्वपश्चादपि च सिंहशार्द्दूलान्तर्हित ॥
चीनदेशजवृत्तान्तं सर्वं चापि प्रजानित ।
स्वयम्भूनाथनाथस्य सेवकं परममपि ॥
गृहमपि सुश्रेष्ठञ्च पत्न्यौ सत्सत्यौ अत्यौ[२] ।
अहमपि च जानितं मे राज्यञ्च प्रजानितम् ॥
आवासञ्च[३] विहारञ्च स्थानञ्चापि[४] प्रजानितम् ।
मत्कार्य्यञ्च समाज्ञातमागमञ्च जानितम्[५] ॥
इत्थं सर्वञ्च ज्ञातञ्च मञ्जुदेवं[६] कथं नहि ।
अव(स्यं)श्यं देवदेवोऽयं मञ्जुदेवः स[७] सद्गुरुः ॥
मंजुश्रीरपि सर्वज्ञः सर्वज्ञानप्रकाशकः ।
तेजेनापि गुणेनापि श्रिया चापि प्रराजिता[८] ॥
वरदापि च देवी च[९] वरदाता माता इव(वः) ।
श्रिया लक्ष्म्या गुणेन केशिनीव सुसंस्थिता ॥
मोक्षदापि च देवी च मोक्षदा माता इव ।
तेजसा च गुणेनापि उपकेशिनीव स्थिता[१०] ॥

---

१ B अवश्यञ्च । २ D अत्यौरपि । ३ A D आवाशञ्च
४ D स्थानस्थापि । ५ D प्रजानितं । ६ D मञ्जुदेव ।
७ A omits सः । ८ D पराजितः । ९ A omits च ।
१० A सुसंस्थिता ।

केशिन्युपकेशिनीभ्यां मञ्जुश्रीयं जगद्गुरुः ।
त्रिसाहस्रमहालोके यद्वत्तिष्ठति नायकः ॥
तद्वदपि अयं विद्वान् वरदामोचदाभ्यां सह ।
स्थिलाच मण्डले च मञ्जुश्रीरिव संस्थितः ॥
मञ्जुश्रीरपि नाथश्च सर्वविद्यानां नायकः ।
अचर सर्वशास्त्राणां शिल्पविद्यानामपि[1] ॥
धन्वादिशरविद्यानां खड्गाद्यानां तथा ।
तुलाद्युद्धारविद्यानां रत्नलक्षणानामपि[2] ॥
हलादिकृषिविद्यानां सर्वविद्यानाञ्च तथा ।
गीतादिगाणविद्यानां मृदङ्गाद्यानां तथा ॥
कांश्यादिघण्टसुविद्यातूर्य्यादिसुखवाद्ययोः ।
एतेषां सर्वविद्यानां मञ्जुश्रीरिव संस्थितः ॥
द्वयोऽपि सत्सत्यौ शत्यौ स्त्रीविद्यानां माता इव ।
वस्त्रपट्टादिविद्यानां सूचकादिनामपि ॥
इत्यादिभिश्च अन्यैश्च नानाविद्याभि पूरितात्[3] ।
इति गुणा सुसंयुक्ता मञ्जुश्रीरिव संस्थिता ॥
इति विचिन्त्य धर्मश्रीरासनादुत्थितेन च ।
तस्मै प्रणामं विदधे अष्टाङ्गप्रणतिं मुदा ॥
उरसा मनसा दृष्ट्या वचसा शिरसा तथा ।
पद्भ्यां कराभ्यां जानूभ्यामित्यष्टाङ्गैस्सुसंयुतम् ॥

१ D ०विद्याचनामपि ।   २ A रत्नलतलक्षणानामपि ।
३ D ०विद्याभिपूरिता ।

तस्य कोष्ठस्य द्वाराच्च वहिरग्रे प्रतिष्ठति ।
इत्यष्टाङ्गैस्सुसंयुक्तः संस्थित भिक्षुः पण्डितः ॥
एकचित्तेन मनसा मृतकमिव संस्थितः ।
ऋजुकायमञ्जलिञ्च शयनमिव संस्थितः[१] ॥
अधोमुखेन संस्थित्वा तत्कोष्ठे द्वारस्य वहि ।
ततः प्रभाते उत्थाय वरदा मोक्षदापि च ॥
उद्घाटयामास तदा कपातं[२] दृष्टवन्तौ तत् ।
द्वाराग्रे निपतितं दृष्ट्वा निवर्त्तयथ[३] सत्वरम् ॥
निवेदयामास द्रुतं प्रभवे विदिताय च ।
भगवन् प्राङ्गनो द्वारेऽस्याग्रे सुप्तोस्ति किं पुनः ॥
जीवत्यथ मृतो वासौ न ज्ञायतां निरूप्यताम् ।
श्रुत्वेति वचनं तयो मञ्जुदेवोत्थितः परः ॥
समेत्य तं द्वारमूलं उद्घाटय[४] कपातकम् ।
यत्र स्थाने धर्म्मश्रीश्च मित्रं तिष्ठति भिक्षुकः ॥
तत्र गत्वा मञ्जुदेव धर्म्मश्रीमित्रमुक्तवान् ।
हे धर्म्मश्रीमित्र भिक्षो उत्थितमुत्थितमिति ॥
मञ्जुदेव जगन्नाथ धर्म्मश्रियमुवाच सः ।
हे भिक्षो धर्म्मश्रीमित्र केनार्थमत्र संस्थिता ॥
कस्यार्थञ्च कस्मात्कार्य्यादित्यन्तिष्ठसि त्वमपि ।
ततः मञ्जुदेव शास्ता धर्म्मश्रीमित्रभिक्षुकम् ॥

---

१ D संष्ठितः । २ D उद्वातयामास तदा कपातं ।
३ A निर्वर्त्तयथ । ४ A उद्वातय कपातकं ।

हस्तेन हस्तं संगृह्य उत्थानञ्च कृतमपि ।
उत्थितमुत्थितं भिक्षो किमर्थमत्र तिष्ठसि ॥
आश्वासं कारयामास मञ्जुदेव जगद्गुरुः ।
एवमुक्तोऽपि च सद्यः मञ्जुदेव जगद्गुरुः ॥
धर्म्मश्रीमित्रमामन्त्य तत्रासने निषीदति[१] ।
अथ भिक्षुः समुत्थाय अष्टाङ्गैः प्रणते नतः ॥
धर्म्मश्रीभिक्षुस्त्र नमयामास तं गुरुम् ।
दशनखाञ्जलिं वापि शिरसि संवहन्नपि[२] ॥
पञ्चप्रणामकेनापि प्रणिपत्य पुनः पुनः ।
त्रयश्चापि प्रदक्षिणां क्रमेण च कृतादपि ॥
पुनः पुनः प्रणिपत्य अञ्जलिं(लि) शिरसा वहन् ।
यत्र मञ्जुदेवनाथं सम्मुखं तत्र संस्थितम् ॥
भुवि सव्य[३]जानूं स्थाप्य अञ्जलिं शिरसा वहन् ।
नमितं कारयामास अत्यर्थं गुरुपादयोः ॥
पुनर्विज्ञापयामास मञ्जुदेवं जगद्गुरुम् ।
मञ्जुदेव जगन्नाथ न जानामि भवान् गुरो ॥
वरदामोक्षदे देव्यौ मातरावपि च तथा ।
ममापराधं क्षमध्वं देव नाथ गुरो त्वया ॥
गुरुमातरौ हि सद्य क्षमेथां क्षमेथां मयि[४] ॥

---

१ D न्यषीदति । २ A शिरसि संवनमपि, D सिरसी संवनमपि ।
३ A सव्वीं । ४ D क्षम्यथां क्षम्यथामपि ।

तत्क्षणात् मनसा वचसा कर्म्मणा च पुनः पुनः।
विज्ञापयामि नाथेषु अनुकम्पाम्मयि[१] कुरु॥
इत्थं सः प्रोवाच गुरुं मञ्जुदेवमिदं वचः।
धर्म्मश्रीनाम भिक्षुश्च शिरसा च प्रणामकात्॥
हे भगवन् मञ्जुदेव मम भाग्यं[२] प्रलभ्यते।
विशेषेण च अत्रापि नेपालमण्डलेऽपि च॥
महाचीने गमनञ्च अस्मिन्काले ममास्ति च।
भवतश्च दर्शनाच्च गमनञ्च कृतेन हि॥
मम भाग्येण च प्राप्तं तत्र भगवान् परमार्थवित्।
मया कृतं हे भगवन्ना[३]मसङ्गीतिकस्य च॥
द्वादशाक्षरमर्थञ्च मया वक्तुं न शक्यते।
अर्थोपदेशं नियतं देशयितुं प्रदुर्लभम्॥
हे मञ्जुदेव सर्वज्ञ द्वादशाक्षरमर्थकम्।
शीघ्रं शीघ्रं दयाञ्चापि मह्यं देहि पुनः पुनः॥
मह्यमर्थन्न हि[४] नाथ सर्व्वेषाञ्च हिताय च।
शीघ्रं देहि तस्यार्थञ्च भवता विल(र)म्ब मा कुरु॥
एवमुक्ते ततस्तस्मै मञ्जुदेव उवाच सः[५]।
हे धर्म्मश्रीमित्र भिक्षो त्वया उक्तञ्च पूर्वकम्॥
वाराणस्यां नगर्याञ्च विहारे विक्रमेऽपि च।

---

१ D अनुकम्पामयि। २ D भाग्य। ३ D भगवान्।
४ D नहो। ५ A स।

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ॥
अज्ञजैरन्यजैस्सार्द्धं पर्षत्कृत्वा प्रतिदिने ।
नामसङ्गीतिव्याख्यानं त्वया पूर्वं कृतमिति ॥
तत्सर्वञ्च मया श्रुतं भवतश्च मुखादपि ।
एवमुक्ते मञ्जुदेव धर्म्मश्रीमित्रभिक्षुकः ॥
मञ्जुदेवं जगन्नाथं[1] विज्ञापितं जगद्गुरुम् ।
हे भगवन् मञ्जुदेव देवदेव जगद्गुरो ॥
विज्ञापयामि भावेन भवते च मया पुनः ।
भो गुरो मञ्जुदेव त्वं मयि कृपां[2] कुरु द्रुतम् ॥
शीघ्रं शीघ्रं दयां नाथ मह्यं ददन्तु सद्गुरो ।
भो श्रीमञ्जुदेव नाथ मञ्जुश्रीप्रतिरूपकः ॥
विज्ञापयामि भवति सर्ववृत्तान्तं सद्गुरो ।
वरदामोक्षदे देव्यौ गुरुमातरौ च तथा ॥
[3]युवयोपि मया शीघ्रं विज्ञापयामि निश्चयम् ।
भवद्भिरपि नाथैश्च कुर्वन्तु च मयि कृपाम् ॥
द्वादशाक्षरस्यार्थञ्च शीघ्रं देहि मे साम्प्रतम् ।
इत्थं वचसा मनसा कर्म्मणा च तथापि च ॥
भवत्स्वपि पुनः पुनः विज्ञापयामि सत्वरम् ।
अतिखेदेन संयुक्तं अतिकष्टेन प्रापितम् ॥

१ D ०देव जगन्नाथ । २ D कृपा
३ A यूष्ययोपि, D यूयं योपि ।

अतिदुःखञ्च संप्राप्तं मां दृष्ट्वा च पुनः पुनः ।
शीघ्रं शीघ्रञ्च कुर्वन्तु कृपाञ्चापि च[१] सर्वदा ॥
द्वादशाक्षरमर्थञ्च मह्यं ददन्तु सत्प्रभो ।
एवमुक्ते ततस्तस्मै मञ्जुदेव जगद्गुरुः ॥
धर्मश्रीनाम्ने भिक्षवे शीघ्रमुवाच सो गुरुः[२] ।
हे धर्मश्रीनाम भिक्षो मम वचञ्च श्रूयताम् ॥
[३][विनाभिषेकेन कथं तदर्थमुपदिश्यते ॥
अतीतैर्दीर्घगैर्बुद्धैः सर्वज्ञैर्नाथनायकैः ।
मञ्जुश्री आदिनाथैश्च वचोक्तमतीतेऽपि च ॥
[४]भो सर्वज्ञनाथशिष्य यूयञ्च श्रूयतां मयि ।]
विनाभिषेकात्तस्यार्थं कस्मैचिद्दीयते न हि ॥
सर्वज्ञाय च बौद्धाय बोधिसत्त्वाय च तथा ।
महासत्त्वाय भिक्षवे गृहस्थाय तथापि च ॥
श्रमणाय ब्राह्मणाय क्षत्रियाय अपि तथा ।
वैश्याय च सुसत्त्वाय[५] तेभ्यो दत्तं पुनः पुनः ॥
तेभ्यश्च हीनजातिभ्यः शूद्रादिभ्यस्तथा पुनः ।
पञ्चाभिषेकप्राप्तेभ्यस्तदर्थं दीयते न हि[६] ॥
शूद्रादि हीनजातेश्च ब्राह्मणेमाकृतस्य च ।
तस्मै चापि तदर्थञ्च अतिगोप्यं दत्तं न हि ॥

---

१ A चापि । २ D सद्गुरुः ।
३ B omits the portion bracketted.
४ A भो सर्व्वज्ञानां शिष्य । ५ B सुरूप्याय । ६ D नही ।

सर्वज्ञाय बौद्धाय महासत्त्वाय च तथा ।
बोधिसत्त्वाय भिक्षवे गृहस्थश्रमणाय च ॥
ब्राह्मणाय ब्रह्मकृते ब्रह्मचर्य्यकृताय च ।
तस्मै सर्वस्मै दत्तञ्च चतुर्द्दशाभिषेककम् ॥
क्षत्रियादितद्वर्गेभ्यः दशाभिषेककमपि ।
वैश्यादिवैश्यवर्गेभ्य पञ्चाभिषेककं तथा ॥
असत्पात्रेण गुरुणा असत्पात्रशिष्याय च ।
अभिषेकं गृह्य ददौ ते नरा[1] रौरवं व्रजेत् ॥
अपात्रेण सत्पात्रेभ्यः कुपात्रेभ्य सत्पात्र(त)कैः ।
गृहीत्वाभिषेकं[2] ददौ मानवा नरकं व्रजेत् ॥
सत्पात्रेण गुरुणा सुपात्रेभ्योऽपि च मुदा ।
अभिषेकं ददौ गृह्य सुखावतीं[3] ते प्राप्यते ॥
भिक्षुभ्यः याचकेभ्योऽपि न ददौ ग्राहयेदपि ।
वैरागिकधर्म्मयुक्तात्[4] सिद्धिफलं न लभ्यते ॥
बुद्धधर्म्मकृतं येन भद्रपीथानां से(शे)वकम् ।
तस्माद्गृह्याभिषेकाच्च[5] उत्तमं सिद्धि लभ्यते ॥
शूद्रादिशूद्रवर्गेभ्यः अभिषेकं न दीयते ।
तदर्थञ्चापि न दत्तं स्तोत्रञ्च केवलं कृते ॥
नामं सङ्गीतिस्तोत्रञ्च प्रतिवर्षं मासे दिने ।

---

१ D तेन ते ।   २ A अभिषेक ।   ३ D सुखावतिम् ।
४ D ०यक्ता ।   ५ D गृह्याभिषेकोऽयम् ।

असङ्ख्य[1]फलप्राप्ताय कारयामास स्तोत्रकम् ॥
नामसङ्गीतिस्तोत्राणां पाठा(था)नामसङ्ख्यं फलम् ।
तद्द्वादशाक्षरफलसङ्ख्या[2] न विद्यते ॥
विनाभिषेकेन कथं तदर्थमुपदिश्यते ।
हे धर्म्मश्रीनामक भिक्षो विचार्य्य क्रियतामपि ॥
श्रुत्वेति वचनं तस्य मञ्जुदेवस्य सद्गुरो[3] ।
यदुक्तं वचनं श्रुत्वा धर्म्मश्रीमित्र उक्तवान् ॥
भगवन् मञ्जुदेव त्वं भवत वचनं श्रुतम् ।
इत्यञ्च अभिषेकाय न ग्रामग्रिस्मयि विद्यते ॥
द्रव्यादि वसनञ्चापि किञ्चिदपि न विद्यते ।
भिक्षुरहं वैरागी च मयि द्रव्यं न विद्यते ॥
द्रव्याज्जातं सर्ववस्तु द्रव्यं विना न किञ्चन ।
इत्थं द्रव्यं न संयुक्तं वैरागी भिक्षुक अहम् ॥
निर्धन[4] च कथं भगवन् करिष्ये गुरुस्तु सुखम् ।
मनसा कर्म्मणा वाचा दासोऽहं भगवनपि ॥
श्रुत्वेति वचनं तस्य मञ्जुदेव जगद्गुरुः ।
अत्र धनसंपत्त्योः किञ्चिदस्ति प्रयोजनम् ॥
न राज्येन न ग्रामेन न गृहेन न क्षेत्रेण च[5] ।

१ A असङ्ख्या, B असङ्ख्या । २ B द्वादशाक्षराणाञ्च फलसङ्ख्या, D ०फलं तस्य सङ्ख्या । ३ D ०देव स सद्गुरो । ४ D निर्धनत्वम् । ५ A क्षेत्रा च ।

न धनेन जनेनापि न दासदासिनापि च[1] ॥
गवा न न अश्वेन च[2] हस्तिना च न कन्यया ।
अन्येन वस्तुना नापि किञ्चिन्मे न प्रयोजनम् ॥
शिष्यं मे परमं पुत्रं पुत्रपौत्र्या किं कृतम्[3] ।
शिष्यमेव च मे पुत्रं पौत्री चापि च शिष्यकम् ॥
यस्य सुविदुषस्यापि शिष्यमेव परं कृतम् ।
शिष्येण विना यस्यापि[4] पाण्डितं किं कृतं भवे ॥
राज्यं देशं ग्रामं गृहं क्षेत्रं धनं जनमपि ।
दासीं[5] दासं कर्म्मकरं पुत्रं पुत्रीं तथापि च ॥
गावं हस्तिं[6] तथा कन्यां अश्वञ्च सर्ववस्तुकम् ।
तस्माच्छ्रेष्ठं महच्छिष्यं शिष्यमेव प्रशस्यते ॥
सर्वज्ञनाथनाथस्य शिष्यमेव प्रशस्यते ।
मञ्जुश्रीगुरो नाथस्य तथैव च प्रशस्यते ॥
पितामह सद्ब्रह्मणः शिष्यं वापि[7] प्रशस्यते ।
शिष्यमेव प्रधानं स्या सर्वेषां पण्डितामपि ॥
शिष्याच्छ्रैवं समुद्भूतं रत्नादिसर्वद्रव्यकम् ।
राज्यं गृहं सुद्वीपञ्च यत्न[8]दासादिकमपि[9] ॥

---

१ D न दासी दासनापि च । २ B omits च ।
३ D शिष्यं मे परमं पुत्रपौत्र्या च किं कृतं मया ।
४ D शिष्येयं विनयस्यापि । ५ D दाशिं । ६ D गावहस्ति ।
७ D चापि । ८ B पत्नी० । ९ D दाशादीकमपि ।

३४

तस्माच्छर्वप्रकारेण शिष्यं विना न शोभते[१] ।
सर्वभुवनेषु गुरुं नक्षत्रं विना शौरिव[२] ॥
धर्मश्रीमित्र ते प्रीत्या दास्येऽहमभिषेककम् ।
इत्युक्त्वास्य परं धर्मधातुवागीश्वरस्य च ॥
लक्षणं रङ्गचूर्णञ्च तत्सर्वं देशितं[३] तदा ।
धर्मश्रीमित्रभिक्षवे मण्डललक्षणमिति ॥
हे धर्मश्रीनामभिक्षो मण्डलसूत्रचित्रकम् ।
रङ्गिकं लक्षणविधिं कथयामि सादरात् शृणु[४] ॥
वितस्तिहस्तप्रमाणं एकद्विशतकं तथा ।
सहस्रञ्च प्रमाणेन अष्टवर्गेण[५] संयुतम् ॥
उत्तमाङ्गुलैरुत्तमं मध्यमैर्मध्यमं फलम् ।
अधमैरधमं वापि अङ्गुलहस्तस्य फलम् ॥
नीलमीन्द्रनीलचूर्णं श्वेतञ्च वज्र[६]चूर्णकम् ।
पीतं जाम्बूनदचूर्णं रक्तन्तु पद्मरागकम् ॥
श्यामं हरिन्मणिचूर्णं नानारत्नचूर्णमिति ।
तैरपि रङ्गिकं कृत्वा मण्डलमुत्तमं फलम् ॥
नीलं पीतं श्वेतं रक्तं हरितं पुष्पचूर्णकम् ।
एतैश्च मण्डलं कृत्वा मध्यमं लभ्यते फलम् ॥
तण्डुलचूर्णरङ्गैश्च शिलारङ्गिकचूर्णकैः ।
एतेभि मण्डलं कृत्वा स्वल्पफलं प्रलभ्यते ॥

---

१ A B शोभ्यते । २ A शोविव । ३ D देशिकं ।
४ D सादरा शृणु । ५ D ०वर्गेण । ६ D वज्र० ।

पटञ्च मारसिकं वापि गुरुमुखोऽथ वापि हि ।
तत्वतो ग्रन्थतः वापि मध्यमं मण्डलं फलम् ॥
षोड़शद्वारसंयुक्तं मण्डललक्षणयुतम्[१] ।
धर्म्मधातुवागीश्वरमण्डलं स्फालितं गुरुः ॥
इति मानसिकं कृत्वा मण्डलं स्फालितं गुरुः ।
मण्डलं स्फालयनेव पूजयामास तत्वतः ॥
यस्माद् यत्र मानसिकं मण्डलं कारितं गुरुः ।
तस्मात्तत्र नेपालजैर्मञ्जुदेव ख्यापितम्[२] ॥
पूष्पैर्धूपैश्च गन्धैश्च नानानैवेद्यलेह्यकैः ।
पेयकैर्मद्यमांसैश्च पूजितं मण्डलं गुरुः ॥
मञ्जुदेव जगन्नाथः पत्नीभ्यां सह पूजितम् ।
मण्डलस्य विधियुक्तैः पूजयामास मण्डलम् ॥
तत्क्षणं विधिभिश्चैनं तत्वतः सोऽभिषिक्तवान् ।
प्रथमं मण्डलञ्चापि दर्शनञ्च कृतं गुरुः ॥
पश्चाच्चतुर्द्दशा वाप्यभिषेकं भिक्षवे ददौ ।
अनन्तरं ददौ तस्मै अक्षरद्वादशस्य तु ॥
भो भिक्षो श्रूयतां तावद्द्वादशाक्षर अर्थकम् ।
अर्थयुक्त्या मया श्रुत्वा जन्मजन्मान्तरादपि ॥
अतीतैरनागतैर्बुद्धैः कथितं तत्वयुक्तिकैः ।
तस्मात्पूर्वसकाशाच्च मयापि कथिता शृण ॥

१ D ०लक्षणैर्युतं । २ D प्रख्यापितं

पूर्वमपि च सर्वज्ञैः कथितं च तथा श्रुतम्[१] ।
मया श्रुतं शृणु लक्ष मञ्जुश्रियः प्रसादतः ॥
मयापि च न ज्ञातञ्च शृणु धर्म्मश्रीमित्रक ।
मञ्जुश्रियः प्रसा(शा)दाच्च शृणोमि अस्य अर्थकम् ॥
द्वादशाक्षर अर्थञ्च गूढ़ाद् गूढ़तर(त्त)मपि ।
अतीतैरपि बुद्धैश्च सर्वैश्च तत्ववादिकैः ॥
अतिगैर्दीर्घातिगैश्च[२] सर्वज्ञ नाथनाथकैः ।
मञ्जुश्रियः[३] प्रसादाच्च तच्चैवं कथितं पुरा ॥
जिनैरपि सर्वज्ञैश्च कथितं मया तथाश्रुतम् ।
मत्कर्णपरम्परया धर्म्मश्रीमित्र श्रूयताम् ॥
सर्वज्ञै[४] भो धर्म्मश्रीमित्र भिक्षो द्वादशाक्षर अर्थकम् ।
अकारादिद्वादशानामर्थ[५]ञ्चापि पुनः पुनः ॥
इकाराच्च [६]अकाराच्च सर्वाक्षरग्रन्थजातम् ।
अनयोः सुसंयोगात्तस्माद्द्वादशाक्षरजातम् ॥
अवदानं पुराणञ्च महायानं तन्त्रान्तरम् ।
तत्सर्वञ्च समुद्भूतं द्वादशाक्षराच्चापि अक्षरात् ॥
चतुर्वेदं[७] षट्शास्त्रञ्च नैमित्तिकं[८] दैवज्ञकम् ।
वैद्यादिचिकित्सा चापि तस्मात् सर्वं समुद्भूतम् ॥

१ A कथितं यथा तथा श्रुतं । २ D अतितगैदीर्घातिगै । ३ D मञ्जुश्रीय । ४ C omits सर्व्वज्ञै । ५ D आर्थं । ६ B omits अकाराच्च । ७ D चतुर्वेद । ८ A दैमितिकं ।

अक्षरं गद्यं पद्यञ्च देशभाषजग्रन्थकम्।
तत्सर्वञ्चापि तस्माच्च समुद्भूतं[१] पूर्वकम्॥
रहस्य परमतन्त्र मन्त्र[२] उद्धारणमपि।
अक्षराज्जातं सर्वञ्च इति होमादिकमपि॥
बौद्धानां वापि शैवानां वैष्णवानां तथापि च।
योगिणां तान्त्रिणाञ्चापि ग्रन्थं तस्मात्समुद्भूतम्॥
आरापञ्च प्रला(रा)पञ्च सप्रराप अप्ररापयोः[३]।
संस्कृतादिभाषजञ्च तत्सर्वं तत्समुद्भूतम्॥
कृमिकीटस्य[४] भाषाञ्च पशोस्च तिर्य्यकस्य च।
देवाद्यसुरनागानां भाषाग्रन्थञ्च तद्भूतम्॥
किन्नराणां गन्धर्वाणामप्सरा यक्षयोऽपि च[५]।
मानुष्यादीनाञ्च सर्वेषां भाषा तस्मात्क्षरोद्भूतम्[६]॥
[७][प्रज्ञापारमितादिनवषड़यान[८]सूत्रकम्।
नवमञ्च महायानं तस्मात्सर्वं समुद्भूतम्॥
एवं गुणमयं युक्तं गूढ़ागूढतरमपि।
रेफाक्षरस्यार्थञ्च तस्माद्दत्तं जगद्गुरुः॥]
भोऽपि धर्म्मश्रि च भिक्षो महागूढ तस्य अर्थकम्।
शरीराभ्यन्तरे वाह्ये भुवौ च सत्समुद्भूतम्॥

---

१ D समुद्भूत। २ B omits मन्त्र। ३ D सुप्रलाप अप्रलापयो।
४ D ०कीतस्य। ५ B अप्सराणां। ६ B क्षराद्भूतं,
D त्तस्माच्चरोद्भूतं। ७ C omits the portion bracketted.
८ A षड्यान०।

३४६ यथाभ्यन्तरे तन्त्रे च पौराणे बाह्यकर्म्मणि ।
संवृत्तौ परमार्थे च तस्मात्सर्वं समुद्भूतम् ॥
एवं गुणमयैर्युक्तं रहस्याद्रहस्यमपि ।
आगमादागमैर्युक्तं अपात्रेषु न दीयते ॥
यथा यद्वत्पत्नीभ्याञ्च अर्थं दीयते सद्गुरुः ।
तथा तद्वत् भिक्षवेऽपि द्वादशाक्षर अर्थकम् ॥
अर्थं ददाति विज्ञोऽसौ करुणाविष्टमानसः ।
प्राप्याभिषेकं(क) गुह्यार्थमक्षरद्वादशस्य च ॥
धर्म्मश्रीमित्र उदितः प्रसादपूरको गुणः ।
हृष्टतुष्टतस्त्र प्राप्य वाञ्छितार्थधनोच्छ्रयम् ॥
मञ्जुश्रियञ्च शास्तारं यथाशक्ति प्रपूजितम् ।
पञ्चोपचारकैः पूज्यैर्दक्षिणाशक्तिभिरपि ॥
नमस्कृत्य ददौ तस्मै स्वात्मानं सुश्रूषाय वै ।
कायवाक्चित्तयुक्तेन मञ्जुदेवाय धर्म्मश्रीः ॥
भो गुरो मञ्जुदेव त्वमुवाच सद्गुरुं मुदा ।
पुनः पुनः नमस्कृत्वा निश्चयं स्वात्मानं ददौ ॥
भगवन्सद्गुरो नाथ मम किञ्चिद्द्रव्यं न हि ।
ढौषभ[1]योग्यवस्तुञ्च स्वशरीरं द्रव्यन्नहि ॥
यद्वस्तु मम हस्तेऽस्ति शरीरं ढौषयाम्यहम्[2] ।
कायवाक्चित्त एकेन ददामि गृह्यतां त्वया ॥

---

१ C ढौकन । २ D यद्वस्तुं मम हस्तेऽति शरीरं ढौकयाम्यहं

अथोवाच गुरुः शास्ता धर्मश्रीमित्राय सुवचः ।
एकचित्ते यद्वत्तं गृहामि च तद्भावकम्[१] ॥
यथापूर्वं वाराणस्यां त्वया पर्षत्कृतादपि ।
तथा च तस्मिन् कालेऽत्र आगमिष्यामि निश्चयम् ॥
[२][धर्मश्रीनामगीतिं(ति) यत्रार्थं क्रियते त्वया ।
आगतः स्वाम[३]हन्त्वत्र तच्छ्रोतुं तव सम्मुखात् ॥
इत्युवाच निशम्य स वाक्य मञ्जुश्रियः[४] गुरोः ।]
धर्मश्रीनामकभिक्षुः तस्यागममवश्यकम्[५] ॥
हे भगवन्मञ्जुदेव भवतागमनं कथम् ।
केन चिह्नेन ज्ञायते[६] तत्सर्वं ब्रूहि सत्प्रभो ॥
सर्वज्ञनायनाथ त्वं मञ्जुदेवाख्यसद्गुरुः ।
महर्द्धिकस्त्वं भगवन् ज्ञास्य[७]त्वमागमं कथम् ॥
भवानपि च सर्वज्ञमुख्यो[८] हि परममपि ।
तस्मात्सर्वप्रकारेण शीघ्रं ब्रूहि तवागमम् ॥
हे गुरो मञ्जुदेव त्वं वाचं देहि मह्यं द्रुतम् ।
मया काश्यां नगर्याञ्च विहारे विक्रमे[९] पुनः ॥
नामसङ्गीतिव्याख्यानं मया कृतस्मिन् कालके ।
भवतस्त्र कथं नाथ आगमनं ज्ञायतेऽप्यहम् ॥

---

१ D त्वद्भावक° ।   २ C omits the portion bracketted.
३ D आगमिष्याम्यहं ।   ४ D निशंम्य.........मञ्जुश्रियं ।
५ D गमनवश्यकं ।   ६ D ज्ञायन्ते ।   ७ B ज्ञास्ये ।
८ A मुखे, D मुखौ ।   ९ A D विक्रम्ये ।

३७६

केन केन च रूपेण प्रकारकेन च अपि ॥
केन चिह्नेन ज्ञानेन सत्सर्वं ब्रूहि सत्प्रभो ।
एवमुक्तेऽपि च सद्य मञ्जुदेव जगद्गुरुः ॥
धर्मश्रीमित्रभिक्षुञ्च प्रोवाच जगदीश्वरः ।
हे धर्मश्रीमित्र भिक्षो ममागमनचिह्नकम् ॥
त्वं या ज्ञायसे भावेन चिह्नेनापि विशेषतः ।
यस्य च पुरुषस्यापि हस्ते तिष्ठति उत्पलम् ॥
स एवं पुरुषोऽहञ्च त्वया निश्चयं ज्ञास्यताम् ।
देवरूपञ्च वा अन्यं मानूष्यं यक्षकिन्नरम् ॥
रूपञ्च कुरूपञ्च सर्वतन्त्वं माञ्च लक्ष्मसिं ।
एवमुक्तेऽपि च सद्यः धर्मश्रीनाम भिक्षुकः ॥
महात्मासौ पण्डित धर्मश्रीमित्रः[1] प्रमुदितस्ततः ।
सौमनस्यं परं जातं शास्तारन्तं प्रणम्य च ॥
कृत्वा प्रदक्षिणां त्रीणि सादरान्नम्य सुन्दरः ।
पुष्पैर्धूपैश्च गन्धैश्च नैवेद्यैर्दीपकैरपि ॥
पञ्चोपचारविधिभिः पूजयामास सद्गुरुम् ।
पञ्चाष्टाङ्गेन योगेण प्रणिपत्य पादाब्जके ॥
नमयामास भावेन मञ्जुदेवं जगद्गुरुम् ।
एक द्वौ त्रयवारञ्च प्रदक्षिणाकृतेन च ॥
मञ्जुश्रियं जगन्नाथं धर्मश्रीरुवाच पण्डितः ।

---

१ B धर्म्मश्री मित्र पण्डित ।

भो गुरो[1] मञ्जुदेव त्वं क्षमस्व मेऽपराधकम् ।
यत्सर्वं मम पापञ्च तत्सर्वं क्षमस्व गुरो ॥
हे नाथौ गुरुमातरौ विज्ञापयाम्यहं त्वयि ।
भवतः पादकमले वन्दयामि पुनः पुनः ॥
मञ्जुदेवं(व) जगन्नाथं पत्नीभ्यां सह संस्थितम् ।
पुनः प्रदक्षिणां कृत्वा नमयामास च पुनः ॥
पुन र्विज्ञापयामास धर्मश्रीमित्रभिक्षुकम्[2] ।
मञ्जुदेवं(व) जगन्नाथं प्रणिपत्य च आदरात् ॥
मञ्जुदेव जगन्नाथ मह्यमाज्ञां प्रदीयताम् ।
पुन विक्रमशिरसि[3] वाराणस्यां गमनाय च ॥
यथा उक्तं मया पूर्वमस्मिन्विहारकेऽपि च ।
नामसङ्गीतिव्याख्यानं देशनाय च सद्गुरो ॥
एवमुक्तेऽपि च सद्यः मञ्जुदेव जगद्गुरुः[4] ।
आज्ञा दिदेश भावेन तस्मै धर्मश्रियेऽपि च ॥
भो धर्मश्रीनाम भिक्षु ददामि तवागमनं ।
यथा त्वमत्र प्रायात तथा शीघ्रं प्रगच्छसि ॥
पूर्वं च नामसङ्गीति(तिं) व्याख्यानं क्रियतां त्वया ।
तथा तद्व्याख्यानञ्च क्रियतां विक्रमेऽपि च ॥
इत्यमुक्त वच श्रुत्वा धर्मश्रीमित्रपण्डितः ।

---

१ D गुरुं ।
२ B ०भिक्षुकः, D ०भिक्षुक ।
३ D पुन विक्रमसीलस्य ।
४ D जगद्गुरो ।

तस्माद्गुरोः सकाशाच्च प्रस्थानं[1] गमनाय च ॥
कारयामास शीघ्रेण धर्मश्रीमित्रः पण्डितः ।
मञ्जुदेवप्रसादाच्च स्वदेशगमनाय च ॥
तस्यान्तिकाच्च प्रकान्त[2] व्याघुभ्य[3] पुनरागतः ।
विहारे विक्रमाख्ये च व्याख्यानं(न) विदधे पुनः ॥
वाराणस्यामपि यत्र विहारे विक्रमे वरे ।
पूर्ववन्नामसङ्गीति(तिं) व्याख्यानं सञ्चकार सः ॥
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ।
अन्त्रजैरन्यजैस्सार्द्धं पर्षत्कृत्वा च पूर्ववत् ॥
भिक्षुभिर्भिक्षुणीभिश्च उपाशकैरुपाशिकैः ।
सर्वैः शिष्यगणै[4]स्सार्द्धं व्याख्यानं सः पुनः कृतः[5] ॥
नामसङ्गीतिकस्यापि द्वादशअक्षरस्य च ।
सत्पात्रेभ्यश्च शिष्येभ्यः गौरवार्थं ददौ मुदा ॥
मञ्जुदेव यथापूर्वं मुक्तं पात्रमपात्रकम् ।
तत्सर्वं सुपरिच्छित्वा सुपात्रेऽर्थं ददौ मुदा ॥
यत्र यस्मिन् दिने[6] कृते धर्मश्रीमित्र पण्डितः ।
नामसङ्गीतिव्याख्यानं पर्षदैश्च परिवृतः ॥
एकस्मिन् च दिने तत्र मञ्जुदेव च प्राप्तवान्[7] ।
भक्तिजिज्ञासनार्थञ्च धर्मश्रीमित्रकस्य च ॥

---

१ D गुरो ... प्रस्थान । २ D प्राक्रान्त । ३ B व्याघुद्य ।
४ D सर्व्वशिष्यगणैः । ५ B कृतं । ६ D दिनं ।
७ A सम्प्राप्तवान् ।

यष्टिशरीरं निर्म्माय उत्पलैर्मच्चिकान् चिपन्[1] ।
श्रत्यस्थानात्तत्सभामध्ये मञ्जुदेवस्य ईश्वरः ॥
यत्र धर्म्मश्रीमित्रस्य[2] पर्षदैस्य परिवृतः ।
नामसङ्गीतिव्याख्यानं कृतं सस्तत्र प्राप्तवान् ॥
दृष्ट्वा तमुत्पन्नं तेन पश्य वैमुख्यमाययौ ।
धर्म्मश्रीमित्रभिचुणा ज्ञातमागतं सद्गुरुम् ॥
धर्म्मश्रीमित्र नोचेयात्[3] श्रुत्वा तच्चोत्थिता जनाः ।
अस्मिन्दिने विशेषेण स्वल्पव्याख्यानकं कृतम् ॥
ब्राह्मणाः चत्रिया वैश्याः शूद्राश्च अन्यजातयः ।
तस्मात् स्थानात् स्वस्वगृहं प्रजगमुः सर्वजनाः[4] ॥
गते जने समुत्थाय धर्म्मश्रीनामपण्डितः ।
नमस्कर्त्तुं समागत्य मञ्जुश्रीविमुखोऽभवत् ॥
आश्रयं तस्य विज्ञाय धर्म्मश्रीमित्र उक्तवान् ।
मञ्जुदेव जगन्नाथ सर्वः सर्वविद्गुरो[5] ॥
[6][न दृष्टन्त्वं[7] मया देव मिथ्या त्वं तेन उच्यते ।
इत्युक्ते तत्चणात्तस्य धर्म्मश्रीमित्रकस्य च ॥
मञ्जुश्रीजगन्नाथस्य कृतं यत्र[8] प्रणामकम् ।
तस्मात्तत्र स्वचचुणी पतितं पादलाञ्छने ॥]

---

१ D मच्चिकोत्चिप्यन् । २ D °मित्रश्री । ३ D नोचेया ।
४ D सर्व्वे जनाः । ५ D सर्व्वज्ञः सर्व्वविद्गुरुः ।
६ C omits the portion bracketted. ७ D न दृष्ठ त्वं ।
८ D यत् ।

यस्मिं येन चक्षुणी च मुखाच्च पतितं भवेत्[1] ।
तस्मिन्तेन धर्म्मश्रीश्च अत्यर्थं रुदितं कृतम् ॥
मूर्खाणां परमं मूर्खं मन्दानां परममपि ।
कथं मया अज्ञानाच्च मिथ्यां[2] सद्गुरौ उच्यते ॥
पादयो मञ्जुदेवस्य यत्र लाञ्छनं(न) तिष्ठति ।
चक्षुणी(नि) पतिते भूमौ रुदन्तस्मै निवेदयेत् ॥
भगवन् गुरो मञ्जुदेव मया मिथ्यामुदिरितम्[3] ।
अज्ञानाद्यत्कृतं कर्म्म तत् क्षमस्व गुरो मम ॥
भव प्रसन्नचित्तोऽद्य मञ्जुदेव जगद्गुरो ।
मयि कृपां कृतं पूर्वं तथा करोतु साम्प्रतम् ॥
भो गुरो मञ्जुदेव[4] मया कृतञ्च पापकम्[5] ।
मनसा वाचा[6] कर्म्मणा पापञ्च दारुणमपि ॥
हे सद्गुरो मया कृतं भवता पापकमपि ।
तत् क्षमस्व मया मूर्खेण च कृतं भवति च ॥
अन्धेन परमं प्राप्तं त्रैलोक्येषु विशेषतः ।
गुरुद्रोही चक्षुण्यन्धी मूर्खोऽहं परममपि ॥
हस्तपादाद्यवयवैः शरीरेण च किं मम ।
चक्षुणी मे विना युक्ते जीवेनाच्च किं क्रियते ॥
जीवादहं मृतो गुरो मम जीवेन किं कृतम् ।

१ D यस्मिंश्च न चक्षुणी च मुखाच्च पतितं भवत् ।
२ D अज्ञानाच्च मिथ्या । ३ A उदितं । ४ D मञ्जुदेवस्य ।
५ A पापकः । ६ D वचसा ।

मृते मेऽद्य परं जातं भवतश्च प्रसा(शा)दतः ॥
हे गुरो नाथनाथ त्वं देहि फलं(ल) मृताय च ।
तस्मात् पापात्परलोके फलं किं किं भविष्यति ॥
यत्कृतं दारुणं पापमद्य त्वयि मया चणम् ।
सरागद्वेषमोहेन चित्तमूढेन च मया ॥
मनसा वचसा वापि कर्म्मणा च कृतं मया ।
तत्चमस्व चमस्व नाथ[1] प्राञ्जलिभिः सहस्रकम् ॥
विललापमित्थं कृत्वा मञ्जुदेवे जगद्गुरौ ।
धर्म्मश्रीनामकभिचुर्विनतिं कृतवानपि ॥
एक दश शतं लचं पञ्चप्रणामकैरपि ।
पुनः पुनः नमस्कृत्वा अत्यर्थं विनतिं कृतम् ॥
अष्टाङ्गप्रणामकैश्च नमस्कृत्वा पुनः पुनः ।
विनतिं विलापेन च कृतन्तेन मुहुर्मुहुः ॥
एवमुक्तेऽपि च सद्यः मञ्जुदेव जगद्गुरुः ।
अत्यर्थं विप्रलापञ्च धर्म्मश्रिया कृतादपि ॥
मनसा न सहिष्णुना करुणाहृष्टमानसम् ।
धर्म्मश्रीनामकं भिचुं प्रोवाच शीघ्रकं गुरुः(रु) ॥
हे धर्म्मश्रीमित्रभिचो मालूह्यसि मालूह्यसि ।
स्वकर्म्मविधिवशाच्च साम्प्रतं प्राप्स्यसि फलम् ॥
कर्म्माणि न प्रणश्यन्ति कल्पकोटिशतैरपि ।

---

१ D तत्चमस्व च्चमं नाथ ।

शामग्निं प्राप्य काले च फलन्ति देहिनां खलु ॥
पृथिवी आपतेजवायुराकाशैर्लभ्यते फलम् ।
वाह्येन नापि लभ्यते अन्तरेण न लभ्यते ॥
येन येनावयवेन यत्कृतं पापकम्भवे ।
तत्सर्वमवयवेन निश्चयं भोग्यते फलम् ॥
पञ्चेन्द्रियेन येनापि पापपुण्य करोति हि ।
तेन तेनेन्द्रियेणापि तद्भोग्यं लभ्यते फलम् ॥
नगरे वा वने वापि समुद्रे पर्वतेऽपि वा ।
यत्कृतं जन्तुना येन तद्भोक्तव्यं न संशयः ॥
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा [1]मन्ये दैवमात्रातिरिच्यते ॥
यद्यत्पुरातनं कर्म्म तत्तदेवेह भुज्यते ।
कारणं दैवमेवात्र नान्योऽस्त्यौपाधिको जनः ॥
गर्भे वा बालभावे वा यौवने वापि वार्द्धके ।
यद्यत् शरीर(रं)कृत् कर्म्म तत्तदेवेह भुज्यते ॥
मारोदी पाण्डित भिक्षो श्रियमन्यां गमिष्यसि ।
मा मुञ्चाश्रु माहावुद्धे मा मुञ्चाश्रु धर्म्माश्रि च ॥
तथागतैश्च सर्वज्ञैः[2] स्वकर्म्माल्लभ्यते फलम् ।
येन कर्म्म कृतं येऽपि तेऽपि तल्लभ्यते फलम् ॥
ब्रह्मविष्णुशिवशक्रैः स्वकर्म्म लभ्यते फलम् ।

१ D अन्यै । २ A सार्व्वज्ञैः

बुद्धधर्म्मसङ्घैस्तत्त्वै[1]स्तथैव लभ्यते फलम् ॥
देवदानवगन्धर्वै[2]रित्थं फलं प्रलभ्यते ।
मानुष्येण च सत्त्वेन कथं न लभ्यते फलम् ॥
अवश्यं स्वकृतं कर्म्म अवश्यं स्वेन भोज्यते ।
स्वेनापि कृतं कर्म्मनः[3] अन्येभ्यः भोजनं न हि ॥
अन्यैश्च कृतकर्म्मणः स्वयं भोग्यं कृत न हि ।
इति मत्वा च मानुष्याः सदा शुभकर्म्म कृतम्[4] ॥
अशुभं संपरित्यज्य शुभञ्च केवलं कृतम् ।
स्वकर्म्मफलञ्च त्वया न प्रनस्यति यत्नतः ॥
तथापि ज्ञानदृष्ट्या त्वं व्यवलोकय निश्चयम् ।
[5][इत्युक्त्वान्तर्दधे शास्ता तत्र तत्क्षणमेव च ॥
तस्मात्काश्याः स्वयं पश्चा[6]प्रत्यागतो जगद्गुरुः ।
यत्र पत्न्यौ च आस्ताञ्च मञ्जुश्रीपर्वतेऽपि च ॥
मञ्जुश्रीश्चापि शास्ता च स्वगृहं तत्र चागतः ।]
ततः प्रभृतिस्तन्नाम ज्ञानश्रीरिति सर्वतः ॥
तस्माद्धेतोश्च मैत्रेय ततः प्रभृतिरुच्यते ।
मञ्जुदेवप्रसादाच्च पुनर्व्याख्यानं कृतं त्वया ॥
नामसङ्गीतिव्याख्यानं सम्पूर्णं भिक्षुणा[7] कृतम् ।
अथ पत्न्यौ सत्सत्यौ च स्वभर्त्तुः पादपङ्कज ॥

---

१ D बुद्धधर्म्मसङ्घसत्त्वैः । २ D ०गन्धर्व्वै । ३ D कर्म्मान ।
४ D कर्म्म शुभ कृतम् । ५ C omits the portion bracketted.
६ D पश्चात् । ७ D भिक्षुणाम् ।

नमस्कृत्वा प्रमोदेन गृहे विशति नायकम् ।
वार्त्ताकुशलं कुशलं तत्सर्वं श्रूयते च तौ ॥
मंजुश्रियापि स्ववृत्ति सर्वञ्च कथितं मुदा ।
एवं ताभ्यां सह तेन संस्थितं तत्र पर्वते ॥
स्वयम्भुवे दीर्घकालं से(शे)वापरेण संस्थितम् ।
ततः प्रभृति लोकैश्च अत्रजैरन्यजैरपि ॥
ब्रह्मक्षत्रियैर्वैश्यैश्च[1] शूद्रादि अन्यजातिभिः ।
मंजुदेवेन स्थापिते मंजुश्रीपर्वतेऽपि च ॥
धर्मधातु वागीश्वरं मंजुश्रियञ्च पूजितम् ।
पुष्पधूपादिभिः पूज्यैर्गन्धनैवेद्यदीपकैः ॥
नाना पूज्यविधिभिश्च मंजुश्रियं प्रपूजितम् ।
ब्रह्मणा ब्रह्मलोकैश्च विष्णुणा वैष्णवैः[2] सह ॥
महेश्वरेण स्वगणैः सर्वकालं प्रपूजितम् ।
इन्द्रेण त्रिदशैस्सार्द्धं चतुराजैः दैत्यैरपि ॥
स्वस्वगणैः परिवृत्य पूजितं तत्र मण्डले[3] ।
अद्यास्मिमपि काले च पूजितं[4] मानवादिभिः ॥
मैत्रेय श्रूयतां पौर्व[5]मस्मिन्काले च दृश्यताम् ।
भूते भविष्ये वर्त्ते च पूजितं ये या मानवाः ॥
सर्वं विद्यासिद्धिश्च लभ्यतेऽपि न संशयः ।
माघशुक्ले पञ्चम्याञ्च पूष्येऽपि गुरुवासरे ॥

---

१ D ब्रह्मक्षत्रियवैश्यैश्च । २ D वैष्णवी । ३ D मण्डले ।
४ B प्रपूजितम् । ५ D पूर्व्वं ।

मंजुश्रिय भिक्षोः कृते दिने पूजा महत्फलम्।
त्रयसंयोगे उत्तमं द्वौ योगे मध्यमं फलम् ॥
एकयोगे स्वल्पफलं तथाफलं प्रलभ्यते ॥
मनुजादिमानवस्य विद्यासिद्धिश्च प्राप्तये।
दिने दिने सर्वकालं गत्वा तस्मै प्रपूजितम् ॥
इत्थं गुणमये चैत्ये मंजुश्रीकृतमण्डले।
वागीश्वरे धर्मधातौ सर्वकालं प्रपूजितम् ॥
अक्षरादिशास्त्रविद्यां धन्वादिशरविद्यकाम्।
शिल्पतुलादिउद्धारं कृषिविद्याश्च भाषजाम् ॥
मानव्य मानवा ये या नानाविद्यां प्रईच्छिताः[1]।
मंजुश्रियं जगन्नाथं सदा मुदा प्रपूजितम् ॥
कनकस्य मुनेर्धर्मधातुवागीश्वरोऽभवत्।
इति श्रीशम्भुनाथस्य कथितं सर्वलोकजैः ॥
गृहे सुशोभितवरे सुविलासयुक्ते
त्रैलोक्यदुर्लभप्रदे सुरलोकपूज्ये[2]।
वागीश्वरस्य महिमां प्रश्नुता[3]जना ये
सन्तिष्ठन्ते शुभगुणे सु(स)गुणेन युक्ते ॥

इति श्रीमति बृहत्स्वयम्भूपुराणे गोशृङ्गपर्वते स्वयम्भूचैत्यभट्टारकोद्देशे धर्मधातुवागीश्वरप्रवर्त्तनो नाम षष्ठमोऽध्यायः ॥

१ D प्रइच्छिताः। २ D ०पदैः ... पूज्यै। ३ D प्रश्नुताः।

# सप्तमोऽध्यायः ।

अथोवाच महासत्त्वः मैत्रेय जगतां पतिम् ।
अयं श्रीभगवान्धर्मधातुवागीश्वरः कदा ॥
केनात्तर्द्धापितं तन्मे किमर्थमिति कथ्यताम् ।
कस्माच्च कारणाद्वापि कस्मिं गुरौ[१] सर्वज्ञके ॥
केन च शासिना चापि गुरुणा सर्वज्ञेन च ।
केन च कारणेनापि केनेत्थं चैत्य संस्कृतं ।
कस्य गुरोश्च कालेऽपि सर्वज्ञस्य च कस्य वै ।
इत्थं चैत्या कृतेनैव स्थापितं केन शासिना ॥
कस्मिं गुरौ च कालेऽपि केन केन इत्थं कृतम् ।
सर्वरत्नेन खचितं सुवर्णेनापि संस्कृतम् ॥
सुवर्णगलसंयुक्तं स्वर्णपट्टैर्वि(वि)भूषितम् ।
सुवर्णचक्रावलिभि(भिः) विश्वमणिसुसंयुतम् ॥
सुवर्णच्छत्रसंनद्धं सुवर्णकलशध्वजम् ।
पताकैर्विविधैर्युक्तं कलशं अतिश्वेतकम् ॥
चतुर्तथागतैश्चापि चतुर्दिक्षु सुशोभित(तं) ।
[२][चतुर्देविभिश्चापि विदिक्चतुर्षु शोभितम् ॥]

अपि च ॥

मध्ये[३] वैरोचनश्चापि पूर्वे अक्षोभ्यकर्मपि ।

---

१ D गुरुं । २ D omits the portion bracketted. ३ D मध्य ।

दक्षिणे रत्नसम्भवं अमिताभं पश्चिमे अपि ॥
उत्तरे मोघसिद्धि च[1] इति पञ्च तथागतान् ।
[2][केन च शासिना अत्र इत्थं नैव प्रथापितम् ॥]
इशाने रोचनादेवीं अग्न्यावपि च मामकी[3] ।
नैऋत्य पाण्डला देविं तारां च वायुवे अपि[4] ॥
नानापट्टवितानैश्च श्वेतच्छत्रं विभूषितम् ।
श्वेतचामलै(रै)स्संयुक्तं अनेकैर्घण्टकैरपि ॥
ध्वजैश्ची(ची)नपट्टजैश्च दिगमाराभिः[5] पलम्बिते ।
अनेकैः(गैः) पट्टकै युक्तैः मङ्गलैश्च सुभूषितम् ॥
तथागताश्च चतुरः अनेगै[6]र्वस्त्रभूषितम् ।
चीनजैः पट्टजैर्वस्त्रै शु(सु)चिवस्त्रैर्विभूषितम् ॥
रत्नादिदाममालाभिः अलङ्कार(ल)विशेषकैः ।
केतकि(की)पुष्प आदि(दी)भिः क्षतिपुष्पैः सुभूषितम् ॥
इन्द्रादिस्त्रयस्त्रिंशैश्च[7] प्रथापितं जगद्गु(रु)रुः ।
पाचाक्षतिलक्षणैश्च पूरितं चैत्यरूपकम् ॥
ब्रह्मकायिकैरथवा तथा रूपाचनैरपि[8] ।
इत्थं गुणमयं चैत्यं रूप केन प्रथापितम् ॥
अपि आरूप्यावचरैः देवैरपि क्षतं भवेत् ।

---

१ D ०सिद्धिं च । २ C omits this line.
३ D ०देवी अग्नावपी च मामकि । ४ D देवी तारा च वायवेऽपि
५ B दिगराभिः, D दिगमालाभि प्रलम्बिते ।
६ D तथागता च......अनेकै । ७ D इन्द्रादित्त्रयत्त्रिंशैश्च ।
८ B C ०चरैरपि ।

एवम्प्रकारकैर्युक्तं केन चैत्यं संस्थापितम् ॥
अथैक चतुराजानः स्वस्वगणैः परिवृतः ।
समायाता अत्र केऽपि इत्यश्चैत्यं कृतमिति[१] ॥
धृतराष्ट्रः पूर्वराजः कुम्भाण्डैश्च[२] परिवृतः ।
पूर्वदिश समायातः इत्यं तच्च कृतमिति ॥
विरूढ़क याम्यराजः कुम्भाण्डैश्च परिवृतः ।
याम्या दिशः समायातात् इत्यञ्च कृतं सर्वदा ॥
विरूपाक्ष पश्चि[३]राजैः नागराजैः परिवृतः ।
पश्चिमा(च)च्च समाया(त)तः इत्यश्चैत्यं कृतमपि ॥
वैश्रवणोत्तरराजः यक्षगणैः परिवृतः ।
उत्तराच्च समाया(त)तः इत्यश्चैत्यं कृतमिति ॥
इत्येवं देवराजाभिः मानुष्यराजाभिरपि ।
दैत्यराजेभिरन्यैश्च गन्धर्वराजकैरपि ॥
श्रीस्वयम्भूः शम्भुनाथचै(त्यं)त्य केन इत्यं कृतम् ।
श्रीस्वयम्भूगोपनञ्च केनेत्यञ्च कृतमपि ॥
[४]तत्सर्वजं वापि नाथ नाथा ब्रूहि अपि ।
मयि कृपां अनुकम्पय शीघ्रं शीघ्रं दयां कुरुः ॥
भूतेऽतिभूते दीर्घे च यस्माद् यत्नातकमपि[५] ।
तस्मात्सर्वञ्च श्रोष्यामि वाचयिष्यसि सत्प्रभो ॥

१ D कृतमपि । २ C गन्धर्व्वैश्च । ३ A पाश्च० ।
४ B पूर्व्वजं वापि नाथा ब्रूहि, D ततसर्व्वं पूर्व्वजञ्चापि नाथ नाथा ब्रुहि
५ D यत्नान्तकमपि ।

केन राज्ञा कृतं तस्य ब्राह्मणा वैश्येन तथा।
शूद्रेण अन्यजातिना इत्यश्चैत्यं कृतमिति॥
अथवा दैत्यराजेन किंकरेणान्यजातिना।
किन्नरेण गन्धर्वेण यक्षराजेन च अपि॥
पूर्वजैरथवा राजैः दाक्षिणैः पाश्चिमैरपि[1]।
उत्तरैर्मानुष्यकैश्च चैत्यमित्थं कृतमिति[2]॥
इत्यश्चैत्यं कृतं येन तच्छ्रवं[3] ब्रूहि सद्गुरोः।
अतिदीर्घं नातिदीर्घं वक्ष्यसे शृणोमि अहम्।
मह्यमर्थं न हि नाथ सर्वेषाञ्च हिताय च।
मूकानां[4] वाचनार्थाय अज्ञानां ज्ञानप्राप्तये॥
मूर्खाणां गुणलाभाय सत्त्वानाञ्च हिताय च।
हस्तपादेन खञ्जानां सुहस्तपादनाय च॥
चक्षुश्रोत्रविहीनानां चक्षुश्रोत्रलाभाय च।
इत्यञ्च पापभोग्यानां तद्भोगञ्च प्रनाशिने[5]॥
शीघ्रं ब्रूहि दयां कृत्वा स्वयम्भोः गुप्त च कथाम्।
इति तद्वचनं श्रुत्वा प्रोक्तवान् भगवांश्च तम्॥
मैत्रेयं बोधिसत्त्वञ्च महासत्त्वं प्रचर्य्यकम्।
भो मैत्रेय शिष्य भिक्षो स्वयम्भोः गुप्तककथाम्॥
येन कृतं यस्मिन् काले त्वया श्रुतं पुनः पुनः।
वाचयामि च तच्छ्रवं शीघ्रं शृणु त्वया पुनः॥

---

१ D दक्षिणै पश्चिमैरपि। २ D कृतमपि। ३ D तच्छ्रब्दं।
४ D मूर्खानां। ५ D प्रलासिता।

कायवाक्चित्तएकेन एकचित्तेन श्रूयताम्[१] ।
सत्त्वानाञ्च हितार्थाय निश्चयेन श्रुतं त्वया ॥
इति कृत्वा सुश्रीप्रेन श्रूयतां गुप्तस्य कथाम् ।
गते काले सुदीर्घे च कल्पेऽपि भद्रसंज्ञके ॥
निर्वृत्तौ सर्वज्ञनाथः निर्वाण प्राप्तवत्यपि ।
मनौ[२] श्रीकनके तत्र विंशद्वर्षसहस्रकम् ॥
प्रजानामायुषि प्राप्ते जातवान् काश्यपो मुनिः ।
वाराणस्यां श्रीनगर्य्यां मुक्तिमार्गैकदेशके ॥
श्रिया लक्ष्म्या गुणेनापि त्रैलोक्य अतिदुर्ल(ल्ल)भम् ।
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ॥
अन्यजैरक्षजैः सर्वैः चतुर्दिक्षु समागतैः ।
पूर्वाच्च दक्षिणाचा(च्चा)पि पश्चिमादुत्तरात्तथा ॥
समागतैश्च मानुष्यैः वाशितं तत्र सर्वदा[३] ।
धृतराष्ट्रः सगन्धर्वैः विरूढ़कः किन्नरैस्सह ॥
विरूपा(क्ष)क्षः नागलोकैः वैश्रव(ण)णः यक्षैस्सह ।
चत्वारश्च महाराजाः स्वस्वगणैः परिवृतः ॥
आयता वाशितास्तात्र[४] वाराणस्यां विशेषतः ।
इन्द्रश्च देवराजोऽपि (स)शच्युपेन्द्रेण सङ्गतः ॥
त्राय(स्त्रिं)स्त्रिंशादिभिर्देवैस्सार्द्धं तत्र समागतः ।
यामेश यामैस्सार्द्धं तुषितेशः सतुषितैः ॥
निर्म्माणर(ति)तीश देवः निर्म्माणरतिभिस्सह ।

१ D श्रयति । २ D मुनौ । ३ D सर्व्वतः । ४ D वाशिता चात्र ।

परनिर्म्मितेश देवः परनिर्म्मितश्च सह ॥
इत्थं कामावचरै देवैः तत्रागताः सदा सदा ।
रूपावचराभिस्तथा आरूप्यावचरास्तथा ॥
स्वस्वदेवगणैः सार्द्धं सदा सदा तत्रागता[1] ।
इन्द्र यमश्च[2] वरुणः कुवेरश्च अग्निरपि ॥ ॥
नैऋत्य वायु ईशानः अध ऊर्द्धं दिशि स्थिताः ।
स्वस्वदिग्भ्यः समायाताः स्वस्वग(णै)णैः परिवृतः ॥
समायाताः सर्वकालं वाराणस्यां विशेषतः ।
ब्रह्मा अपि स देवे(ण)न ब्रह्मगणैः परिवृतः ॥
अनेगमुनिभिः सार्द्धं तत्र स्थिताः सदा मुदा ।
विष्णुरपि देवता च रा(ढा)धाभिश्च परिवृतः ॥
अनेगगोपकन्याभिः सहस्तत्र सदा स्थितम् ।
महेश्वर देवदेवः उमादेव्या सह सदा ॥
विघ्नादिस्वगणैस्सार्द्धं पुत्राभ्यां तत्र संस्थितम् ।
त्रयत्रिभिः कोटिदेवैः नानादेवगणैरपि ॥
वाराणस्यां विशेषेण सर्वकालं समागता ।
तदा आ(सि)सीत्त्व विख्यातः कश्चिद्विप्राणां नायकः
गुणज्ञानेन ज्येष्ठेन पितामहमिव स्थितः ।
चतुर्वेदविदानञ्च षट्शास्त्रविदुषामपि ॥
पौराणिकानां तन्त्राणां सच्छास्ता गुरुनायकः ।
इव गुणमये युक्तं त्रैलोक्येऽपि सुदुल्लभम् ॥

---

१ D सदास्तत्रा मुदा गताः ।	२ D यमस्य ।

मर्त्यलोकेषु सर्वेषु प्रतिरूप पितामह ।
[1][काश्याञ्च शुद्धधी[2] राजा गुणनीतिश्च पारगः] ॥
तस्य पत्नी सती आसीत् काचिद्विख्यातसद्गती ।
दयावती पुण्यात्मा च साचात्सतीव स्थिता ॥
त्रैलोक्य[3]जननी चापि लोकानाञ्च माता इव ।
[4][देवासुरमनुष्यानां प्रज्ञा माता इव] स्थितः(ताः) ॥
तया पुत्रं प्रसूतञ्च सर्वलक्षणमण्डि(ता)तम् ।
द्वात्रिंश(स)लक्षणधरं अशीतिव्यञ्जनैर्युतम् ॥
द्युतिं जाम्बूनदवच्च सर्वपुण्यैः सुलक्षणम् ।
पितामहसृष्टि इव त्रैलोक्येऽपि सुदुर्लभम् ॥
देवासुर(म)मानुष्येषु लोके अन्य कश्चिन्नहि[5] ।
त्रिसाहस्रे समुद्भूतं क्षीरनिधौ चन्द्रमेव ॥
यद्वदाकाशाच्चन्द्रमा तारागणै परिवृतः ।
तद्वल्लक्षणैस्तु(सु)युक्तं वाराणस्यां आगते वैः[6] ॥
यद्वदपि खपथाच्च लक्ष्मीभिरागतमपि ।
संयुक्तं लक्षणैस्तद्वत् तत्रापि आगत इव ॥
नाम्नेन काश्यपोऽयं श्रीसर्वज्ञानां जगद्गुरुः ।
देवासुरमनुष्याणां शास्ता सर्वज्ञनाय(कं)कः ॥

---

१ A B omits the portion bracketted.

२ D काश्याञ्च सत्सुधी । ३ D त्रैलोक्ये ।

४ B omits the portion bracketted. ५ D नह्नी ।

६ B आगतेवः ।

यदा यस्या यातः शास्ता काश्यपो मुनिनायकः।
तदा तस्यां वाराणस्यां काश्याख्यश्च प्रकीर्त्तितः॥
अतीतैर्नागतैर्नाथैः सर्वज्ञैः मुनिनायकैः।
तस्मात्का(क)श्यपजाताच्च वाराणसी काशीरितम्॥
सा च काशीरपि भूमिः पवित्री गुणभू(ष)षिणी।
ततः अपि सार्वकालं सर्वदे(वै)वैः सदा स्थितम्॥
पूर्वाच्च अधिकेनापि अनेकैः देवतागणैः।
इन्द्रादित्रिदशैर्देवैः सह तत्र सुवासि(शि)ताः॥
चतुर्भिश्च महाराजैः दशभि लोकपालकैः।
स्वदे(श)शं विसृतं कृत्वा सदा तत्र सुवाशिताः[१]॥
ब्रह्मा अपि सद्ब्रह्मेशः ब्रह्मगणैः परिवृतः।
चतुवेदादिपा(थ)ठश्च पाठयामास सर्वदा॥
विष्णुरपि देवनाथः राधाभिश्च परिवृतः।
वंशादिवाद्यगीतश्च कालयामास अत्र च॥
महेश्वर देव देवी पुत्रैश्च [२]स्वगणैर्वृतः।
नृत्यगीतादिकं कृत्वा वासयामास अत्र च॥
किन्नरराजकैश्चापि यक्षराजैस्तथा अपि।
गन्धर्वराक्षसैः राजैः सुस्थितं तत्र सर्वदा॥
त्रयत्रिभिर्कोटिदेवैः[३] नानादेवगणैरपि।

---

१ D सदास्तत्र शुवाशिता। २ D स्वस्वगणै र्वृतः।
३ D ०देव।

पूर्वाच्चाधिकं वा(चा)पि सुस्थितं भवति सदा ॥
यस्मिं च काश्यपो जातः काश्याञ्च भुवने अपि ।
तस्मात्सर्वप्रकारेण मङ्ग(ले)लैः पूरितं सदा ॥
पुष्पधूपादिभिः पूज्यैः नानापञ्चोपचारकैः ।
पूजितं अधिकं गौरात् काश्यपं मुनिनायकम् ॥
काश्यपोऽपि सच्छास्ता च इत्थं पूर्णगृहं त्यजेत् ।
राज्यं गृहं धनं वस्त्रं दा(सी)सी दा(सं)सं तथा अपि ॥
अश्वरत्नं गजरत्नं स्त्रीरत्नं(त्न) मणिरत्नकम् ।
परिणायकं पुरुषञ्च चक्ररत्नं अपि तथा ॥
इति सप्त(भि)भीरत्नैश्च पूरितं राज्यकमपि[1] ।
काशीमपि राज्यकञ्च त्रैलोक्येऽपि सुगौरवः[2] ॥
शासिना काश्यपेनापि जन्मकृतादपि तथा ।
पृथोरपि सुसारा च[3] काशीक्षेत्रं प्रईरितम् ॥
अनेग(क)गुणसंयुक्तं क्षेत्रञ्चापि प्रसिद्धकम् ।
त्रिसाहस्रे महालोके दुग्धाज्जातं घृतमिव ॥
त्रिसाहस्रमहालोके जम्बूद्वीपं सुसारकम् ।
जम्बूद्वीपे शुभे रम्ये[4] आर्य्या सर्वसुसारकम् ॥
आर्य्यावर्त्तभूमौ चापि वाराणसि(सिं) सुसारकम् ।
तस्मात्काश्यपजला(च)च्च काशी(शि)नाम प्रसिद्धकम् ॥

---

१ A D राज्यकर्म्मपि । २ D त्रैलोक्येऽपि च गौरवः ।
३ D सुसाराच । ४ A रम्य, B तस्य ।

का(शा)श्याञ्च विषये येन गृह राज्यं रक्ष्येदपि[१] ।
गृहचर्य्यं परित्यज्य वैरागीपदं[२] गृह्यते ॥
ब्रह्मक्षत्रियवैश्याश्च शूद्रादयश्च मानुषाः ।
काश्यां कृताद्वैराग्याच्च[३] ते नरा मोक्षगामिनः ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च अन्यजातयः ।
अक्षजा अन्यजा नराः काश्यां मृता स्वर्गे गतम् ॥
हस्त्यश्वगवा महिषाः अन्याश्च पशुजातयः ।
काश्यां मृताश्च ते जाताः चतुर्णां राजभूवने ॥
शुकसालिकक्रौ(क्रू)ञ्चादि तिर्य्यञ्च पक्षिजातयः ।
मृतात्[४] काश्यां विशेषेण मानुषधनिनां कुले ॥
कृ(क्रि)मिकी(ता)टाद्यो अन्या पतङ्गमक्षिकादयः ।
विशेषेण मृतात्[५] काश्यां मानुष्यकुले जायते ॥
ये मृताः प्राणिनः सर्वे काश्याञ्च विषय अपि[५] ।
तस्मात्काश्यपजातान्न वामं शेते न मृतये ॥
एवं गुणमयं क्षेत्रं काश्यपजाता(च)श्च काशीः ।
ईदृशं गुणसम्पन्नं क्षेत्रं त्रैलोक्येऽपि दुर्लभम्[६] ॥
अतीतैः नागतैर्वुद्धैः तस्यां काश्यां विशेषतः ।
धर्म्मचक्रं प्रवर्त्तिला अनागतैस्तथा अपि(पी) ॥
प्रत्युत्पन्नेन मयापि काश्यां जन्म कृतेन च ।

---

१ D रक्षेदपि । २ D गृहे चर्य्यं........पद ।
३ D कृता वैराग्या च । ४ D मृता । ५ D विषये अपी ।
६ A दुल्लभम्, D दुर्लभम् ।

धर्मचक्रं नात्र कृत्वा(त्) कुत्र गच्छापि तत्क्षणम् ॥
इति ज्ञात्वा काश्यपोऽपि शास्ता सर्वज्ञनायकः ।
तस्मात्काश्या नगर्याश्च(च) आद्ये अत्र च मण्डले ॥
यत्र न्यग्रो(ग्रो)धवृक्षश्च नानारत्नै विभूषितां[१] ।
विश्वकर्मकृतं वृक्षं तदध विशतु गुरुः ॥
स्वस्तिकतृणास(श)नञ्च यत्र तिष्ठति वृक्षके ।
तत्र स्थित्वा काश्यपोऽपि समाध्यास्फानकं कृतम् ॥
समाध्यास्फानकं कृत्वा ऋजुकायेन संस्थितम् ।
तस्मात्तत्रा(त्र)सने स्थित्वा सम्बोधिज्ञान प्रापितम् ॥
सम्बोधिज्ञान प्राप्तार[२] मारभङ्गं कृता अपि ।
मारभङ्गं कृतात्पश्चात् तथागतपदं लभेत् ॥
तथागतपदं लब्ध्वा ऋद्धिनां नायकपदम् ।
अतीतानागतैः सार्द्धं बुद्धानामृद्धिनायकः ॥
ब्रह्मविष्णुशिवशक्रैः इन्द्रादिचिदशैरपि ।
ततः प्रतिदिने चापि तस्य पूजा कृतं(त) परम् ॥
चतुर्भिश्च महाराजैः यक्षकुम्भाण्डकिन्नरैः ।
नागादिखगणैः सार्द्धं तलो देश[३] प्रपूजितम् ॥
भिक्षुभिर्भिक्षुणीभिश्च बोधिसत्त्वगणैरपि ।
महासत्त्वगणैस्सार्द्धं देशजा(चा)चां कृतं भवेत् ॥
देशाद्देशं ग्रामाद्ग्रामं राज्याद्राज्यं द्वीपाद्द्विपम्[४] ।

---

१ D रत्नविभूषितां ।　　२ B D प्राप्ता च ।　　३ D ततो देशे ।
४ D द्विपाद्द्विपं ।

शिष्यगणैः सङ्घैश्च काश्यपो मुनिर्गच्छतु ॥
इत्थं गुणमये काश्यां भविष्ये च विशेषतः ।
कलियुगे विश्वेश्वरं तत्रेश्वरं भविष्यति ॥
हरगणैरनेकैश्च सह तत्र सुसंस्थितम् ।
देवासुरमनुष्यैश्च पूजितं स भविष्यति ॥
यस्मिन् काले यस्यां[१] काश्यां विश्वेश्वरञ्च नायकम् ।
भविष्यति स्थितं कालं अत्यर्थञ्च कलियुगम् ॥
देवासुरमनुष्याणां शास्ता विश्वेश्वर अपि ।
म्लेच्छैश्च कृतराज्येऽपि सो गुप्तो भविष्यति ॥
काश्यप अथ सर्वज्ञः देवासुरमानु(ष्ये)ष्य गुरुः ।
जात्राश्च[२] का(ल)रयामास प्रतिदेशे प्रतिदिशि(शिः) ॥
पिण्डपात्रादिदानैश्च शयनासनभैषजैः ।
भक्ष्यभोज्यादिभिर्योग्यैः पूजितञ्च कृतमपि ॥
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ।
देशजैः ग्रामजैः लोकैः तस्मै पात्रं ददुर्मुदा ॥
अथ काश्यपः सर्वज्ञः सर्वैः शिष्यगणैस्सह ।
[३][भिक्षुभिर्भिक्षुणीभिश्च बोधिसत्त्वगणैरपि ॥ ॥
महासत्त्वगणैस्सार्द्धं अनेकदेशजैरपि ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ॥
इत्येवं आदिभिः सर्वैः शिष्यगणैः परिवृतः ।]

---

१ D यस्य ।  २ D जात्रा च ।

३ C omits the portion bracketted.

काश्याश्च विषयादन्ये प्रतिदेशे यात्रा कृतम् ॥
अथ(मे)मं सञ्जीवे चापि कालसूत्रे सङ्घातके ।
रौरवे प्रतापने च तपने च अवीचिके ॥
अर्वुदे च निरर्वुदे अटटे हहवेऽपि च ।
हुहुवे उत्पले पद्मे महापद्मे च नार(ल)के ॥
उष्णनर(क)के शीतिभूते शीतौ च अपि उष्णके ।
इत्थं च नारके कृत्वा काश्यपेन सुलश्मिभिः[1] ॥
सर्वनारके भुवने काश्यपेन च शासिना ।
स्वतेजलश्मिभिः[2] सर्वमुद्धारं कृत नारके ॥
नमो बुद्धाय धर्माय संघाय च शब्देन च ।
कृतमिति नारकेभ्यो ऋद्धिषु[3] येन ईरितात् ॥
इति शब्दं प्रतिश्रुत्वा नारकाः पापभोगिनः ।
त्रिरत्नशरणं गत्वा केचित्काचित्स्वर्गं गताः ॥
प्रतिदिने प्रतिरात्रौ इत्थं कृत्वा स्वेभिर्र(ले)श्मिभिः[4] ।
क्रमेण च जात्रां काश्यां कृत्वा गतश्च काश्यपः ॥
भिक्षुभिर्भिक्षुणीभिश्च उपाशकैरुपाशिकैः ।
शिष्यगणैरनेकैश्च सार्द्धं गतः स:(स) सद्गुरुः ॥
अभवद्बोधिसत्वोऽहं ज्योतिराजो गुणोद्(धि)धिः ।
आराधयल्लोकगुरुं सर्वकालं प्रसन्नधिं ॥
पिण्डपात्रादिभोज्यैश्च भैषज्यैः शयनाशनैः ।

---

१ D सुलक्ष्मीभिः । २ D लक्ष्मीभिः । ३ B ऋद्धिशम् ।
४ D लक्ष्मीभिः ।

भोज्यादिभक्ष्य(च)योग्यैश्च पूजयामि सदा गुरुः ॥
यत्र यत्रश्च यश्च[१] गुरु गच्छति नायकः।
तत्र तत्रापि अहञ्च गच्छामि तस्य पृष्ठतः ॥
पूर्वविदेहं[२] जम्बूच अपरगोत्रायनिमपि[३]।
उत्तरकुरुमादि(श्च)श्चतुर्षु प्रगच्छति ॥
चतुर्षु उपद्वीपेषु सर्वत्र मर्त्यमण्डले।
अन्वाहिण्डन्[४] स सर्वज्ञः सर्वत्र भुवनेषु च।
अहमपि च सद्गुरोः काश्यपस्य च पृष्ठतः।
यत्र गच्छति सः(स) शास्ता तत्र गच्छामि सर्वत्र(त) ॥
वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी।
प्रविष्टा नाशयेत्पापं जन्मान्तरशतैरपि ॥
[५]यदि पापो यदि शठो यदि धार्म्मिको नरः।
वाराण(सी)सीं समापाद्य पुनाति सप्तमं कुलम् ॥
अन्यत्र योगजाद्वा[६] सन्यासादथवान्यतः।
प्राप्यते तत्परं स्थानं सहस्रेणैव जन्मना ॥
यत्र ज्ञानञ्च योगञ्च मुक्तिस्त्वेकेन जन्मना।
अविमुक्तिस्तदासाद्य नान्यद्गच्छेत्तपोवनम् ॥
यतो मया नैवमुक्तं तदमुक्तमिति स्मृतम्।
ज्ञानध्यानादिनिष्ठानां परमानन्दमिच्छताम् ॥

---

१ B कायश्च। २ D विदेह जम्बूश्च। ३ B D ०गोड़ायणिमपि।
४ A अन्वाहिरड्यान्, D अन्वाहिरडान्।
५ A D यदिपां यदिशठो यदि। ६ B योगजानाद्वा।

या गतिर्विहिता सम्यक् सा विमुक्ति मृतस्य[१] तु ।
यत्र साक्षाज्जगदीशः काश्य(प)पो भगवानपि ॥
व्याचष्टे तारकं ज्ञानं तत्रैवाह विमुक्तिकम् ।
किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् ॥
ततो नैवाचरेत्पापं कायेन मनसा गिरा ।
एतन्मुनीश्व(र)रं उक्तं त्रिषु लोकेषु विश्रुतम् ॥
अत्र स्नात्वा दिवं यान्ति ये मृतास्ते पुनर्भवाः ।
स्नात्वात्र मुनीन्द्राय कृत्वा स्वेच्छया पूजनम् ॥
या गतिर्विहिता सम्यक् सा गति लभ्यते खलु(लूः) ।
तत्र ब्रह्मादयो देवाः रक्षां कुर्वन्ति सर्वदा ॥
संक्षेपेन प्रवक्ष्यामि प्रयागस्येह कीर्त्तनम् ।
षष्टिवर्षसहस्राणि तानि रक्षन्ति जाह्नवी ॥
यमुना रक्षति सदा सविता सप्त[२]वाहनः ।
प्रयागे तु विशेषेण स्वयं वस(श)ति काश्यपः ॥
मण्डलं रक्षति मुनिः सर्वदेवैः स्वयमिति ।
[३]नागो अर(ल)क्षति नित्यं वज्रपाणि महेश्वरः ॥
स्वकर्म्मणा वृतो लोको नैव गच्छति तत्पदम् ।
स्वल्पमल्पतरं पापं यदा यस्य च मैत्रेय[४] ॥
प्रयाग स्मरतस्तस्य सर्वमायाति(न्ति) संक्षयम् ।
दर्शनात्तस्य तीर्थस्य नामसङ्कीर्त्तनादपि ॥

---

१ D विमुक्तिस्मृतस्य तु । २ B सप्ति० । ३ B न्यग्रोधः ।
४ A D मैरिय ।

मृत्तिकालभनाद्वापि न(र)रः पापात्प्रमुच्यते।
पञ्चकुण्डानि मैत्रेय वर्त्तते मध्ये[1]जाह्नवी॥
प्रयागं विशतः पुंसः पापं न(स्य)श्यति तत्क्षणात्।
तत्रोपविश्य मैत्रेय स्वर्गलोके महीयते॥
व्याधित यदि वा दी(दि)नः क्रुद्धो वापि भवेन्नरः।
अतिदुष्कृतकर्म्मासौ लभते परमां गतिम्॥
गङ्गायमुनामासाद्य त्यजेत्प्राणांश्च यत्नतः।
दीप्तकाञ्चनवर्णाभैः विमानेन दिवं व्रजेत्॥
देशे वा यदि वारण्ये विदेशे यदि वा गृहे।
प्रयागं स्मरणेनापि यस्तु प्राणान्[2] परित्यजेत्॥
ब्रह्मलोकमवाप्नोति वदन्ति मुनि ईश्व(रै)रैः॥
गङ्गायमुनयोर्मध्ये यस्तु ग्रासं प्रगच्छति।
सुवर्णमथ(वा) मुक्तान्वा तथैवान्या प्रतिग्रहान्॥
स्वकार्य्ये पितृकार्य्ये वा देवताभ्यर्च्चनेऽपि वा।
निस्फलं तस्य तत्तीर्थं याव[3]त्तद्धनमश्नुते॥
अत[4]स्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च।
कपिलां पा(त)टलां श्वेतां यस्तु धेनुं प्रयच्छति॥
तस्या यावन्ति रोमानि सन्ति गात्रेषु सत्तम[5]।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

१ D मध्य०। २ B ब्राह्मनान्। ३ A यावत्तनं, D तत्त्वं नमश्नुते
४ D अततीर्थे। ५ D सत्तमं।

प्रयागतीर्थयात्रार्थी यः प्रयाति नरः[१] क्वचित् ।
[२]बलीवर्द्दसमारूढ़ो यत्फलं तस्य तच्छृणु ॥
नरके च स तं घोरे समारूढ़ सता(तो)द्यतम् ।
ततो निवर्त्तते घोरे गवां क्रोध सुदारुणे ॥
सलिलञ्च न गृह्णन्ति पितरस्तस्य देहिनः ।
यस्तु प्रत्ता[३]स्तथा वालान् स्नापयेत् पाठयेत्तथा ॥
यथात्मानस्तथा सर्वान्दानं विप्रेभ्य दापयेत् ।
ऐश्वर्य्यमदमोहात्मा गर्भध्यानेन यो नरः ॥
निस्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्ज्जयेत् ।
वटमूलं समाश्रित्य यस्तु प्राणान् परित्यजेत् ॥
सर्वलोकानतिक्रम्य चन्द्रलोकं स गच्छति ।
गङ्गायमुनयोर्मध्ये पृथिव्यां जघनं स्मृतम् ॥
प्रयागं परं(र) मैत्रेय त्रिषु लोकेषु विश्रुतम् ।
तत्राभिषेकं यः कुर्य्यात् सङ्गमे शंसितव्रतः[४] ॥
समं फल[५]मवाप्नोति राजसूयाश्वमेधयोः[६] ।
कम्बलाश्वतरौ[७] नागौ यमुनादक्षिणतटे ॥
तत्र स्नात्वा पीत्वा च मुच्यते सर्वपातकैः ।
तत्र स्नात्वा नरो गत्वा मुनी(नि)श्वरस्य सन्निधौ[८] ॥
आत्मानं तारये[९]त्पूतान् दशातीतान्दशावरान् ॥

---

१ D नर दिवं । २ D क्वचिद्वलीवर्द्द० । ३ D त्वत्तां ।
४ D शंश्रितंव्रतं । ५ D सर्व्वफलं । ६ A D ०मेधयः ।
७ A C D ०कम्बलाश्वतसौ । ८ D सङ्गतौ । ९ D कारयेत् ।

कृत्वाभिषेकन्तु यो नरः सोऽश्वमेधफलं लभेत्।
स्वर्गलोकमवाप्नोति यावदाकृतपुण्यकम्॥
पूर्वपार्श्वे तु गङ्गायास्त्रैलो(क्य)क्ये ख्यातिमानथ।
अवटः सर्वसामुद्रः[1] प्रतिष्ठानञ्च विश्रुतम्॥
ब्रह्मचारी जितक्रोध स्त्रि(त्रि)रात्रं यदि तिष्ठति।
सर्वपापविशुद्धात्मा[2] चाश्वमेधफलं लभेत्॥
उर्वशीपुरिने[3] रम्ये विपुले हंसपाण्डुले।
परित्यजति यः प्राणान् शृणु तस्यापि यत्फलम्॥
यावच्चन्द्रसूर्य्यश्च तावत्स्वर्गे महीयते।
यत्र गङ्गा महाभागा वङ्कतीर्थं तपोधना॥
सिद्धिक्षेत्रं हि तत् ज्ञेयं नात्र कार्य्या[4] विचारणा।
क्षितौ तारयते मर्त्यान्नागांस्तारयतेप्यधः॥
दिवि तारयते देवा(स्ते)न्तेन सा त्रिपथा स्मृता।
यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य तु॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते।
सर्वेषामेव भूतानां पापोपहतचेतसाम्॥
गतिमन्वेषमा[5]नानां नास्ति गङ्गासमा गतिः।
गङ्गामेव निषेवेतः प्रयागेतु ॥
।
मर्त्यमण्डले क्रमेनाथ काश्यपः सर्वज्ञगुरुः॥

---

१ D अवत सर्व्वसामुद्र। २ A सर्व्वपापं विशुद्धात्मा।
३ B ०पुरिते। ४ A D कार्य्यविचारणा। ५ D अन्वेषनानां।

ततः काश्याप्यागतश्च अत्र नेपालमण्डले ।
सर्वैः शिष्यगणैः सार्द्धं अत्रागतः सः काश्यपः ॥
अहमपि तत्पृष्ठतः आगतः अत्र मण्डले ।
काश्यपस्तत्र शास्ता च प्रथमं स(श)म्भूदर्शनम् ॥
कृत्वा पुष्पैश्च गन्धैश्च नैवेद्यैर्दीपकैरपि ।
पूजितं विविधं कृत्वा सर्वैः शिष्यगणैरपि[१] ॥
भिक्षुभिर्भिक्षुणीभिश्च प्रत्येकैं जिनश्रेवकैः ।
बोधिसत्वैर्महासत्वैः राजामात्यसुशिष्यकैः ॥
ब्रह्मभिर्वैश्यैः शूद्रैश्च तं शम्भूं पूजितं[२] मुदा ।
केचिद्धारणीश्चापि पाथैश्चापि सुपूजितम् ॥
महायानं सूत्रं केचित्पाठयामासुः सत्वरम् ।
केचित्स्तोत्रं कृतं वाचै भाषजैः संस्कृतैरपि ॥
अत्यर्थं मोदयुक्तेन शेवयामासुः शम्भुवम् ।
दशं शतं सहस्रञ्च अयुतं लक्षकमपि ॥
प्रदक्षिणं कारयन्ति अहर्निशञ्च तैः पुनः ।
कैश्चि(चि)त्पञ्चप्रणामेण कै(चि)श्चित्र अष्टाङ्गेण च ॥
सहस्रलक्षसङ्ख्यैश्च कारयामासु च पुनः ।
मञ्जुदेवोऽपि सच्छास्ता [[३]वरदामोक्षदा सह ॥
सर्वज्ञं काश्यपं चापि पूजयामासुः सत्वरं ।
पाद्यमर्घं चार्चनैश्च[४] राशनैश्च पुनः पुनः ॥

१ D पूजितं विविधैः कृत्वा सर्व्वशिष्यगणैरपि । २ D शम्भु पूजितं
३ C omits the portion bracketted. ४ A B चाचनै

अत्यर्थं मान्ययुक्तेन पूजितश्च मुदापि च[1]।
पञ्चोपचार]कैर्योग्यै(भै)र्भैषज्यैः भक्ष्यभोज्यकैः॥
पूजयामासु(ते)स्ते चापि काश्यपं मुनिनायकम्।
ब्रह्मभिः च(चे)त्त्रियैः वैश्यैः शूद्रैश्च अन्यजातिभिः॥
अत्र नेपालजैः सर्वैं पूजितं काश्यपं गुरुम्।
धूपैः पुष्पैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि॥
पिण्डपात्रादिभिः पूज्यैः पूजयामा(सु)सुः काश्यपम्।
काश्यपोऽपि अथ शास्ता अत्र नेपालवा(शि)सिने॥
श्रीस्वयम्भूपुराणञ्च देशयामासुः सुस्वरम्।
काश्यप अथ शास्ता च स्वयम्भूदर्शनं कृतात्॥
पश्चाद्धिमालयञ्चापि प्रगच्छति मुदा गुरुः।
क्रमेण देशे देशेऽपि पिण्डपात्रञ्च याचनात्॥
ततः[2] क्रमेण शास्ता(च)सुमेरुञ्च प्रगच्छति।
सुमेरुञ्च [3]प्रगमित्वा च चत्वार राजभूवने॥
काश्यपमुनि शास्ता च स्वशिष्यैश्च परिवृतः।
चत्वार अपि राजानः स्वस्वगणैः परिवृतः॥
पिण्डपात्रादिभिः पूज्यैः पूजयामासुः काश्यपम्।
ततः शास्ता क्रमेणापि त्रय(त्रिं)स्त्रिंशं प्रगच्छति॥
चतुर्भि राजकैश्चापि पूज्यं मान्यं कृतादपि।
त्रयस्त्रिं(त्रिं)शे विशेषेण सुधर्म्मायां विशेषतः॥

१ D मुदा अपि। २ A omits ततः। ३ D प्रगच्छन्ति चत्वार।

धर्म्मोपदेशमत्यर्थं कारयामासुस्तत्क्षणम् ।
अथ इन्द्र देवराज देवपुत्रैः परिवृतः ॥
अनेकैरप्सराभिश्च पर्षत्कृतात्र भुवने ।
काश्यपस्य सकाशाच्च धर्म्मं श्रुतात् पश्चादपि ॥
इन्द्रादयः सर्वदेवाः पूजितं पादपङ्कजे ।
मान्दारवादिभिः पुष्पैश्चन्दनचूर्णरञ्जितैः ॥
पूजयामास इन्द्रेण सर्वदेवगणैर्वृतः ।
अञ्ज(लि)लिं शिरसि धृत्वा गुरवे काश्यपाय च ॥
यत्र त्रिंशेश्वरराजा अन्तःपुरे निमन्त्रितम् ।
भगवन् काश्यप शास्ता मत्गृहे भोजनमिति ॥
अद्य पिण्डपात्रदानं गृहि(ही)त्वानुकम्पां मयि ।
अथ काश्यपः शास्ता च इन्द्रस्य वचनं श्रुतात् ॥
मनसा स्विकृतेनापि किञ्चिद्वचन नेरितम् ।
अतः विश्वम्भरदेव इन्द्रस्तस्माच्छृगृहकम् ॥
गत्वा शीघ्रं स्वदेवीञ्च उवाच श(स)चीदेवताम् ।
हे शचे देवते यूयं श्रूयतां मनस्युद्भुतम् ॥
अद्य काश्यपं शास्तारं[1] भोजयिष्यामि निश्चयम् ।
ससङ्घबोधिसत्वादीन् काश्यपपृष्ठतागतान् ॥
भिक्षुभिक्षुणीनाञ्चापि बोधिसत्वानां तथापि च ।
महासत्वगणान् सर्वान् काश्यपशिष्यकानपि ॥
भोजयिष्यामि शीघ्रेण सामग्रीं सज्जीक्रियताम्[2] ।

१ D काश्यपशास्तारं ।　　२ D सामग्री सज्जीकृयतां ।

इति श्रुत्वा सर्वे देवास्त्रयस्त्रिंशादय गणाः ॥
इन्द्रस्य वचनं[1] श्रुत्वा साम(शी)शीं शीघ्रं क्रियताम् ।
मनसा देवराजानां पार्थिवानाञ्च वचसा ॥
सुस्मरेण सर्वज्ञानां शीघ्रसिद्धं[2] कार्य्यक्रियाम् ।
इत्थं गुणमये मेरौ त्रय(स्त्रिं)स्त्रिंशे विशेषतः ॥
विशेष नाकराजस्य किञ्चिन्न विद्यते न हि ।
स्वर्गलोके कुत नास्ति धनरत्नभोज्यवस्त्व(स्तु)कम् ॥
तस्माच्छुशीघ्रं शीघ्रेण देवता सज्जीक्रियताम् ।
काश्यपसङ्गभोज्याय अमृतादिस्वर्गभोज्यकम् ॥
मान्दारवादिभि पुष्पान् शीघ्रं सज्जीकृतं इति ।
वैजयन्तेऽपि प्रासादे[3] शीघ्रं सम्पूर्णं क्रियताम्[4] ॥
इन्द्रादिभिर्देवताभिः काश्यपं प्रत्युद्गच्छति ।
यत्र काश्यपस्तिष्ठन्ति सशिष्यैर्नन्दनवने ॥
अरण्यवासधर्म्माच्च नन्दने तिष्ठति गुरुः ।
अथ इन्द्र देवराज तत्र गत्वा च तत्क्षणम् ॥
काश्यपं सर्वज्ञं नाथं[5] विज्ञापितं जगद्गुरुम् ।
भगवन् काश्यप नाथ कालं भवा(च)श्च ज्ञास्यति ॥
यस्मिन् काले मम चापि विजयिष्यतु[6] मद्गृहे ।
इत्थं निमन्त्रनं कृत्वा पश्चाच्च काश्यपं गुरुम् ॥
स्वर्गसामग्रिभिः(भीः) पूज्यैर्नन्दनात्स्वगृहमपि ।

---

१ A इन्द्रवचनं । २ D शीघ्रं सिद्धं । ३ A प्रासादे ।
४ D संपूर्णक्रीयतां । ५ B D सर्व्वज्ञनाथं । ६ D विजयिष्यति

विजयत्यमरावत्यौ जाचामह[1]कृतादपि ॥
ब्रह्मविष्णुशिवशक्रैः पूज्यमान्य सगौरवैः ।
अनेकै(स्त्रि)स्त्रिदशैर्देवैर्मान्दार(वै)वैः प्रपूजितात्[2] ॥
इन्द्रादित्रिदशैर्देवै र्वैजय(न्ति) विवेशति ।
अथापि इन्द्रराजेन सचीदेव्या सह स्थितः ॥
सुवर्णभृङ्गारकं स्थालिं गृह्य पादार्घकं कृतम् ।
ततस्तस्मै वैजयन्ते प्रासादस्य उपर्य्यके ॥
अनेकरत्नखचिते सिंहासने विशेषतः ।
विवेशयामास[3] शास्ता काश्यप नाथनायकः ॥
सर्वे शिष्यगणाश्चापि योग्य[4]योग्यासने स्थि(ता)ताः ।
अथापि ब्रह्मराजेन स्वर्णभृङ्गारसंगृहात् ॥
जलधारापातनादीन् पातयामासः काश्यपे ।
उपेन्द्र देवराजोऽपि पञ्चगन्धादिगन्धकैः ॥
लेपयामास सर्वेषु काश्यपे च जगद्गुरौ ।
महेश्वर देवदेव मान्दारपुष्पमालिकैः ॥
महामान्दारवैः पुष्पैः पूजयामास काश्यपम् ।
इन्द्रोपि च देवराजा अनेकान् रत्नजानपि ॥
मण्डलादिदक्षिणाश्च ढौकयामास काश्यपे ।
सच्यादिभिः देवताभि भैषज्याश्च सुधामपि ॥
स्वर्गजान् भोज्ययोग्याश्च दोहयामासु काश्यपे ।

---

१ D °मह्वं । २ D प्रपूजिताः । ३ A विवेशयामासः ।
४ B योग्ये ।

गन्धर्वकिन्नरैश्चापि मुरजादीन् तूर्य्यकानपि[1] ॥
वादयामासुरत्यर्थं मधुरैः सुस्वरैरपि ।
स्वर्गजमामग्निभिरित्थं महनिर्श पूजा कृतम् ॥
अनेकैर्देवराजैश्च काश्यपं भोजनं कृतम् ।
काश्यपं भोजनं कृत्वा संघेभ्यः भोजनं ददुः ॥
स्वर्थेन च स्वच्छेनापि भोज्येन भोजनं कृतम् ।
सुभोज्येनापि भोज्यैश्च जलधारादिपातनम् ॥
धौतहस्तान्नीतपात्रं[2] प्रतिदिने भोजनं कृतम् ।
भोजनञ्चापि कृत्वा च काश्यपः नायकः[3] गुरुः ॥
सर्वदेवग(णैः)णै वृत्य अत्र च पर्षदं कृतम् ।
ब्रह्मविष्णुशिवशक्रैरनेकैस्त्रिदशैर्गणैः ॥
नीचतलासने स्थित्वा धर्मश्रुताय पर्षदि ।
अनेगअप्सराभिश्च सच्या देव्यापि तथाच[4] ॥
वैजयन्तेऽपि प्रासादे कृतपर्षदि संस्थिते ।
कामाचरै रूपाचरैरारूपाचरैरपि ॥
देवराजैः पर्षदैश्च धर्मश्रोताय सुस्थि(ता)ताः ।
अथ काश्यपः सर्वज्ञ[5] देवानां नाथनायकः ॥
धर्मं दिदेशयामास इन्द्रादिदेवपर्षदि ।
आदौ मध्ये च कल्याणं पर्य्यवसानकमपि ॥

---

१ D मुरजादितुर्य्यकानपि । २ D धौतहस्तानीतपात्रं ।
३ D काश्यप नायकं । ४ D अप्सरादिश्च सच्या देव्यापि च तथाच ।
५ D काश्यप सर्व्वज्ञ ।

स्वर्थं सुव्यञ्जनं धर्म्मं[१] देशितं ब्रह्मचर्य्यकम् ।
अथ तस्माद्धर्म्मं श्रुत्वा[२] ब्रह्माविष्णुमहेश्वरैः ॥
इन्द्रादिचिद(शै)शैः सार्द्धं प्रणिपत्य च काश्यपम् ।
केचित्पञ्चप्रणामेण अष्टाङ्गेनापि च मुदा ॥
केचित्प्रदक्षिणाञ्चापि[३] प्रणिपत्य पुनः पुनः ।
अथ काश्यपः शास्ता च शिष्यगणैः परिवृतः ॥
वैजयन्ता(च)च्च यस्माच्च प्रगच्छ(न्ति)ति सः सद्गुरुः ।
त्रयस्त्रिंशे विशेषतः यत्र माता प्रतिस्थिताः[४] ॥
तत्र गत्वा[५] सः शास्ता च मात्रे धर्म्मञ्च देशितम् ॥
अतीतानागतैर्बुद्धैर्यथा मातरि देशितम् ।
तथा तद्वत्काश्यपेन धर्म्मं देश्य अत्र स्थितः ॥
तत्काले च मञ्जुदेव मञ्जुश्रीप्रतिरूप(कः)जः ।
वरदामोक्षदा केश्युपकेशीप्रतिरूपजा(जाः) ॥
श्रीस्वयम्भूं धर्म्मधातुं पञ्चोपचारपूजनैः ।
प्रतिदिने प्रतिरात्रौ नित्यपूजां[६] कृतञ्च सः ॥
तस्मिन् काले मैत्रेय मञ्जुश्रिया तं पूजितम् ।
प्रतिदिने प्रतिरात्रौ पञ्चोपहारपूजकैः[७] ॥

१ D धर्म्म । २ D तस्मा धर्म्म श्रुत्वा ।
३ B पञ्चदशाञ्चापि, D प्रदक्षिणा चापि ।
४ D त्रयत्रिंशे विशेषेण यत्र मात्रा प्रतिष्ठिताः । ५ D गत्वा च
६ D नित्यपूजा । ७ A पञ्चोपहारकै, B पञ्चोपचारकैः ।

मञ्जुश्रीपर्वते वापि स्ववाशे मण्डलेऽपि च ।
दिने रात्रौ प्रतिपूज्ये पञ्चोपचारकैरपि ॥
इत्थं कृत्वा विधिभिश्च मञ्जुदेव जगद्गुरुः[1] ।
पत्नीभ्यां च स्वबुद्ध्यापि निर्वाणं नोपमं ययुः[2] ॥
मञ्जुदेवनाम्नाचार्य्ये वरदा मोक्षदापि च ।
ताभ्यां सह स्वपथाच्च[3] ऋद्धिं कुर्वन् प्रगच्छति ॥
खे च गत्वा स्वदेहाच्च अग्निं प्रज्वलितादपि ।
देहजात्या ब्रह्मा च स्वदेहं संस्कृतादपि ॥
यथा च वह्निना देहं लौकिकं संस्कृतमिति ।
तथाच स्ववपु त्यक्त्वा दिव्यदेहेन गच्छति ॥
यथा चीनात् समायातास्तथा चीनं स गच्छति ।
मानूष्यशरीरं त्यक्त्वा दिव्यदेहेन गच्छति ॥
यथा काश्यप शास्ता च नाके तिष्ठति मातरि ।
दाता मञ्जुदे(व)वः शास्ता पत्नीभ्यां च तथागतः ॥
यत्काले मञ्जुदेव इत्थं कृत्य विधाय(चः)सः ।
अन्तर्द्धाप्य ततो वेषमभवद्वपुरुज्ज्वलम् ॥
शोभा प्रपद्य सकलां निर्वृतिमेव सङ्गतः[4] ।
मञ्जुश्रीपर्वतं सोस्ति महासुखनिमग्नधीः ॥
यत्र मञ्जुदेवः शास्तृ पत्न्या सह शरीरकम् ।
वह्निदग्ध स्वपथाच्च पतितं यत्र धातुकम् ॥

---

१ D जगद्गुरो ।   २ D नोपयं ययुः ।
३ D स्वपंथा च ।   ४ A निर्वृतिमेवे गतः ।

तस्मा(च)च कारणाच्च ... ल्लवासिभिः जनाः[१]
शरीरं पातिताश्चापि ... तश्चैत्यामतारतम् ॥
ब्राह्मणैः चत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ।
अचजैरन्यैः सर्वैः पतश्चैत्यं[२] तदीरितम् ॥
... काले च लोकैश्च देवासुरैश्च मानु(षैः)ष्यैः ।
पुच्छाग्रे पर्वते स्थिला चैत्यं पुच्छाग्र(मि)मीरितम्[३] ॥
गौड़राष्ट्रे विशेषेण सुभिक्षेन समाकुले ।
नानामङ्गलसम्पन्ने श्रेष्ठे स्फीटे मनोरमे ॥
चययोजनविस्तारे आयासे व्यायासेव च[४] ।
इत्यम्बुन संयुक्ते पट्टने च विशेषके ॥
प्राकारमपि गाढ़ञ्च उच्चं स्थलं दृढ़मपि ।
समन्तत नगर्य्यां च [५][परिवृतेन संस्थितम् ॥
समन्ततश्चतुर्दिचो एकद्वारेण शोभितम् ।
बङ्कद्वारं तस्यां नास्ति मूले च नगर्य्यामपि ॥
तस्या नगर्य्या मध्ये च] भूवि(मि) च एकगर्त्तके ।
मातृकाभिः गणैर्द्देवैस्तत्र परिपूरितम् ॥
ब्रह्माय(णि)णी माहेश्वरी कौमा(रि)री वैष्णवी[६] तथा ।
वारा(हि)ही अपि चामुण्डा इन्द्रायणी लक्ष्मीति च ॥
गणेशं षड्मुखञ्चैव सिंहं व्याघ्राननमपि[७] ।

---

१ A B C omit जनाः । २ D पतचैत्यम् । ३ B चैत्यपूजाग्रमिरितम्
४ A व्यायासे च । ५ C omits the portion bracketted.
६ A वैष्णवी । ७ D षण्मुखञ्चैव सिंहव्याघ्रनलमपि ।

चैत्यं शिवं[1] भैरवञ्च वृक्षञ्चैव नागमपि ॥
तीर्थं मेघं सिद्धञ्चैव योगिनीयोगिभिर्वृतम्।
देवी वीरमती मध्ये तत्पी(पी)ठेश्वरी ईरिता ॥
चतुर्विंशतिपी(पा)ठानामेषा एका च नायकी।
अनेकैर्देवीभिर्वृत्तं त्रैलोक्येऽपि सुगौरवम् ॥
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः।
अत्रजैरन्यजैः सर्वैः वीरम(तिं)तीं प्रपूजितम् ॥
पुष्पैर्धूपैश्च गन्धैश्च नैवेद्यैर्दीपकैरपि।
लेह्यै पेयैर्मद्यै मांसैः[2] वीरम(तिं)तीं प्रपूजितम् ॥
प्रतिदिने प्रतिरात्रौ सदा मुदा प्रपूजितम्।
स्वर्गजैर्मर्त्यजैः[3] सर्वैः तत्रेश्वरीं प्रपूजितम् ॥
इन्द्रादित्रयस्त्रिंशैश्च[4] ब्रह्माविष्णुमहेश्वरैः।
सदा मुदा समायाता वीरमतीं (शे)सेवा कृतम् ॥
स्वस्वदेवगणैस्सार्द्धं अप्सराभिः परिवृतः।
सर्वदापि च काले च अत्र च वा(शि)सितं सदा ॥
ईतय उपसर्गादि निरापगते राष्ट्रके[5]।
अनेकमङ्गलैः पूर्णं सदा तथा सुभिक्षके ॥
त्रिसाहस्रे महालोके तच्छादृशमन्ये न हि[6]।
त्रयत्रिंशाच्च अधिकं गौरवं मर्त्यमण्डले ॥

---

१ D चैत्यशिवं। २ A मद्यैर्मांसै। ३ D स्वर्गजै मर्त्यजै।
४ D ०त्रयत्रिंशैश्च। ५ D निरापगतराष्ट्रके। ६ D तच्छादृशमये न हि।

श्रिया लक्ष्म्या गुणेनापि सर्वत्र भूवनेषु च ।
ईदृशं पूर्णकं राज्यं त्रैलोक्येऽपि सुदुर्लं(र्ल)भम् ॥
अनेकै ग्रामसंकीर्णै अनेकैः पट्टनैरपि ।
अनेकैर्निर्गमैश्चापि तत्र गौड़े सुपूर्णकम् ॥
विशेषेण गौड़राष्ट्रं त्रिदिवे अतिदुर्लं(र्ल)भम् ।
अन्येभ्यः राजिकेभ्योऽपि[1] शत्रुभ्यः चौरेभ्योऽपि च ॥
तत्र वासि(शि)नश्च प्रजाः किञ्चिद्दोषं न ज्ञायते ।
त्रयस्त्रिंशेन[2] उपमा भोग्येन मर्त्त्यमण्डले ॥
धनेन अलका यद्वत्[3] पुरीव अत्र मण्डले ।
इत्थं गुणमये राष्ट्रे गौड़े चापि विशेषतः ॥
अनेकैर्मङ्गलैः पूर्णे विनास्तीतिउपद्रवे ।
अथ कालान्तरे गौड़े आसिद्धे मन्त्रियोऽभवत् ॥
प्रचण्डदेवभूपाल निर्वाणात्मक वज्रधृक् ।
यथा कनिष्ठे संस्थितः वजसत्व जगद्गुरुः ॥
तस्यैव प्रतिरूपेण जातस्तत्र स्वरूपकम् ।
सर्वेषामपि बौद्धानां कर्म्मनाथ वज्रगुरुः[4] ॥
तथैव सर्वेषां नाथ वज्रसत्वप्रतिरूपजः ।
यदा यस्यां राजा जातं गौड़े चापि विशेषतः ॥
नामेन प्रचण्डदेव धर्म्माणां चन्द्ररूपजः ।

---

१ D राजितेभ्योऽपि । २ D त्रयत्रिंशेन । ३ A अडकाभ्या ।
४ D जगद्गुरुः ।

यथा सूर्य्यः प्रतिदिने समाया(त)तः समागतः ॥
तद्वत् गौड़ेऽपि राष्ट्रे च रविरिव स जातवान् ।
यथा सूर्य्यायाताच्चापि सर्वाणि तमसानि च ॥
दूरीकुर्वन्ति शीघ्रेण तस्य जन्म प्रभावतः ।
दयाशीलत्वमैश्चापि वीर्य्यसम्प्राप्तिकेन च ॥
यथा सम्पूर्णयुक्तेन पूर्णमासीव चन्द्रमा ।
नीतिधर्म्मविनयेषु सर्वत्र नीतिकेऽपि च ॥
राजनीतिगुणेनापि जयप्रतापकेन च ।
क्षमया दयया शान्त्या प्रसिद्धं लोकमण्डले ॥
यस्मिन् गौड़े राष्ट्रे जातः प्रचण्डदेवनाथकः ।
तस्मिन् गौड़े राष्ट्रे चापि नस्ति ईति उपद्रवान् ॥
यद्वत् मातापितरौ च एकपुत्रं प्रलक्षितम् ।
तद्वत्तेन प्रचण्डेन पत्न्या च लक्षितं प्रजाः ॥
यथा स्वस्य सुखं दुःखमभूच्च शरीरेऽपि च ।
तथा सर्वप्रजाभ्यस्य दयाच्चापि कृतमिति ॥
प्रचण्डदेवभूपालः स्वदुःख सहितुं लघुम्[१] ।
अन्येषां स्वप्रजानाञ्च दुःखं सहिष्णुं[२] गौरवम् ॥
तस्माच्चापि अत्यर्थेन स्वदेहादन्यदेहकम् ।
अत्यर्थेन अधीकेन गौरवं च कृतमिति(तिः) ॥
यथा पूर्वपरम्परया राष्ट्रके अत्र गौड़के ।

१ D लघु । २ D दुखःसहिष्णु ।

अधिका(चा)श्चापि गौड़ेन गौड़श्च ख्यापितं अपि ॥
सर्व्वेषामपि राज्ञानां मर्त्त्यलोकजजातिनाम् ।
तस्मा(चा)च्चाधिकगौड़ेन गौड़श्च ख्यापितं ननु(नुः) ।
गौड़के चापि राज्ये च[1] प्रचण्डेन राज्यं कृते ।
तस्य पुत्रं अभूच्चापि शक्तिदेवं महावरं(लं) ॥
[2]यदा गौड़के राष्ट्रे प्रचण्डदेवेन कृतम् ।
तेन राज्यकृता पौतात्तस्य पुण्यमत्युद्भूतम्[3] ॥
पुण्यमत्युद्भू(?)तात्पश्चाच्चित्त एकं समुद्भूतम् ।
चित्तमेकसमुद्भूत मनसि ज्ञानमुद्भूतम्[4] ॥
मनसि ज्ञानमुद्भूतात् गृहं राज्यं पुत्रं धनम् ।
स्त्रि(चि)यश्च सर्वसम्पत्तिं त्याज्याय निश्चयं कृतम् ॥
इति मत्वा स राजोऽथ प्रचण्डदे(व)वः शास्त्रवित् ।
केवलं निश्चयेनापि विचार्य्यं मनसि कृतम् ॥
सर्व्वेषां देहिनां मध्ये विशेषं मर्त्त्यमण्डले ।
गृहस्थचर्य्यके स्थित्वा पञ्ज(ज)रस्थ पक्षी इव ॥
अमोक्षमधिकयुक्तं रागद्वेषादिमोहज[5] ।
तेन सूत्रेण बद्ध्य[6]मर्क्कजाले(च)व मक्षिका ॥
घुनुघुनुप्रशब्देन कृतेन केन लक्षितम् ।
पापसूत्रेण प्रबद्धादत्र स्थितेन किं कृतम् ॥

१ D राष्ट्रे च। २ B D यदा च। ३ D पौतात्तस्य पुण्यमहद्भूतम्।
४ D समुद्भूतम्। ५ D ०मोहजं। ६ D बद्ध्वा च।

विप्रलापमनेकञ्च सुप्रलापं कृतादपि ।
हस्तपादाभ्यां संयुक्तात् पञ्चलस्यशुकमिव ॥
अगुणमयं सम्पूर्णं गृहस्थचर्य्यकमपि ।
तदधिकमगुणञ्च राज्यकं राज्यभोज्यकम्[१] ॥
इति गुणमयैर्युक्तं राज्यं गौडकमपि ।
सन्त्यज्याथ[२] च मनसि निश्चयं स्वीकृतमिति ॥
प्रचण्डदेवराजोऽथ विज्ञापितं गृहस्थकम् ।
चर्य्यं सुघोरकं[३] वापि त्यक्तव्यं मनस्युद्भूतम् ॥
इति निश्चित्य भूपालः प्रचण्डदेवभूभुजः ।
शक्तिदे(व)वं स्वपुत्रञ्च राज्य संस्थापनां कृतम् ॥
तत्राभिषिच्य स्वपुत्रं शक्तिदेवं महाबलम् ।
पट्टकञ्च मुकुटञ्च दत्तं तस्मै स्वशिरसा(सः) ॥
राज्यं पट्टनं निर्गमं ग्रामञ्च सर्व्वराष्ट्रकम् ।
धनधान्यादिसम्पूर्णं सौधगृहं[४] सम्पूर्णकम् ॥
यत्सर्वं अलं स्वराज्यं अन्तर्वहिपरमपि ।
तत्सर्वं शक्तिदेवाथ ददाति स्म स्वराज्यकम् ॥
ततोऽपि शक्तिदेवेन सूनुना तस्य भूभृतः ।
राज्यं सम्पालयामास पितृणां पौर्वकं यथा ॥
प्रचण्डदेवराजोऽथ धर्म्मपत्न्या सह मुदा ।
राज्यं भोग्यं परित्यज्य वैरागी[५] लभ्यते पदम् ॥

१ D ०भोगकम् । २ D सन्त्यज्यायेव । ३ D चर्य्यंसुघोरकम् ।
४ A C D सौध० । ५ D वैराग्य ।

वैरागीपद लब्ध्वा च तत्पीथस्य शेवां कृतम् ।
तत्पीथस्य से(शे)वां कृत्वा वीरम(ति)तीं प्रपूजितम् ॥
प्रतिरात्रौ तत्पी(थे)ठेश्वां वीरमतीं प्रपूजितम् ।
स्वस्वधर्म्मपत्न्या सह महेश्वरीं प्रपूजितम् ॥
तत्रेश्वरीं प्रपूजित्वा नानोपचारकैरपि ।
पुष्पै धूपैश्च गन्धैश्च दीपै नैवेद्यकैरपि ॥
लेह्यैः पेयैर्मद्यैर्मान्सैः मालाभिः मन्त्रकैरपि ।
प्रतिरात्रौ प्रपूजित्वा स्वधर्म्मपत्नि(त्नी)ना सह ॥
निशि जागरणं कृत्वा पत्न्या सह ध्यानकृतात् ।
कश्चिद्वर्षं(र्षे) प्रतिस्थित्वा तत्रेश्वरीं(री) प्रपूजितम् ॥
अथ कश्चिद्दिने चापि प्रचण्डदेवभूभुजः[१] ।
तस्याः देव्याः[२] प्रसा(शा)दाच्च गौरवं फलमाप्तवान् ॥
विमृष्य संसारसुखं परिणामो विषोपमम् ।
इति विचिन्त्य विरक्तो सिद्धभूमिमन्वेष सः ॥
सर्व्वेषु मर्त्यलोकेषु सि(द्धि)द्धभूमिं कुत्र स्थितम् ।
कायवाक्चित्तयोगेन सर्वेभ्यश्च श्रुतमिति[३] ॥
इत्थं श्रुत्वा प्रचण्डोऽपि कर्णस्यापि परम्परात् ।
क्रमेण च समायाता नै(ने)पालस्य वा(र्त्ता)र्त्तां श्रुतम् ॥
राष्ट्रेभ्यः सकलेभ्योऽस्ति[४] नेपा(ल)लं सिद्धिदन्तथा ।
मनोरथाधिकफलं प्रदानादुक्तवान्मुनिः ॥

१ D ०भूभूंजः । २ A C D omit देव्याः ।
३ A ०योग्येन सर्व्वेभ्यस्च श्रुतमिते । ४ B सकलेकोभ्योऽस्ति

अतीतानागतैर्बुद्धैर्मुनिभिः प्रत्युत्पन्नकैः[१] ।
मर्त्यलोकेषु सर्वेषु जम्बूद्वीपं प्रसिद्धकम् ॥
जम्बूद्वीपे विशेषेण आर्य्याव(र्त्त)त्तं प्रसि(सी)द्धकम् ।
आर्य्यावर्त्ते विशेषेण हेमाल(य)यं प्रसिद्धकम् ॥
हेमालये विशेषेण नेपालञ्च प्रसिद्धकम् ।
नेपाले च विशेषेण शम्भूक्षेत्रं प्रसिद्धकम् ॥
अनेकै देवताभिश्च त्रयस्त्रिंशैश्च कोटिभिः ।
सदा मुदाच[२] सम्पूर्णं शम्भूवस्य प्रसादतः ॥
त्रिसाहस्रे महालोके यद्वत्का(शि)शिं प्रवर्द्धकम् ।
तद्वत् शम्भोः प्र(सा)सादाच्च नेपालं गौरव(ड़)मपि ॥
प्रथमं शम्भुमुत्पन्नात् पश्चात् खगाननामपि ।
ततस्तीर्थैः[३] पीठैः(थैः) पूर्णात् काश्यापि च सुगौरवम्
इत्थं गुणमयं क्षेत्रं नेपालमण्डलमपि ।
अनेकैर्देवैः[४] सम्पूर्णं शम्भूरुत्पन्नमात्रकम् ॥
त्रिसाहस्रे महालोके नेपालसादृशं न हि ।
श्रीस्वयम्भूरुत्पन्नाच्च सर्वत्र गौरवं महत् ॥
इति मत्वा स भूपालः लघीया[५]त्रय चागतः ।
धर्म्मपत्न्या अपि चान्यैः कैश्चिच्छिष्यैः परिवृतः ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चः अन्त्यजातिभिः ।
तत्[६] गौडदेशजैः पुंसैः स्त्री(स्त्रि)भिश्चापि परिवृतः ॥

---

१ A प्रत्युत्पन्नैकं । २ D मुदाश्च । ३ D तततीर्थैः ।
४ D अनेकदेवैः । ५ D लघीया । ६ D तम् ।

नाम्ना चापि गौडराज्यं क्षेत्रेण च गुणेन च ।
त्रिसाहस्रमहालोके गौडात् गौडञ्च[1] ख्यापितम् ॥
एवं गुणमयं राज्यं शीघ्र[2]शीघ्रेण सन्त्यजेत् ।
तस्मात् गौडाच्च नेपाले समायातः प्रचण्डकः[3] ॥
प्रचण्डदेवभूपा(र)ल पत्न्या सह समागतः ।
विशेषेण च नेपाले शिष्यैश्चापि परिवृतः ॥
क्रमेण च क्रमायातः प्रचण्डदेवभूभुजाः ।
समायाताश्च नेपाले शम्भूवस्य सुक्षेत्रके ॥
शम्भूवः क्षेत्र आयातः श्रीशम्भूदर्शनं कृतम् ।
श्रीशम्भूदर्शनं कृत्वा तस्मै च पूजनं कृतम्
नानारागैः नानागीतैः नानोपचारकैरपि ।
पुष्पैर्धूपैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि ॥
तच्छिष्यैर्ब्राह्मणैः सर्वैः क्षत्रियैर्वैश्यशूद्रकैः ।
पञ्चोपचारविधिभिः पूजां कृत्वा च वन्दितम् ॥
पञ्चप्रणामकैः कैश्चित्[4] कैश्चिदष्टाङ्गप्रणामकैः ।
प्रचण्डदेवः पत्नीभिः नमयामास श(स)म्भूवे ॥
अथ प्रचण्डदेवस्य मनसि एकचित्तकम् ।
शम्भोश्च दर्शनाज्जातं पूर्णचन्द्रमिव मनः ॥
यद्वत् क्षीरनिधौ चन्द्रः समायातः पूर्णमपि ।
तद्वत्तन्मनसि जातमतिपुण्यात् पुण्यमनः[5] ॥

१ D गौड़ागौड़ञ्च । २ D शीघ्रं । ३ D समायातप्रचण्डकः
४ A कैचित् । ५ B पुण्येमनः ।

रागद्वेषसंमोहादि दशाकुशलकमपि।
तत्सर्वञ्च परित्यज्य उत्तमं बो(धि)धिं लभ्यते॥
इत्थं पूर्णगुणयुक्तं[१] प्रव्रज्याचर्य्यकं मनः।
[२][वज्रसत्त्वं गुरुं स्मृत्वा मञ्जुदेवस्य आगतः॥
तस्मै नमस्कृतं तेन सर्व्वज्ञानञ्च दर्शितम्[३]।
गुरुप्रणामादारभ्य प्रव्र(ज्य)ज्याव्रतमारभेत्॥
मञ्जुदेवप्रभावाच्च एकमेव स्वयं कृतः[४]।]
प्रव्रज्याचर्य्यकं कृत्वा वज्राचार्य्यपदं लभेत्॥
इति सञ्चिन्त्य भूपालः प्रचण्डदेवख्यापितः।
निश्चयं (शं)सम्भुवि तस्मिं प्रव्रज्याचित्तकं कृतम्॥
प्रव्रज्याचित्तकं कृत्वा स्वधर्म्मपत्निना सह।
कायवाक्चित्त एकेन प्रवज्यामपि स्वीकृतम्॥
प्रवज्यामपि स्वीकृत्वा तस्मै च विधिभिरपि।
यथा पूर्वगैः सर्वज्ञैः कृतं तद्वत्कृतमिति[५]॥
सर्वज्ञैरपि नाथैश्च यद्वत्प्रवज्यकं कृतम्।
तद्वत्प्रचण्डनाथेन शिषाच्छेदं स्वेन कृतम्॥
शिषाच्छेदं कृता पश्चात् भिक्षुचर्य्यपदं लभेत्।
भिक्षुचर्य्यपदं लब्धा(त्) वज्रा(जा)चार्य्यपदं लभेत्॥
वज्रा(जा)चार्य्यपदं लब्धा शान्तिकरं च नामकम्।

---

१ D ०गुणैर्युक्तम्। २ A B omit the portion bracketted.
३ D देशितं। ४ D मञ्जुदेवप्रसादाच्च एवमेव स्वयं कृता।
५ D कृतमपि।

प्रसिद्धेन जनैः[१] ख्यातं सर्वत्र लोकमण्डले[२] ॥
तेनापि पत्नि(त्नी)ना सार्द्धं रागोचर्य्यां कृतमपि ।
प्रतिदिने प्रतिरात्रौ श्रीस्वयम्भूं पूजनं[३] कृतम् ॥
श्रीस्वयम्भूं पूजनं कृत्वा नित्यपूजां(जा) प्रतिदिने ।
प्रातर्केऽपि च मध्याह्ने पञ्चोपचारपूजिकं(तं) ॥
सायंकाले दीपपूजां प्रतिदिने तथा कृतम् ।
नानापुष्पैर्नानाधूपैः नानागन्धैश्च दीपकैः ॥
नानानैवेद्यकैश्चापि अहर्निशं कृतं पूजां[४] ।
प्रदक्षिणाश्चापि कृत्वा च पञ्चप्रणामकैरपि ॥
प्रणामैश्चापि अष्टाङ्गैः प्रणिपत्य मुहुर्मुहुः ।
[५]धारणीन्विविधान्या(धा)ठान्महायानं सूत्रानपि[६] ॥
पाठ(थ)यामास भावेन शान्तिकर जगद्गुरुः ।
शान्तिकरस्त्विद्धाचार्य्य नामार्थेन च शादृशः ॥
सर्वेषामपि लोकानां शान्तिकृतां विनायकः ।
शान्ति[७]पौष्टिकं वश्यमभिचारकर्म्ममपि ॥
जम्भनं स्तम्भनमादि सर्वकर्म्मकृतां(ता) गुरुः ।
योगिनां योगविन्नाथः ध्यानिनां ध्याननाथकः ॥
मन्त्रिणां मन्त्रनाथ त्वं[८] प्रज्ञोपायस्वरूपिणी(णि) ।
सर्वेषामपि ज्ञानीनां देवासुरादिनामपि ॥

---

१ D जनैः ख्यातं ख्यातं सर्व्वत्रमण्डले । २ A C omit लोक० ।
३ D श्रीस्वयम्भूपूजनं । ४ B पूजां कृतम् । D कृतं पूजा अहर्निशम् ।
५ D धारणी विविधान् । ६ D महायानसूत्रानपि । ७ D शान्तिञ्च ।
८ D मन्त्रनाथस्त्वम् ।

शान्तिकर जगन्नाथ वज्रसत्वमिव स्थितः ॥
स धर्म्मपत्नि(त्नी)ना सार्द्धं(र्थं) अत्र नेपालमण्डले
शिष्यगणैः परिवृत्य शम्भूक्षेत्रं प्रतिस्थितम् ॥
शम्भूक्षेत्रं प्रतिस्थित्वा अत्र नेपालमण्डले ।
सर्व्वेषामेव सत्वानां शास्ता व(ज्र)जगुरुः स्थितः ॥
यथा मेरौ वज्रसत्व ध्यानेन संस्थित मुदा ।
तथैव शान्तिकृत् गुरुः[१] स्थितं भवति शं(सं)भुवि
गृहीत्वा च वज(ज्र)व्रतं पञ्चाभिज्ञपदं लभेत् ।
सर्व्वेषां वज्रिनां मध्ये एष शास्ता वजगुरुः[२] ॥
दिव्यं चक्षु दिव्यश्रोत्रं दिव्यघ्राणं तथापि च ।
परचित्तज्ञानञ्चापि पूर्व्वनिवासां(शां) च तथा ॥
एवं पञ्चाभिज्ञपदं संलभेच्छीघ्रबुद्धिना ।
तेन ततक्षणप्राप्तं च वज्राचार्य्यपदमपि ॥
गृहीत्वा स वज्रव्रतं[३] पञ्चाभिज्ञस्य तत्क्षणात् ।
ततः ख्यातः स भूवने वज्राचार्य्याखिलजनैः ॥
पूर्व्वजै दा(द)क्षिणजैश्च पश्चिमोत्तरजैरपि ।
अन्यद्दिग्देशजैस्सर्व्वैः मानितं पूजितं च सः ॥
अत्रजैर्म्मानवैः सर्व्वैर्ब्रह्मभिः क्षत्रियैरपि ।
वैश्यैश्च शूद्रकैः सर्व्वैस्तच्छेवां च सदा कृतम् ॥
तेन शासिना चापि शान्तिकरनामेन च ।
सदा मुदात्र नेपाले सर्व्वान् लोकान्सुलक्षितम्[४] ।

१ B शान्तिकृदाचार्य्यगुरुः । २ D जगद्गुरुः । ३ D ०पदम्
४ D सर्व्वांल्लोका सुलक्षितं ।

यथा सर्वज्ञनाथेन त्रैलोक्यं च सुलक्षितम् ।
[1][शान्तिकरेणाचार्य्येण लक्षितं सर्वदा तथा ॥
पितरावेकपुत्रे च[2] लक्षितं सर्वदापि च ।
तथैव तेन नाथेन नेपालं च सुलक्षितम् ॥]
तस्य पत्नी सती व्रती जननीव पतिव्रती ।
स्वभर्त्तृणा लक्षितं यद्वत्तद्वत्सापि लक्षितम् ॥
सा च शा(सा)न्तिकरपत्नी सर्वनेपालवासिनाम् ।
चतुर्वर्णजस्त्रीणां च गुरुमाता प्रसिद्धका ॥
सोऽपि शान्तिकराचार्य्य पत्न्या च सह सर्वदा ।
पञ्चोपचारविधिभिः (भि) खगान(ना)नां प्रपूजितम् ॥
पुष्पैर्धूपैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि ।
लेह्यैः पेयैः मद्यैः मांसैः खाद्यैः पानैस्तथापि च ॥
काले पर्वे दिने[3] रात्रौ तथा च पत्निना सह ।
खगान(ना)नां प्रपूजित्वा तस्मिन्नेपालमण्डले ॥
मध्यलक्ष्म्यादिकान्यान्या[4]नष्टावष्टौ तष्टावपि[5] ।
इति त्रिचक्रस्याकारान्नेपाले सुस्थितानपि ॥
पुष्पधूपादिभिः पूज्यैर्मद्यमांसादिकैरपि ।
इत्यं सर्वेषु पीथेषु सदापि पूजितश्च (स) सः ॥
शान्तिकरः आचार्य्यापि[6] पत्न्या सह शिष्यैर्वृतः ।

१ C omits the portion bracketted. २ D ०पुत्रैश्च ।
३ D पर्व्वदिने । ४ B पीठान् । D पीथान् । ५ D अष्टौ वष्टौस्तथावपि । ६ A माचार्य्या । D साचार्य्योऽपि ।

सदा रात्रौ च नेपाले सर्वपीठं(थं) प्रपूजितम् ॥
इति ज्ञात्वा च मानुष्या अत्र नेपालवासि(सि)नः।
ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च सर्वजातयः ॥
आचार्य्या आचार्य्यान्पूर्वै[१] अत्रजान्सर्वपीठ(थ)कान्।
सदा मुदा प्रपूजित्वा उत्तमं लभ्यते फलम् ॥
एकपीथप्रपूजाया नेकफलं प्रलभ्यते।
द्वौत्रयपीथपूजायाश्चक्रस्यापि तथापि च ॥
क्रमेण च संख्यया वा शान्ति पुष्टिश्च वश्यकम्।
इत्थं फलं प्रलब्ध्वा च मोक्षपदं[२] प्रलभ्यते ॥
शान्तिकराचार्य्यस्त्वाथ पत्न्या सह तत्र स्थिताः।
मनसि एकचित्तेन पुण्यम(ति)तिं समुद्भूतम् ॥
पुण्यम(ति)तिं समुद्भूताच्चित्तेन विचार्य्य कृतम्।
मनसा वा(व)चा कर्म्मेण एकचित्तश्च कारितम् ॥
तेनैकदा चिन्तितं [३][च वज्राचार्य्येण धीमता।
श्रीस्वयम्भो दर्शनाज्जातं करुणाविष्टमानसम् ॥
रजोऽभिरुद्धतैः सर्वैर्दशदिग्भिः समागतैः।
प्रतिदिने च रात्रा वा]च्छादितं शम्भुनाथकम् ॥
अयं श्रीशम्भुनाथस्य(स्य) रत्नसरजसंस्थितः।
जाम्बूनदवीजकोषे संस्थितं कृत्रिमं[४] न हि ॥
हिरण्यपत्रसंयुक्ते पञ्चरत्नेन संयुते।

---

१ A D आचार्य्यान्य वै। २ D ०फलं। ३ A omits च। C omits the portion bracketted. ४ D कृतिमं।

इत्थं शरजरत्ने च[1] संस्थितं शम्भूनाथकम् ॥
अशुचिभि रजोभिश्च समन्ततः प्रच्छाद्यते ।
तस्माच्च कारणादेव उपकारं किं क्रियते ॥
अथ वा चौरै धूर्तैश्च तस्करैश्च मूषैरपि ।
अस्मै च शम्भुनाथाय दुष्टकर्म्म कृतं भवेत् ॥
दुष्टकर्म्मकृता इत्थं शरजरत्नभग्नकृतम् ।
शरजरत्नभग्नाच्च चौरकर्म्म कृतं भवेत् ॥
अनागते भविष्येत्थं काले पापं कृतं जनैः ।
तस्मात् पापस्य भोग्याच्च नेपाले ईतिकं भवेत् ॥
तस्मिंश्च ईति(ती)कं जाताद्दुर्भिक्षञ्च अत्यद्भुतम् ।
दुर्भिक्षमत्यद्भूताच्च जनाः स्यु दुःखभागिनः ॥
अस्य (य)यः शम्भूनाथस्य गुञ्जमात्रकं[2] धातुकम् ।
अधर्म्मेण गृहीत्वा च रौरवं स ध्रुवं व्रजेत्[3] ॥
यत्र कलौ समायाते लोके पञ्चकषायिते ।
सर्व्वे लोका[4] दुराचारा भविष्यन्ति दुराशयाः ॥
महाभिमानिनो दुष्टा (लो)लाभिनः कामचारिणः ।
ईर्ष्या सर्वः प्रमत्ताश्च मात्सर्य्यव्याकुलाशयाः ॥
क्लेशाहङ्कारसर्वान्धा निर्विवेकाः प्रमोदितः ।
कामभोगातिसंरक्ता दशाकुशलचारिणः ॥
तस्मात् कलिर्महाघोरः[5] सर्वपापस्य साधकः ।

१ A शराजरत्नेव । २ D ॰मात्रञ्च । ३ A वजेत् ।
४ D सर्व्वलोकाः । ५ D ॰घोरैः ।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्म्मपराङ्मुखाः ॥
घोरे कलियुगे प्राप्ते विप्रा वेदपराङ्मुखाः ।
लोलुपाश्च कृतघ्नाश्च तथा मांसोपजीविनः ॥
ततः स्वल्पायुषः सर्वे भविष्यन्ति कलियुगे ।
स्वल्पायुत्वात् मनुष्याणां न विद्याग्रहणं द्विजाः ॥
विद्याग्रहणन्यूनत्वादधर्म्म वर्त्तते पुनः ।
व्युत्क्रमेण प्रजाः सर्वा म्रियन्ते पापतत्पराः ॥
ब्राह्मणाद्यास्तथा वर्णाः संकीर्य्यन्ते परस्परम् ।
कामक्रोधपरा मूढा वृथाहङ्कारपीड़िताः ॥
वद्धवैरा भविष्यन्ति परस्य धनलिप्सवः ।
ब्राह्मणाः क्षत्रिया वैश्याः सर्व्वे धर्म्मपराङ्मुखाः ॥
अल्पार्थाश्च भविष्यन्ति तपःसत्यविवर्ज्जिताः ।
सर्वे जना दयाहीनाः दक्षिणपरिवर्ज्जिताः ॥
उत्तमा नीचतां यान्ति नीचाश्चोत्तमतान्तथा ।
राजानश्चार्थनिरतास्तथा लोभपरायणाः ॥
धर्म्मकञ्चुकसंवीता धर्म्मविध्वंसकारिणः ।
घोरे कलियुगे प्राप्ते सर्व्वाधर्म्मसमन्विते ॥
यो योऽश्वरथमारूह्य स स राजा भविष्यति ।
किङ्कराश्च भविष्यन्ति शूद्राश्चैव द्विजादयः ॥
धर्म्मस्त्री नाभिरषन्ति परस्त्री हीनजाति च ।
द्विषन्ति पितरं पुत्रो गुरुं शिष्या द्विषन्ति च ॥
पतिञ्च वनिता द्वेषि(षी) कृष्णे कृष्णत्वमागते ।

लोभाभिभूतमनसः सर्वे[1] दुष्कर्मशीलिनः ॥
परा(न्ने)न्नलोलुपा नित्यं भविष्यन्ति द्विजादयः ।
परस्त्रीनिरताः सर्व्वे परद्रव्ये परायणाः ॥
मत्स्यामिषेण जीवन्ति दुग्धं[2] चाप्ययाचितम् ।
घोरे कलियुगे प्राप्ते नर धर्मपरायणाः ॥
असूयानिरताः सर्वे उपहासं प्रकुर्वते ।
स(लो)रित्तीलेषु कुद्दालैः लोपयिष्यन्ति औष(धि)धीः ॥
अल्पमल्पफलन्तेषां भविष्यन्ति कलियुगे ।
वेश्या लावण्यशीलेषु[3] स्पृहां कुर्व(ति)न्ति योषितः ॥
धर्मविघ्ना भविष्यन्ति स्त्रियस्तु पुरुषेषु च[4] ।
प्रायशः कृपणानाञ्च बन्धूनाञ्च तथा द्विजाः ॥
साधूनाञ्च सर्वेषाणां वित्तान्यपहरन्ति च ।
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ॥
न जपन्ति न होष्यन्ति हेतुवादैर्विनाशिताः ।
कुर्वन्ति दम्भार्थञ्च पितृयज्ञादिका क्रियाः ॥
अपात्रेषु च दानानि कुर्वन्ति च तथा नराः[5] ।
चौरोपाधिनिमित्तेन गोषु प्रीतिञ्च कुर्वते ॥
न कुर्वन्ति तदा विप्राः स्नानशौचादिका क्रियाः ।
अकारधर्मनिरताः कूट[6]युक्तिविशारदाः ॥
देवनिन्दापराश्चैव विप्रनिन्दापरास्तथा ।

---

१ D सर्व्वे । २ D दुष्टं । ३ D सीरेषु । ४ D पुरुषेण च ।
५ D तथा निलाः । ६ A D कुत० ।

न कस्यचिदभिमतो बुद्धभक्तिपरस्तथा ॥
देवपूजापरं दृष्ट्वा उपहासं प्रकुर्वते ।
दानयज्ञव्रतादीनां विक्रीणन्ति फलं द्विजाः ॥
प्रतिग्रहं प्रकुर्वन्ति चाण्डालादेव हि द्विजाः ।
पा(ख)षण्डिनो भविष्यन्ति चातुराश्रम्यनिन्दकाः ॥
न च (द्वि)जातिसुश्रूषां न स्वधर्म्मञ्च प्र(व)वरम्[१] ।
ब्राह्मणा क्षत्रिया वैश्याः भविष्यन्ति कलौ युगे ॥
गीतवाद्यपरा विप्राः वेदवाद्यपराङ्मुखाः ।
आत्मस्तुतिपराः सर्व्वे परनिन्दापरस्तथा ॥
विश्वासहीनाः पैशून्य वेददेवद्विजादिषु ।
पुराणविमुखाः प्रायो लोकपादरताः सदा ॥
नृत्यगीतपराश्चैव धर्म्मशून्याः नराः कलौ ।
तदा कथमयं श्रीमान् ज्योतिरूपः प्रभास्वरः ॥
रत्नपद्मासनासीनं एवं तिष्ठे जगद्धिते ।
नूनं यो लोभितो दुष्टो क्रोधव्याकुलमानसः ॥
इमं चैत्यं प्रतिक्षिप्य [२]रत्नान्याहरे सर्वदा ।
एवं भविष्यकाले च भविष्यति सुदी(र्घि)र्घके ॥
अत्रान्येवासी(शि)नः सर्व्वे अत्यर्थं दुःखभोगिनः ।
इति संचिन्त्य आचार्य्य मनसापि विचार्य्यकम् ॥
केन च कारणेनापि किं प्रकारञ्च मे कृतम् ।

१ D प्रवर्ज्जरम् ।   २ D रत्नान्याहरते सदा ।

इत्थं सर्वेषां रजसां निश्चयं वारणाय च ॥
आच्छाद्य श्रीप्रभाचार्य्यैः कृतं तद्विनिवारणम् ।
तस्याप्रकाशनपरः शि(र)लयाच्छाद्य गोपनम् ॥
महता प्रमाणेन[१] एकेनापि (प्र)च्छादितम् ।
पद्मगिरौ पर्वते च महाप्रमाणकेन च ॥
एकेन कि(की)ल शिलया श्रीशम्भू प्रच्छादितम् ।
श्रीशम्भूच्छादनं कृत्वा वज्राचार्य्येण धीमता ॥
च्छद्मिगुप्तं कृता पश्चा(व)द्वज्रकूटमिति स्मृतम् ।
एकं मञ्जुश्रियं कूटं एककूटं स्वयम्भुवम् ॥
[२][शान्तिकराचार्य्यर्द्धिना शयनवज्रमिव स्थितः ।
अचजैरन्यजैर्लोकैर्देवैश्च मानुष्यैरपि ।
अस्य पर्वतस्य नाम वज्रकूटप्रसिद्धकम् ॥]
शान्तिकराचार्य्यभावात्तत्र सर्वदेवागताः ।
त्रिसाहस्रात् महालोकाद्भवन्ति आ(सु)शुरा गताः
इन्द्रोऽपि च देवराजः अप्सरैस्सम्परिवृतः ।
समागताश्च नेपाले वज्रकूटे च पर्वते ॥
यदा शान्तिकराचार्य्यैः श्रीस्वम्भूं गुप्तं[३] कृतात् ।
ततस्तस्यामुपर्य्याश्च रत्नशि(ला)लां प्रस्थापितम् ॥
तस्यां शिलायां[४] उपरि त्रयोदशकोष्ठाद्बहिः ।
ईशस्याथ दिशि एकं विवरं संस्कृतं गुरुः ॥

---

१ D सम्प्रमाणेन । २ B has these three additional lines.
३ D श्रीस्वयम्भुगुप्तं । ४ D तस्या शिलाया ।

प्रथमस्तृह्निभावेन महच्छिलयाच्छादितम्।
पश्चाद्रत्नशिलयापि चयोदशविवरं कृतम् ॥
ये च या वा तस्मिं विवरे रत्नादिस्वर्णरूप्यकान्।
पातितं श्रद्धया सर्वान् सच्छ्रया लभ्यते फलम् ॥
तस्मिञ्च पातितं वस्तु स्वर्णादिरत्नरूप्यकान्।
श्रीस्वयम्भोः शिरसि पुष्पवत्पातितं भवेत् ॥
इति मत्वा चयस्त्रिंशे[1] शक्रादिनाकदेवताः।
नानारत्नाञ्जाम्बूनदानञ्जलिमच पातितम् ॥
धृतराष्ट्रः सगन्धर्वैः कुम्भाण्डैश्च विरूढकः।
विरूपाचः सनागैश्च वैश्रवण यचैः सह ॥
चन्द्रसूर्य्यः सनचत्रैरग्निवायुर्वसुन्धरा।
स्वस्वगणैः सार्द्धं विवरे पूजितं सदा[2] ॥
यामेशो यामदेवैश्च तुषितेश तुषितैरपि।
निर्म्माणरती(ति)श निर्म्माणैः वशवर्त्ती(र्त्ति)श वशवर्त्तिभिः ॥
ब्रह्मपार्षद्यः पार्षद्यैः ब्रह्मकायिकः कायिकैः।
ब्रह्मपुरोहितैश्च महाब्रह्मा सब्रह्मभिः ॥
परी(रि)त्ताभः परी(रि)त्ताभैः प्रमाणाभ प्रमाणभैः।
आभास्वर आभास्वरैः सुदर्शनः सुदर्शनैः ॥
अकनिष्ठ अकनिष्ठैः देवराजः समागताः।
वज्रकूटे पर्वते च दशदिग्भ्यः समागताः ॥
ते चागताः नाकदेवाः विवरं दर्शनं कृतात्।

---

१ D चयत्रिंशे। २ D पूजितश्च सदा मुदा

असंख्यैर्रत्नाञ्जलिभिः विवरे च सम्पातितम् ॥
इत्यश्चैत्यसुविवरे श्रीस्वयम्भू पूजा कृतम् ।
पुनः पुनः प्रणिपत्य पूर्ववच्च सुगौरवम् ॥
अथ शान्तिकराचार्य्यः पत्निना सह संस्थितः ।
तत्र गत्वा सर्वदेवास्तद्दर्शनं मुदा कृतम् ॥
पुष्पै धूपैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि ।
अमृतादिभिः पूज्यैश्च शान्तिकरञ्च पूजितम् ॥
शान्तिकरं प्रपूज्या(च)च्च देवराजं पुरन्दरः[१] ।
विज्ञापितं शान्तिकरं सर्वदेवराजैर्वृतः ॥
भो शान्तिकराचार्य्य भवतोऽपि कार्य्यञ्च किम् ।
अस्मभ्यो वचनं देव देहि प्रयोजनञ्च किम् ॥
आज्ञाञ्च तवास्ति कार्य्यं (क्री)क्रियते किं मया प्रभो ।
एवमुक्तेऽपि च सद्य शान्तिकर वज्रगुरुः[२] ॥
इन्द्रादित्रयोदशा(श्च)ञ्च देवानुवाच शीघ्रकम् ।
इन्द्रादय देवराजाः शृणुध्वम्मम कार्य्यकम् ॥
स्वयम्भूपरि शिलायां एकचैत्यप्रस्थापनाम् ।
पात्राकृतिलक्षणेन युक्तेन च मया कृतम् ॥
इति ज्ञात्वा मम यूयं शीघ्रं कुर्वन्तु साम्प्रतम् ।
अथ तस्य वचः श्रुत्वा देवेन्द्र स्वर्गभोगकम्[३] ॥
त्रयोदशानपि देवान् लोकपालानुवाच[४] स ।

---

१ D देवराज पुरन्दरः । २ D शान्तिकरञ्च जगद्गुरुम् ।
३ B ०भोज्यकं । ४ A उवाचः ।

भो देवा लोकपालाश्च विश्वकर्मागणापि च ॥
शान्तिकृत् स्थाप्य शि(शी)लायामुपरि चैत्यकमपि ।
पाचाकृतिलक्षणेन यूयं शीघ्रं विकुर्वध्वम् ॥
सौवर्णादिभिर्युक्तैश्च कुर्वध्वं साम्प्रतमपि ।
एवमुक्ते च सद्योऽपि विश्वकर्मादय गणाः ॥
सञ्चिन्त्य लोकपालैश्च सामग्रीञ्च सज्जीकृतम् ।
इष्टकान्विविधाञ्चापि अनेकान्[१] काष्ठकानपि ॥
मृत्तिकादि[२]विविधाश्च जाम्बूनदादिधातुकान् ।
प्रथमं देवराजेन सम्यक् परिलक्षणम् ॥
स्वयम्भूपरिचैत्यञ्च कृताय चिन्तितं भवे ।
ततोऽपि यक्षराजेन यक्षगणैः परिवृतः ॥
स्वयम्भूचैत्यकृताय पूजां करोति मृत्ति(ति)कान् ।
वरुणोऽपि नागैस्सार्द्धं संगृह्य सुवर्णघटम् ॥
जलेन मृत्ति(ति)काञ्चापि सम्परिमेडितं कृतम् ।
विष्णुरपि देवराजः राढाभिश्च परिवृतः ॥
इष्टकाकृताय च तस्मै मृत्पिण्डं (च) प्रानयेत् ।
यमादिदेवराजश्च किङ्करैश्च परिवृतः ॥
स्वयम्भूचैत्यकृताय इष्टकान् कारितं मुदा ।
वायुरपि देवराजः स्ववृत्तिभिः समन्ततः ॥
सर्वञ्च इष्टकाञ्चापि [३][संशुष्यति विशेषतः ।

---

१ D अनेका ।        २ D मृतिकादि ॥
३ C omits the portion bracketted.

…यमराजः राक्षसैश्च परिवृतः ॥

असंख्ये

खड्गादिशस्त्रहस्तेन इष्टकाश्च उत्थापितम् ।

विश्वकर्म्मादयो देवाः इष्टिकान्तान् ] पूजां कृतम् ॥

सम्यक् सर्वं समानीय अग्निदग्धञ्च सङ्कृतम्[१] ।

अग्निरपि लोकपालः स्वशक्तिभिस्समन्ततः ॥

सर्वाञ्च इष्टिका(चा)श्चापि संदाहति समन्ततः ।

ईशानश्च महादेवः स्वगणैश्च परिवृतः ॥

सर्वाञ्च इष्टिकाश्चापि[२] समानीयोऽत्र पर्वते ।

इत्थं सर्वदेवलोक दैत्यमर्त्यगणैरपि ।

शान्तिकरस्य भावाच्च तत्र चैत्यमित्थं कृतम् ॥

प्रथमं विश्वकर्म्माभिः देवताभिः करसंकृतम्[३] ।

सब्रह्मादिभिर्देवैश्च यष्टिकारोपणं कृतम् ॥

चन्द्रसूर्य्यादितारभिस्तदुपरि गलं कृतम् ।

नेत्रयुग्मा(भि)दिसुवर्णतिलकं संदधाति च ॥

तस्योपरि हरिपट्टाश्चतुराजैः[४] कृतं मुदा ।

स्वस्वगणैः परिवृत्य विश्वकर्म्मैश्च(च) संस्कृतम् ॥

प्रथमं चक्रं त्रयस्त्रिंशैः देवैः सगणैरपि ।

जाम्बूनदादिसुवर्णैः विश्वकर्म्माभिः संस्कृतम् ॥

द्वितीयचक्रं यामेशः यामगणैः परिवृतः[५] ।

१ D संस्कृतं । २ D सर्व्वाश्च इष्टिका चापि । ३ D ०संस्कृतः

४ D हरिपट्टा चतुराजैः । ५ B परिष्कृतः ।

तथैव संस्कृतं तच्च सर्वमन्ततः(पः) प्रशोभितम्[1] ॥
तृतीयचक्रं तुषितेशस्तुषितैश्च देवगणैः।
सम्यक्कुर्वन्ति चक्रं च[2] महाप्रमाणकमपि ॥
चतुर्थं निर्म्माणरतिर्देवैश्चक्रं सुसंस्कृतम्।
सर्वं निर्म्माणरतिभिः सुशोभितञ्च कारितम् ॥
पञ्चमं परनिर्म्मितवशवर्त्तीश संस्कृतम्।
सर्वं वशव(र्त्ति)र्त्तीभिश्च सार्द्धं दृत्यं कृतमिति ॥
षष्ठमं ब्रह्मपार्षद्यः स्वभूवनगणैः सह।
चक्रञ्च विविधं नूनं तस्मिं चैत्य मुदापि च ॥
सप्तमं ब्रह्मकायिकः कायिकगणैश्च परिवृतः।
विचित्रं कृतं चक्रञ्च मुदा चैत्यगलमपि ॥
अष्टौ ब्रह्मपुरोहितः देवैश्चापि सुसंस्कृतम्।
विविधविचित्रेणापि अत्यर्थञ्च सुशोभितम् ॥
[3]नवमञ्च महाब्रह्मा शोभितं नमस्कृतं सदा।
[4][विचित्रं रचितञ्च भ्रमेन[5] सुमनोहरम् ॥
दशमं परित्ताभश्च परित्ताभगणैरपि।
कृतञ्च विचित्रं चक्रं समन्ततः शोभितम् ॥]
एकादशमप्रमाणेशो प्रमाण [6]सगणैरपि।

१ D सर्व्वमन्तप्रशोभितम्। २ A omits च।
३ B नवमञ्च सद्ब्रह्माभिः ब्रह्मगणैः परिवृतः। ४ A omits the portion bracketted. ५ D विचित्रं रचितं चक्रं भ्रमेण।
६ A omits स०।

नूतनं कृतं चक्रञ्च सुशोभितं समन्ततः ।
द्वादशञ्चाभास्वरेण:[1] खचेचगणैश्च सह ॥
चक्रं सुवर्णरचितं भिंश(न)र शोभितेन च ।
त्रयोदशं चक्रावलिं सुदर्शनेश्वरेण च ॥
सुदर्शनगणैस्सार्द्धं भिशञ्च कृतं शोभितम् ।
तत नाकादकनिष्ठेशो ॥
कनिष्ठगणैस्सार्द्धं भिशेन कृत शोभितम् ।
ततश्चा(न्ये)न्यदकनिष्ठेशो कनिष्ठगणैरपि ॥
विश्वमणिखचितञ्च अत्यर्थं शोभितेन च ।
तदुपरि सुखावत्या ईश अपरमितायुषः ॥
स आदि सर्वज्ञनाथः कृतं च्छत्रं सध्वजकम् ।
विश्वकर्म्मा देवनाथश्चतुर्दिक्षु[2] तथागतान् ॥
स्थापयामास मोदेन चतुतारागणापि च ।
पूर्व्वेऽक्षोभ्यञ्च रत्नेशं दक्षिणे चामिताभकम् ॥
पश्चिमे चोत्तरे चाप्यमोघसिद्धिजिनानपि ।
लोचना मामकी तारा पाण्डरामार्य्यतारिका[3] ॥
चतुर्विदिक्षु संस्थाप्य प्रस्थापितं शान्तिक(रं)रः ।
इत्थं सम्पूर्णं कृताच्च वज्राचार्य्यः शान्तिकरः ॥
सधर्म्मपत्नी[4]शिष्याभ्यां विधिविधानकैरपि ।
प्रतिष्ठादि कृतं यज्ञ[5]पूर्णञ्च विस्तरम् ॥

---

१ B आभास्वरेसः । २ A ०श्चतुर्दिक्षु । ३ B पाण्डरार्य्यतारिका, D पाण्डरा आर्य्यतारिका । ४ D सद्धर्म्मपत्नी० । ५ B D यज्ञसंपर्णाञ्च ।

श्रीस्वयम्भूं पूर्वनाम्ना सञ्चकार जगद्गुरुः ।
अथ नेपालजैर्लोकैरन्यत्रत्रजकैरपि[1] ॥
मञ्जुश्रीकृता नाम्ना च धर्मधातुं प्रईरितम् ।
सोऽयं धर्मधातुनाथस्तस्माच्च अत्र वा(ग्नि)सिभिः ॥
नानोपचारविधिभिः अ(स्त)द्धा मुदा प्रपूजितम् ।
पुष्पै धूपैश्च दीपैश्च गन्धैर्नैवेद्यकैरपि ॥
समन्तत दीपमालाभिः च्छत्रैर्ध्वजैर्वितानकैः ।
दिग्मालाभिः पताकैश्च नानाविधिभिर्विस्तरैः ॥
प्रतिदिने प्रतिरात्रौ तस्मै सदा प्रपूजितम् ।
अत्रजैरन्यजैश्चापि मनुजादय मानवाः ॥
नाकजैः पातालजैश्च सदा तस्मै प्रपूजितम् ।
कृतं स्तूपं लक्षणाय स्वयम्भुवे महात्मना ॥
इत्थं स्तूपाकृति सोऽयं मैत्रेय शृणु दृश्यते ।
तदन्तरमैत्रेय चैत्यं पुच्छाग्रपर्वते ॥
शान्तिकर आचार्योऽपि कृतं पुच्छाग्रपर्वते ।
अनेककर्मभिर्युक्तं मञ्जुश्रीधातुकोपरि ॥
गोपुच्छाख्यश्च सुचैत्यं[2] कृतं लक्षणभूषितम् ।
दशभि(र्लो)र्लोकपालैश्च तस्य सर्वं कर्म कृतम् ॥
विधिविधानकैश्चापि पुच्छाचैत्यकर्मपिः[3] ।
विश्वकर्माभिर्देवैश्च तच्चैत्यस्य सुलक्षणैः ॥

---

१ A अथ नेपालकैरन्यत्तत्रजकैरपि । २ D गोपूच्छाख्यं सुचैत्यञ्च ।
३ B पुच्छाग्रं चैत्यं कर्म्मग्रपि ।

युक्तं[१] कृतं विधिभिश्च समन्ततः सुशोभितम् ।
चन्द्रोपरि कलेशञ्च चतुर्तायागतानपि ॥
तच्चोपरिग(ल)रश्चापि न च चक्रं तच्चोपरि ।
तच्चोप(लि)रि उष्णीषञ्च सर्वलक्षणसंस्कृतम् ॥
नवनाकविशुद्धत्वा[२]न्नवचक्रञ्च संस्कृताम् ।
अतीता प्रत्युत्पन्नानां त(ता)थागतानां धातुके ॥
नवचक्रप्रयुक्तेन विश्वकर्म्मचैत्य कृतम् ।
शास्त्रोक्तविधिविधानैः स आचार्य्यः शान्तिकरः ॥
प्रतिस्थादिकं सम्पूर्णं चैत्यं पुच्छाग्रकमपि[३] ।
हे वज्रमपि गुह्येशं भैरवं नागराजकम् ॥
इत्थं सम्पूर्णयुक्तेन पुच्छाग्रे च संस्थापितम् ।
अतोऽपि नागलोकैश्च अत्रजैरन्यजैरपिः ॥
नानोपचारविधिभिः सदा मुदा प्रपूजितम् ।
पुष्पैर्धूपैश्च गन्धैश्च दीपैर्नैवेद्य(द्यै)चूर्णकैः ॥
अनेगविधिभिश्चापि तस्मै सदा प्रपूजितम् ।
योऽपि या वा मनुष्यैश्च तस्मिं शेवां सदा कृतम् ॥
तस्य पुण्यप्रशादाच्च मोक्षपदं प्रलभ्यते ।
मञ्जुदेव शास्ता पत्नीभ्यामृद्धा चापि चीनं गता ॥
तथागतप्रशादाच्च राजहंसा इव गता ।
इति ज्ञात्वा च मानूष्याः अत्रजा अन्यजा अपि ॥

१ B युक्ति । २ D ०विशुद्धात्मा । ३ D चत्यपूजाग्रक्रमपि

सदा मुदा तस्मै चैत्यं पूजां कृतं मुदा अपि ।
ततोऽपि च स आचार्य्यः शान्तिकर जगद्गुरुः ॥
एकं चै(त्य)त्यं प्रतिष्ठाप्य मञ्जुदेवस्यावाशते[1] ।
प्रतिष्ठादिविधिश्चापि शास्त्रोक्तविधिना अपि ॥
शान्तिकरः स आचार्य्यः इत्यं चैत्यं(त्य) कृतमिति ।
यत्र मञ्जुदेवाचार्य्यः मण्डलं स्फारितं कृतम् ॥
धर्म्मश्रीनामभिचव अर्थदत्तदिचाकृतात् ।
इत्यं द्वादश अर्थानां अर्थं(र्थे) दश्याय च अपि ॥
सकृतमण्डलपृष्ठे एकचैत्यं प्रथापितम् ।
वज्रधातुलचणेन एकं(क) चैत्यं प्रथापितम् ॥
देवतारभि[2](स)स्संयुक्तं समन्ततः सुशोभितम् ।
यत्र मञ्जुदेवकृते मञ्जुश्रीमण्डले इति ॥
पूजां कृतं ये च या वा नानाविद्या प्रलभ्यते ।
मञ्जुदेवकृतेनापि मञ्जुश्रीदेव स्थापितम् ॥
धर्म्मधातुवागीश्वरं मञ्जुश्रीमण्डलमिति ।
इति तस्मिं मण्डले च अत्रजा अन्यजा अपि ॥
मानूष्या अपि तस्मिं च सदा मुदा पूजां कृतम्[3] ।
पुष्पैर्धूपैश्च गन्धैश्च दीपैर्नैवेद्यकैरपि ।
अक्षरैर्लिखितै स्तोत्रैः पूर्वोक्तेन पूजा कृतम् ॥
ये च या(ये) वा मनुष्याश्च दैत्याश्च नाकजा अपि ।

१ B ०सके । २ B देवतालेभिः । ३ D मुदां पूजा कृतं

सदा तस्य प्रपूजित्वा सर्वविद्या प्रलभ्यते ॥
शिल्पं तुलादि उद्धारं लि(रि)पि अचरं चित्रकम् ।
ग्रन्थं श्लोकं कृतं सर्वं तस्य प्र(प्रा)सादा सिद्धकम् ॥
इति मत्वा च म(मा)नुष्याः सर्वं विद्याः प्रलाभिने ।
तस्मिं च सर्वदा कालं धारणीभिश्च पूजितम् ॥
देवा वशन्ति धारिण्या सर्वदेवा मञ्जुश्रियः ।
तस्मात्तस्मै प्रपूज्याय धारणीं विविधिं(धि) पठेत्
धारणीं पा(प)ठपूजायाः सर्वसिद्धिं प्रलभ्यते ।
इत्थं ज्ञात्वा च मानूष्याः तस्मिं सदा प्रपूजितम्
अतीतानागतैर्बुद्धैः प्रत्युत्पन्नैस्तथागतैः ।
अत्रान्यजैर्मानूष्यैश्च तस्मिं सदा प्रपूजितम् ॥
ततः प्रभृति अस्यैव[1] गोश्टङ्गपर्व(र्व)तमपि ।
मञ्जुश्रीशम्भुचैत्यो च गोश्टङ्गौ इव (सं)स्थितौ ॥
ततः पश्चात्स आचार्य्यः पञ्चपूरिं[2] प्रथापितम् ।
पञ्चकर्म्म प्रसिद्धाय सम्यक्पूरिं कृतादपि[3] ॥
शान्तिपूर्य्यां[4] महावीरः सम्बरो जग(दि)दीश्वरः ।
वसुन्धरा वसुपुरे वह्निर्वह्निपूरे शुभे ॥
नागपूर्य्यां(र्य्या) च वरुणः वायुः [5]पूर्य्यां वायुपुरे इति ।
पञ्चभूतात्मदेवाश्च भावेन थापितं गुरुः ॥

१ D अस्मै च । २ D ०पूरं । ३ D कृतादथ
४ D ०पूर्य्यां । ५ B omits पूर्य्यां, D वायुपूर्य्यां ।

अपि च ।

पूर्वं शान्तिकराचार्य्यः शान्तिपुरं प्रथापितम् ।
महाप्रमाणं च गृहं चतुर्दिचु सुशोभितम्[१] ॥
पूर्वपश्चिमव्यायामं पूर्वाभिसंमुखमपि ।
दक्षिणोत्तरआयामं सर्वत्र विवरं नहि ॥
एकद्वारेण शोभञ्च गवाक्षानञ्च कानपि ।
महाप्रमाणयुक्तेन समन्ततः सुशोभितम् ॥
सुवर्णपट्टसंयुक्तं उपरि भूषितं पुरीम्[२] ।
कनकखचितमपि स्वर्णध्वजैरलंकृतम् ॥
अनेकैः पटाकैर्युक्तं घण्टैश्चापि समन्ततः ।
शोभितञ्च समन्तेन शान्तिपुरीं(री) प्रसिद्धकम् ॥
अभ्यन्तर[३]नवकोष्ठे मध्ये सहस्रभूजकम् ।
महावीरसम्बरञ्च प्रज्ञोपायञ्च स्थापितम् ॥
ये च या वा मनुष्याश्च तस्मिं पूजाविधिं(धि)कृतम् ।
शान्त्यादिफलं लब्धाच्च मोक्षफलं प्रलभ्यते ॥
द्वितीयं वसुपुरञ्च शम्भुवोग्रे[४] प्रस्थापितम् ।
सुवर्णध्वजसंयुक्तं एकपूरं प्रस्थापितम् ॥
श्रीवसुन्धराञ्च देवीं अम्भरेण सह किल(लः) ।
शा(सा)न्तिकरः सिद्धाचार्य्यः इत्थं पुरं प्रस्थापितम् ॥

---

१ D चक्षुर्भिक्षुशोभितम् ।   २ D उपरी भूषितं पूरी ।
३ D अभ्यन्तरे ।   ४ B शम्भुभोग्रे ।

मनुष्याः ये च या तस्मै धान्यादिव्रीहि पूजितम् ।
ते च फलं सुसम्प्राप्ता धान्यादिव्रीहि सम्पदम् ॥
तृतीयं वायुपुरञ्च शम्भूनैऋत्ये(त्य)स्थापितम् ।
वायुभैरवं सशक्तिं[१] महाकालस्वरूपकम् ॥
ये च या वा मनुष्याश्च हिंस्कादिविधि पूजितम् ।
तस्मात्पुण्यप्र(शा)सादाच्च तिर्य्यकं न प्रलभ्यते ॥
चतुर्थमग्निपुरञ्च वह्निदेवप्रस्थापितम् ।
तस्याग्नेः प्रभावाच्च जातु औपद्रकं न हि ॥
ये च या वा मनुष्याश्च मद्यमांसैः प्रपूजितम् ।
तस्य पुण्यप्र(शा)सादाच्च वह्निभयं न हि कदा ॥
पञ्चमं नागपुरञ्च वरुणादिनागराजकान् ।
स्थापितं विधिभिः नूनं शान्तिकरजगद्गुरुः ॥
ये च या वा मनुष्याश्च दुग्धादिसुपञ्चामृतैः ।
नागेभ्यस्तेभ्यः पूज्याच्च अत्र वृष्टिदोषं न हि ॥
इत्थं पञ्चगणैर्युक्तं पञ्चपुरं(र) प्रपूजितम् ।
तेषां पुण्यप्रसादाच्च फलञ्च संप्रलभ्यते ॥
[२][शान्तिं पुष्टिञ्च वश्यं(च) अभिचारञ्च जम्भनम् ।
तत्सर्वं फल सम्प्राप्ता भवन्ति मनुजादयः ॥
पृथक् पुरं प्रपूज्याच्च(च) पृथक् फलं प्रलभ्यते ।]

---

१ D ०भैरवसंशक्तिं ।

२ C omits the portion bracketted.

सर्वपुरिं प्रपूज्याच(च्च) सर्वफलं प्रलभ्यते ॥
इति मत्वा च मनुष्याः अत्रजा अन्यत्रजापि च।
सदा मुदा तृणेनापि[१] पञ्चपुरिं(रं) प्रपूजितम् ॥
इत्थं पञ्चपुरादीञ्च संस्थापितं जगद्गुरुः(रुं)।
शान्तिकरः[२] सिद्धाचार्य्यः मोदेन च पत्न्या सह ॥
ततस्तत्र वज्राचार्य्यः शान्तिकरः सिद्धगुरुः।
षष्ठमञ्चापि[३] भैरवं शीघ्रं संस्थापितं ननु ॥
प्रथमं शान्तिपुरस्य दक्षिणस्यान्दिशि अपि।
पृथ्वीभैरवं[४] किलेन संस्थापितं जगद्गुरुः ॥
द्वितीयं शम्भुवः पूर्व[५]मार्गे च उपरे अधः।
अग्निभैरवं[६] वह्निं देवं तत्रापि स्थापितं गुरुः ॥
तृतीयं पर्वतस्याधो[७] पूर्वे चापि दिशि किल।
तेजभैरवं पातालो(रा)ख्यं स्थापितञ्च जगद्गुरुः ॥
चतुर्थं तत्पर्वतस्य नैऋत्यां विदिशि वने।
वायुभैरवं द्वाराख्यं संस्थापितं जगद्गुरुः ॥
पञ्चमं तत्पश्चिमायां दिशि पर्वते खभैरवम्।
स्फोस्याख्यञ्च भैरवञ्च[८] संस्थापितं शान्तिकरः ॥
इति पञ्चभैरवं ये विधिभिश्च प्रपूजितम्।

१ B भृणेनापि। २ D शान्तिकर। ३ D षष्ठमस्यापि।
४ A पृथिभैरवं। ५ D पूर्व्वे। ६ C अग्नितं भैरवं। D अभैरवं।
७ A पर्व्वतस्याधे। ८ A omits भैरवञ्च and reads फोस्याख्यञ्च।

विशेषैः कार्त्तिक[1]मासे पूर्णमास्यां दिनेऽपि च ।
पञ्चव्रीहिं प्रक्षिप्तेन प्रदक्षिणां[2] मुदा कृतम् ॥
अनेकवाद्यान्वाद्यैश्च धारणीभिश्च स्तोत्रकैः[3] ।
प्रदक्षिणानसंख्येया(व)न्वकुफलं प्रलभ्यते ॥
अत्रजा अन्यजा लोकाः तेस्माद्धंत्र प्रदक्षिणाम् ।
ये च या वा मुदा कृत्वा तेषां विघ्नन्दूरीकृतम्[4] ॥
इत्थं गुणमये क्षेत्रे सदा मुदा सुवाशिताः ।
त्रयः पूर्वं त्रिभिः कोत्य देवाश्च तत्र वाषि(शि)तम् ॥
ततः प्रभृ(भि)तिरित्येवं त्रिदशादय नाकजाः ।
मर्त्यपातारजा लोकाः सदा तत्र सुवाशितम् ॥
पूर्वाश्च अधिकेनैव देवतास्त(त)त्र वासिताः ।
श्रीस्वयम्भूं जगन्नाथं सदा पूजां(जा) कृतमिति ॥
पुष्पैर्धूपैश्च दीपैश्च गन्धैर्नैवेद्यकैरपि ।
चूर्णैश्छत्रैर्ध्वजे चापि विविधैश्च पटाककैः ॥
इत्यथं गौरवेणापि इन्द्रादिनाकजापि च ।
प्रतिदिने प्रतिमासे पूजामत्यर्थकं कृतम् ॥
इति ज्ञात्वा युवां शिष्यान् तस्मै चैत्याय शं(भु)भूवे ।
सदा मुदा प्रपूज्या(च)च्च सुखावतीपदं लभेत् ॥
त्रिसाहस्रे महालोके तत्क्षेत्रसादृशं न हि ।

---

१ D कार्त्तिके । २ D ०व्रीहि...प्रदक्षिणा ।
३ D ०भीष्टस्तोत्रकैः । ४ D विघ्न दूरीकृतम् ।

श्रीस्वयम्भूसम्प्रजाताद्दुग्धाज्जातं घृत(ता)मिव ॥
एवं मैत्रेय काले श्रीकाश्यपस्य महामुनेः ।
शान्तिक(र)रः नामाचार्य्यः प्रशुश्च स्वबुद्धिना ॥

राज्ये सुशोभितबले सविलासयुक्ते
नाकेऽपि दुर्लभपदे सुरलोकज्येष्ठे ।
शम्भोर्गुणमहिमां प्रश्रुता[1] जना ये
सन्तिष्ठन्ते सुभगुणे श्रीगुणेन[2] युक्ते ॥

इति श्रीमति बृहत्स्वयम्भूपुराणे गोशृङ्गपर्वते धर्म्मधातु-
वागीश्वरगुणोऽध्यायः सप्तमः ॥

१ D शम्भो गुणमहिमां प्रसुता । २ D omits श्रीगुणे ।

# अष्टमोऽध्यायः ।

अथातः सम्प्रवक्ष्यामि नेपालस्य च साम्प्रतम् ।
सिद्धभूमेर्महद्भावं शृणु मैत्रेय सादरम् ॥
ऋद्धिस्फीतंश्च क्षेमंश्च रमणीयंश्च[१] सर्वदा ।
सुभिक्ष्यो(क्षो) बहुलोकाश्नो नेपारश्च निरामयः ॥
अनेकैः सुजनोपेतः नानामङ्गलपूरितः ।
प्रासादाच्छ्रीस्वयम्भुवः न जातु ईत्युपद्रवम् ॥
अनेगा ब्राह्मणाश्चापि क्षत्रिया वैश्यजातयः ।
शूद्रादय अत्रजाश्च अन्यदेशजजातयः ॥
पौर्वजा दक्षिणजाश्च पश्चिमा औत्तरा अपि ।
चतुर्दिग्भ्यः समायाताः सदा शम्भू प्रपूजितम् ॥
काले काले दिने वर्षे समायाता चतुर्दिशात्[२] ।
अत्र नेपालदेशेऽपि श्रीस्वयम्भू प्रपूजितम् ॥
पूर्वोक्तेन प्रकारेण तीर्थजात्रां सदा कृतात्[३] ।
पीथाश्चापि[४] विधिं पूज्यात् विशेषै शम्भू पूजितम् ॥
प्रतिदिने प्रतिमासे अत्र नेपालवासिभिः ।
सदा मुदा धर्मधातुं श्रीस्वयम्भूं[५] प्रपूजितम् ॥

---

१ D स्फीटश्च क्षेमश्च रमणीयश्च । २ D चतुर्द्दिशं ।
३ D ०जात्रा सदा कृताम् । ४ D पीथा चापि विधिपूज्यात् ।
५ D स्वयम्भू ।

पञ्चोपचारविधिभिः शुद्धाभि[1]र्लेपनैरपि ।
दीपमालादिभिर्दीपैः महादीपैरपि मुदा ॥
यज्ञपाठादिभिस्तोत्रैः विधिविधानविस्तरैः ।
प्रतिदिने प्रतिरात्रौ तदाग्निनः प्रपूजितम् ॥
अथापरेण कालेन दुर्भिक्षं तत्र प्राप्तवान् ।
सप्तसंवत्सरं च्छेदं वृष्टिदोषं जलामयम् ॥
वर्षाकाले सरत्काले हेमन्ते शिशिरे(ले) अपि ।
वसन्ते च ग्रीष्मकाले न जातु वृष्टिकमपि ॥
पूर्वे गुणमये क्षेत्रे मङ्गलेन सुपूरितम् ।
कदाचिदपि काले च सप्तवर्षे[2] न वृष्टिकम् ॥
वृष्टिभावं विना यस्मात् अत्र नेपालमण्डले ।
महतीति उपद्रवां वृष्टिदोषाच्चसमुद्भूतम्[3] ॥
इत्थं वृष्टेर्विनाभावात् अत्र नेपालवासि(सि)नः ।
चतुर्वर्णादयः लोका दुर्भिक्षमपि प्रापिताम् ॥
दुर्भिक्षं प्रापिताश्चापि स्त्रियो वा पुरुषो अपि ।
मानूष्याश्च पशवश्च अत्यर्थं दुःखपीडिताः ॥
अत्र नेपाल(जा)जाः सर्वे अन्यत्रादागता अपि ।
तत्र च वासिनः सर्वे महद्दुःखञ्च प्रापिताः ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च अन्यजातयः ।
वृष्टिदोषसमायुक्तात् सुष्ठु दुःख(च)ञ्च प्रापिताः ॥

---

१ D सुधाभिः ।  २ D ०बर्षं ।  ३ D ०दोषाच्च समुद्भूतं ।

तत्र कालेऽभवद्भूय गुणकामदेवो महान् ।
स चान्नविरहाल्लोके दुःखमुग्रमवाप्नुतः ॥
धर्म्मवान् गुणवान् शीली सुगतानां सुसे(वि)वकः ।
एकदिने स नरेश महत्प्रासाद उपरि ॥
एकाकी आसने स्थित्वा वामहस्तकपोलकम् ।
स्थापिता एकचित्तेन एकश्च ध्यानध्यायिणम् ॥
धिग्मां संसारराजत्वं मयापि भोजनं कृतात् ।
सर्वेषां प्रजानां[१] नाभोग्यं राज्ये स्थितेन किं कृतम् ॥
हस्ताद्यवयवोप्यस्ति श्रुत्वा दृष्ट्वा च किं कृतम् ।
सर्वप्रजासुखत्वाय असमर्थ वित्तेन च ॥
धिग्मां धिग्मां सुदुःखीनां प्रजानां पालने न हि ।
इति दुःखं विचिन्त्य स[२] प्रासादोपरिसंस्थितः ॥
नमो बुद्धाय धर्म्माय सङ्घरूपाय श(स)म्भवे ।
मां सुदुःखितां पा(पि)पीं दृष्ट्वा च करुणां कुरु ॥
[३][इति शम्भूं चानुस्मृत्य[४] प्रतिष्ठति स्वयं प्रभुः ।
तत्र दिग्मुख[५]संस्थित्वा नमितश्च पुनः पुनः ॥
भो शम्भो हे नाथनाथ सर्व्वेषाञ्च[६] तथैव च ।
मां पापीं दुःखितां दृष्ट्वा करुणां कुरु शीघ्रकम् ॥]
अतीतानागते काले प्रत्युत्पन्ने अपि तथा ।

१ D सर्व्वेषाञ्च प्रजानां भोग्यं । २ D विचिन्त्यस्य ।

३ C omits the portion bracketted.

४ A D शम्भू वानुस्मृत्य । ५ B दिग्मुखं । ६ A D सर्व्वेषाणाञ्च ।

राजसमूहानां[1] मध्ये मच्छादृशं दुःखी न हि ॥
ज्ञात्वेति सर्वज्ञनाथ प्रभो मह्यं दयां कुरु।
प्रजानामर्थे दुःखिनां मां पापी च त्वद्रक्षसि ॥
चिन्तामिमां परजातः कष्टं प्राप्याधर्म्मा(र्म्मो)स्म्यहम्।
किं कुर्य्यात् कुत्र यास्येऽहं यतः स्युः सुखिनः प्रजाः ॥
हाहा कष्टञ्च नेपाले मम पापस्य वृत्तिना।
दुःखिताः सर्वे मत्प्रजाः शुष्कनद्यां मत्स्या इव[2] ॥
हाहा धिग्धिग्च मां पापी मच्छादृशं त्रिभुवने।
कस्मिंश्चिद्भुवने वाह्ये पृ(थ्वि)थ्वीखण्डे तत्र न हि ॥
अहमपि नेपालेशः धर्म्माकरः सुवंशजः।
धिग्मां धिग्मां च राष्ट्रेषु मच्छादृशं कुत्र न हि ॥
कुत्र देशे कुत्र स्थाने कुत्र दिशि गच्छाम्यहम्।
नावृष्टि[3]दोषनाशाय प्रजानां पालनाय च ॥
इति विचिन्त्य सः भूपालः गुणकामदेवो नृपः।
अत एकाकिनः स्थित्वा मनसा चिन्तनां कृतम् ॥
कायवाक्चित्त एकेन ऋजुकायसंस्थिता(त्)।
निश्चयं मनसि धृत्वा श्रीस्वयम्भूं स्तुतिं[4] कृतम् ॥
अतः पश्चाच्छ्रीस्वयम्भोः प्रसा(शा)देन सः प्राप्नवान्।
गुणकामदेव राजा मनसि एकचित्तकम् ॥

---

१ D °समूहना। २ D समा इव। ३ A नावृष्टिं।
४ D श्रीस्वयम्भस्तुतिं।

एकं चित्तञ्च ध्यात्वा सः स्मृणा जाता मनसि च ।
किल मनसा भावेन एकगुरुं स्मृतं भवेत् ॥
एकः श्रेष्ठः[१] गुरुनाथः शान्तिकरः प्रसिद्धकः ।
शाह्र्यंगुशिखरे[२] स्थाने शान्तिपुरे प्रतिस्थि(ष्ठि)तः ॥
तत्र गत्वा तस्मिं गुरौ विज्ञापयामि निश्चयम् ।
इति मनसि च धृत्वा निश्चयं स्वीकृतञ्च सः ॥
निश्चयं मनसि कृत्वा सर्वेषां मन्त्रिणामपि ।
सर्वप्रजानां मध्ये च गुणकाम उवाच सः ॥
भो मन्त्रिणः प्रजाश्चापि युष्माकं अतिदुःखिताम् ।
मया ज्ञात्वापि भावेन युष्मभ्यं वचामि किल[३] ॥
गोशृङ्गपर्वते शान्तिपुरे शान्तिकरो वि(भूः)भुः ।
सिद्धाचार्य्योऽस्ति तदयं कुर्य्याम प्रार्थनान्त्वयि ॥
मयापि युष्माभिस्सार्द्धं श्रीस्वयम्भोस्स पर्वते ।
विज्ञापयामि गत्वा च शान्तिकरे गुरावपि ॥
सामग्रीमपि युष्माभिः सुशीघ्रं सज्जिकुर्वताम् ।
पञ्चोपचारपूजाङ्गं शान्तिकरपूज्याय च ॥
एवमुक्ते स राजेन्द्र गुणकामस्य मण्डितः ।
प्रजाश्चापि सुशीघ्रेण कार(ल)यामासुः पूज्यकान् ॥
मनसा देवस्य सिद्धिं च वचसा पार्थिवस्य च ।
इत्थं सर्वं सुशीघ्रेण सामग्री पूर्णं क्रीयताम् ॥

---

१ D एकश्रेष्ठः ।   २ B शाच्यंगु० ।   ३ D वचामि किम्

इत्थं सामग्रीसम्पूर्णं गुणकामः कृतेऽपि च ।
सर्वैः प्रजाभिः सार्द्धन्तैः जगाम शम्भुमन्दि(लं)रम् ॥
यत्र शान्तिकराचार्य्यः संस्थितः शम्भुमन्दि(ले)रे ।
तत्र गत्वा प्रमोदेन चकार विधिपूजितम् ॥
प्रथमं श्रीस्वयम्भुञ्च पञ्चोपचारपूजितम् ।
प्रणिपत्य प्रमोदेन चकार सम्प्रदक्षिणाम् ॥
पुष्पधूपादिभिः पूज्यैः श्रीस्वयम्भूं प्रपूजितम् ।
ततः पश्चादमात्यादि सर्वं प्रजाः प्रपूजितम् ॥
केश्चित्पञ्चप्रणामैश्च अष्टाङ्गैश्चापि कैश्चन ॥
श्रीस्वयम्भूं धर्म्मधातुं प्रणिपत्य पुनः पुनः ।
ततः पश्चाच्छान्तिकरो यत्र सन्तिष्ठति पुरे ॥
तत्र गत्वा स राजेन्द्रः शान्तिकरं प्रपूजितम् ॥
पुष्पधूपादिभिः पूज्यैः शान्तिकरं[1] सशक्तिकम् ॥
पूज्यैः पुष्पैः सराजाभिरचतैरञ्ज(लि)लिं क्षिपन् ।
कृत्वा तत्पादयुगलं नमस्कारं समाहितः ॥
कृताञ्जलिपुट स्थाप्य शिरसि तमुवाच सः ।
भो शान्तश्री यदर्थेऽहं भवच्छरणमागतः ॥
तज्जानासि भवान्सर्वं विज्ञापयामि किं प्रभो ।
लोकास्ते दुःखिनो देव दुर्भिक्षेण प्रपीडिताः ॥
भगवन्देवदेव त्वं शान्तिकर शान्ति(न्त)गुरो ।

---

१ D ०करश्च ।

सर्व्वेषां मे प्रजानाञ्च अत्यर्थं दुःखमुद्भूतम् ॥
भूतं भविष्यं वर्त्तञ्च सर्वं ज्ञातं भवानपि ।
मे दुःखं प्रजानामपि[1] त(च)च्च जानासि सत्प्रभो ॥
मयि दुःखं सह्यं नाथ प्रजादुःखमसह्यकम् ।
इत्थं मे चित्तविशुद्धिं भवान् ज्ञास्यति सत्प्रभो ॥
भगवन् शान्तिकराचार्य्य मह्यं शीघ्रं दयाङ्कुरु ।
शीघ्रं वृष्टिसुपूर्णाय कार्य्यं कुरु च सद्गुरो ॥
मह्यमर्थं न हि नाथ प्रजाभ्यः सर्व्वेभ्योऽपि च ।
क्रिमिकीटादिजन्तुभ्यो[2] दयाङ्कुरु च सत्प्रभो ॥
मनुष्याणामुद्धाराय देवानाञ्च हिता यच ।
तिर्य्यञ्चापि पशूनाञ्च हिताय च सुखाय च ॥
अत्रजानां मनुष्याणां अन्यजानामपि सदा ।
तिर्य्यञ्चापि पशूनाञ्च हितं शीघ्रं दयाङ्कुरु ॥
धिग्मां मन्दोऽहं मूढ़ोऽपि भवान् गुरुश्च प्रापिताः ।
चक्षुर्मे चास्ति सुखञ्च तेनापि न दृष्टकम् ॥
जड़ज्ञानेन युक्तोऽहं बुद्धिनान्धचक्षुरिव ।
इत्थं पापी सुदुःखी मां दृष्ट्वा शीघ्रं दयाङ्कुरु ॥
भवान्सर्वज्ञनाथञ्च मया न ज्ञान ज्ञायताम् ।
भवान्मे विषये अस्ति विपरीत कु(त)त्र कथम् ॥
यस्य गृहेऽपि राष्ट्रे च अस्ति कल्याणं सद्गुरो[3] ।

१ A C D प्रजानापि ।   २ D ०जन्तूनां ।   ३ D स सद्गुरो

कस्मात् कथमिमावस्थ प्रापि((तां)तं भवति गुरो ॥
स्वर्गे च मर्त्त्येऽपि पाताले दिशासु विदिशासु च ।
नानाभिविषये राज्ये मच्छादृशमन्ये न हि[1] ॥
इत्थं च मनसा वाचा कर्म्मणापि सुबुद्धिना ।
भवति च गुरौ इत्थं विज्ञापयामि निश्चयम् ॥
निश्चयं गुरौ मातरि विज्ञापयामि मेऽजस्रकम् ।
भवतश्च प्रसादाच्च भविष्यन्ति शुभं गु(रौ)रो ॥
इति सर्वज्ञनाथ त्वं भवते च किमुक्तकम्[2] ।
तच्छ्व्वं भवता ज्ञातं शीघ्रञ्च कुरुतां[3] दयाम् ॥
ममार्थञ्च हि नाथ[4] सर्वेषाञ्च हिताय च ।
नेपालमण्डले चात्र वृष्टिदोषं प्रशान्तय[5] ॥
एवमुक्तेऽथ भूपालः सर्वज्ञः सर्वविद्गुरुः ।
शान्तिकरदेवाचार्य्य गुणकाममुवाच सः ॥
नामार्थशादृश राजन्[6] गुणकामप्रख्यापित ।
देवदुर्भिक्षशान्त्यर्थं मेऽस्ति [7]सुवृष्टिकृद्विधिः ॥
यत्सर्वं भवता उक्तं तत्सर्वं जानाम्यहम् ॥
देव राजेन्द्र नेपाले महापा(प)पं प्रवर्त्तते ।
तत्पापं हरणोपायं वक्ष्यामि ते शृणु हि त्वं ॥

१ D अनेनहि । २ D किमुक्तिकं । ३ D कुरुता दया ।
४ D नाथञ्च । ५ D प्रशान्तये ।
६ D नामार्थं सादृशा राज । ७ D मष्टि ।

यस्मिन्नेपालविषये नीतिधर्म्मानुपालके ।
नीतिधर्म्मानुसारेण न सम्पालयसि प्रजान्[१] ॥
मन्त्रिणोऽपि तथा सर्व्वे नीतिधर्म्मपराङ्मुखाः ।
भुक्त्वा कामं सुखान्येव[२] प्रचरन्ति यथेच्छया ॥
तथा भृत्या जनाश्चापि पौराश्चापि महाजनाः ।
स्वकुलधर्म्ममुत्सृज्य प्रचरन्ति यथेच्छया ॥
[३][एवं सर्व्वे(पि) लोकाश्च दुशाकुशलचारिताः ।
स्वकुलवृत्तिमुत्सृज्य प्रचरन्ति प्रमोदतः ॥
तदेतत्पापवैपाकं भवति नेपालमण्डले ।
येन येन कृतं कर्म्म भोक्तव्यं तेन तत्फलम् ॥
यद्यत्पुरातनं कर्म्म तत्तदेवेह भुज्यते ।
कारणं देवाच नान्योस्त्यौपाधिको जनः ॥
गर्भे वा बालभावे वा यौवने वापि[४] वार्द्धके ।
मृत्यो वशमयातव्यं[५] जन्तुभि नृपसत्तम ॥
किमच चिन्तयेत्सन्तः[६] परार्थं फलकाङ्क्षिनः ।
न हि द्रुमा स्वभोगार्थं फलन्ति पृथिवीतले ॥
योऽन्यदुःखानि विज्ञाय साधु वाक्यैः प्रबोधय(ये)त् ।
स एव मु(नि)निः सलक्षा यतः परहिते रतः ॥
अन्यदुःखेन यो दुःखी योऽन्यहर्षेण हर्षितः ।

---

१ D प्रजा । २ D कामसुखान्येव । ३ C omits the portion bracketted, ending at page 442 line 18.
४ A यौवनेऽपि । ५ A पायातव्यं । ६ D सद्यः ।

स एव जगतामीशो नररूपधरो मुनिः ॥
सद्भिः श्रुतानि शास्त्राणि सुखदुःखविमुक्तये ।
सर्वेषां दुःखनाशाय यदि सन्तो वदन्ति हि ॥
यत्र सन्तः प्रवर्त्तन्ते तत्र दुःखं न बाधते ।
वर्त्तते यत्र मार्त्तण्डः कथं तत्र तमो भवेत्[१] ॥
विवेकं हन्त्यहङ्कारे ह्यहङ्काराच्च जीवि(ना)नाम् ।
आपदः सम्भवन्त्येव ह्यहङ्कारं त्यजेत्ततः ॥
अहङ्कारो भवेद्यस्य तस्य नाशोऽतिवेगतः ।
असूयाद्यास्त्वहङ्कारमनुगच्छन्ति वै द्विजाः ॥
असूयाविष्टमनसस्तस्य राज्ञः परैः सह ।
आयोधनं घोरमासीत् मासमेकं निरन्तरम् ॥
यस्य कस्यापि यो द्वेषं कुरुते मूढधी नरः ।
तस्य सर्वा(नि)णि नश्यन्ति श्रेयांसि नृपसत्तम ॥
असूया वर्त्तते यस्मिन् तस्य मुनि पराङ्मुखः ।
तस्य सर्वाणि श्रेयांसि विनश्यन्ति ततो ध्रुवम् ॥
नाशहेतुः समस्तानां सम्पदां नृपसत्तम ।
अहङ्कारः स्थितो यत्र तत्र कामादयो ध्रुवम् ॥
विवेकहीनपुरुषे यदि सम्पत्प्रजायते ।
तुषाग्निवायुसंयोग[२]मिव जानीध्वमुत्तमः ॥
असूयोपेतमनसां दम्भाचाररतात्मनाम् ।

---

१ D भवत् ।　　२ A तुषाग्निं वायुः संयोग ।

पुरुषोक्तिरतानाञ्च सुखं नेह परत्र च ॥
असूयाविष्टमनसां सदा निष्ठुरभाषिणाम् ।
प्रिया वा तनया वापि बान्धवा अप्यरातयः[1] ॥
योऽसूयां कुरुते नित्यं समीक्ष्य च परश्रियम् ।
सर्वस्वपक्षच्छेदाय कुठारो नात्र संशयः ॥
यः स्वश्रेयोविनाशाय यत्नं कुर्य्यान्नरो यदि ।
सर्वेषां श्रेयसा दृष्ट्वा स कुर्य्यात् मत्सरं सदा ॥
मित्रापत्यगृहक्षेत्रधनधान्ययशस्सु च[2] ।
हानिमिच्छन्नरः कुर्य्यादसूयां नरसत्तमः ॥
येषु स्थितेषु स नरो विनश्यति न संशयः ।
असूयोपेतमनसं तं दृष्ट्वा चुक्रुशुः खगाः[3] ॥
अहोऽसूयां कष्टतरां धिग्जगद्वेषहेतुकिम् ।
ब्राह्मणाश्च तथा सर्वे दशाकुशलचारिणः ॥
स्वकुलाचारमुत्सृज्य भुक्त्वा चर यथेच्छया ॥
वैश्याश्चापि तथा सर्वे नीतिधर्मपराङ्मुखाः ।
स्वकुलवृत्तिमुत्सृज्य भुक्त्वाचरत् यथेच्छया ॥
महाजनाः तथा सर्वे नीतिधर्मपराङ्मुखाः ।
स्वकुलधर्ममुत्सृज्य भुक्त्वाचरत् यथेच्छया ॥]
वणिक्संज्ञाश्च ते सर्वे मिथ्यार्थसाधने रताः ।
सत्यधर्मं निहत्यश्च[4] भुक्त्वा योग्यं यथासुखम् ॥

---

१ B अप्यरातयः । २ D ०यशस्सुखः । ३ A D चक्रुशुः खगाः
४ B निह्नुता च, D निहताश्च ।

शिल्पिनोऽपि तथा सर्वे केवलं भूतिलालसाः ।
स्वकूलाचारमुत्सृज्य भुक्ता चरत्यथेच्छया ॥
तथा नारीजनाश्चापि कामक्लेशाकुलारताः।
स्वकूलधर्म्ममुत्सृज्य प्राचरन्ति यथेप्सितम् ॥
एवं सर्वेऽपि लोकाश्च दशाकुशलसंरताः ।
स्वकूलाचारमुत्सृज्यप्राचरन्ति यथेच्छया ॥
तत्तच वहव(वः)दुष्टाः चौरा धूर्त्ता प्रक्रूरकाः ।
साधुजनात्प्रतिहत्य चरन्ति मत्तेव द्विपः ॥
तन्महत्पापसञ्चारादत्र नेपालमण्डले ।
अनावृष्टि दुर्भिक्षञ्च भवति च दिने दिने ॥
ततो देवगणाश्चापि ये दुष्टा मारकाङ्क्षया ।
सर्वे तत्र रुषालोक्य वज्र(ज)पातं प्रचक्रिरे ॥
वह्निगणास्तथा सर्वे आलोक्य दुष्टवत्तदा ।
वज्रचूडासमायुक्ता वह्निपातं करोति च ॥
धर्म्मराजगणाः सर्वे क्रूलात्मा निर्दया कृताः ।
निहतुं प्राणिनः सर्वे महामारीं[१] करोति हि ॥
वरुणादिनागगणाः क्रूलात्मा निर्द्दया कृताः ।
तान्सर्वान्पापिनो दृष्ट्वा सुवृष्टिं च्छिनोति च ॥
मरुद्गणास्तथालोक्य क्रूलात्मा निर्द्दयोत्थिताः ।
वायुपातं प्रकुर्वन्ति तत्र सर्वे महीतले ॥

---

१ D ०मारी ।

तथा यक्षाश्च ये गणाः किन्नरा गुह्यकापि च ।
गृहे गृहे प्रचरित्वा रोगात्पातं प्रचक्रिरे ॥
तथा भूताः पिशाचाश्च वेताडाः कटपूत(ट)नाः ।
डाकिन्यः शाकिनी चापि प्रमथा सगणापि च ॥
रुद्राश्चापि सगन्धर्वाः कुम्भाण्डा गरुडापि च ।
सर्वे तत्र प्रकुर्वन्ति विघ्नानि तत्क्षणेन च ॥
मातृकाभैरवाः सर्वे तथान्यदेवतागणाः ।
दृष्ट्वा तान्सर्वान् लोकान् महद्दुःखं करोति च ॥
ग्रहास्तारागणाः सर्वे विरुधानाशकाङ्क्षया ।
अहर्निशं समालोक्य महद्विघ्नं प्रचक्रिरे[1] ॥
कुलेशाश्च सर्वेऽपि देवता अप्रमोदिताः ।
सन्त्रातुं असमर्थाऽपि सम्पश्यनेव तस्थिरे ॥
तदा स[2] राजराजेन्द्रः गुणकामप्रख्यापितः ।
तत्सर्वं सुचिरन्ध्यात्वा मनसैव विचिन्तयेत् ॥
हा कष्टं पापजं घोरं जायते नेपालमण्डले ।
तत्पापं नाशनोपायं को दद्यात् मे हिताय च ॥
कथमेव महद्दुःखं शमीकर्तुं विधास्यते ।
पश्यन्नेवमपेक्ष्यैवं रमेयं साम्प्रतं किमु[3] ॥
यो हि राजा प्रजादुःखमपेक्ष्य रमते सुखम् ।

---

१ A चक्रिरे । २ A C D omit सः । ३ A पश्य....किम् ।

स किं राजा प्रभुर्भर्त्ता दुष्टाचैव निगद्यते ॥
यत्र राजा प्रजादुःखमपेक्ष्य न विचारयेत् ।
स्वयमेव सुखं भुक्ता रमते च यथेच्छया ॥
तत्र सर्वे प्रजालोकाः क्लेशव्याकुलमानसैः ।
सत्यं धर्मं कुलाचारं हित्वा चरेयुः सर्वदा ॥
एतत्सर्वं महत्पापं नृपतिना भु(भू)क्तुमर्हति ।
इति सत्यं समाख्यातं नीतिविज्ञैर्महर्षिभिः ॥
इत्येतत्पापं वैपाकं[1] भोक्तुं कथं मया भवे ।
तदत्र किङ्करिष्यामि किमुपायं न विद्यते ॥
धिग्धिग्मेऽत्र संसारे हि यत्र राज्ये[2] सदा कलिः ।
दुर्भिक्षादिमहोत्पातं दृष्ट्वा स्थातुमर्हति वै ॥
धन्यास्ते पुरुषा[3] ये हि निष्क्लेशा भवति सदा ।
विमुक्ताभवसञ्चारा भिक्षवो ब्रह्मचारिणः ॥
किमत्र जन्म संसारे सुखेनापि युतो नृणाम् ।
येनेह पशुवद्भुक्ता यथाकामं रमन्त्यहे ॥
तदेतत्पापभुज्योऽहं क्लेशव्याकुलितेन वै ।
नरकेषु भ्रमन्दुःखं भुञ्जीया[4] द्विविधं सदा ॥
तदा को मे सुहृन्मित्र संरक्षितुमुपाचरेत् ।
धर्ममेव तदा त्राणं सर्वदुःखाप्रनाश(नं)कम् ॥

१ D पापवैपापं । २ D राज्य । ३ D ते किं पुरुषाः ।
४ D भुञ्जीया ।

सर्व्वेषां प्रवरं धर्म्मं सुखं सर्व्वभयापहम्[१] ॥
सर्व्वार्थसाधनसिद्धिमित्याख्यातम्मुनीश्वरैः ॥
धर्म्मं विभूषणं लोके सुखं दुर्गतिनाशनम् ।
धर्म्मं स्वर्गसुमो(शो)पानं धर्म्मं शान्तिकरं शुभम् ॥
ततः शान्तश्रियमार्य्यैं[२] समीक्ष्य शरणङ्गतः ।
नत्वा पादाम्बुजे भूयः प्रार्थये देवमादरात् ॥
शास्त सदा चरिष्यामि भवदाज्ञां शिरो वहन् ।
तन्मे यत् क्रीयते कर्म्म तत् समादेष्टु[३]मर्हति ॥
इति सम्प्रार्थिते राज्ञा श्रुत्वाचार्य्यः स सन्मतिः ।
नृपतिन्तम्महासत्वं सम्पश्यनेव[४]मादिशत् ॥
राजञ्छृणु समाधाय वक्ष्यामि शुभकारणम् ।
यद्यस्ति ते कृपा लोके तत्कुरु त्वं मयोदितम् ॥
तद्यथा सर्व्वतीर्थेषु स्नात्वा नित्यं यथावि(धिः)धि ।
शुचिशीलः समाचारः समाहितस्त्रिमण्डलः[५] ॥
त्रिरत्नभजनं कृत्वा चरस्व पोषधं व्रतम् ।
ततस्त्रिदं जगन्नाथं धर्म्मधातुञ्जिनाल(यः)यम् ॥
यथाविधि समाराध्य सम्भजस्व समादरात् ।
तथा सर्व्वां इमां पञ्च देवताञ्च यथाविधिम् ॥

१ A भयाप्रयाप्रहं B सर्व्वं भयापहं । २ D तत शान्तश्रियमार्य्यं । ३ A सासादेष्टुं । ४ A स पश्यनेव । ५ D समाहित-त्रिमण्डलं ।

समाराध्य समभ्यर्च्य सम्भजस्व समादरात्[१]।
[२]इदं मञ्जुश्रियं वापि चैत्यमञ्जुश्रियं सदा ॥
यथाविधि समभ्यर्च्य सम्भजस्व महंतृसवैः।
तथाष्टौ वैतरागाश्च समाराध्य यथाविधि ॥
समभ्यर्च्य महोत्साहैः सम्भजस्व समादरात्[३] ॥
तथा महेश्वरिं देवीं[४] खगाननां समण्डलाम्।
समाराध्य समम्यर्च्य सम्भजस्व यथाविधिम् ॥
एतैव पुण्यभावेन सर्वत्रापि भवेच्छुभम्।
तेन सर्वं महत्पापं सर्वत्र विजयं भवेत् ॥
तदा ब्रह्मामरेन्द्रादि सर्वे देवगणापि च।
सुदृष्ट्यात्र समालोक्य पालये(यु)युः[५] सदा मुदा ॥
तदा सम्पालिते देवैः सर्वै लोकाधिपै पुनः।
सुभिक्षश्रीगुणोत्साहं करिष्यन्ति च सर्वदा ॥
तदा सर्वेऽपि लोकाश्च नी(नि)रोगाः श्रीगुणाश्रयाः।
विरम्य पापमार्गेषु सञ्चरेयं[६] सदा शुभे ॥
इति शान्तश्रिया तेन समादिष्टं निशम्य[७] सः।
नृपस्तथेति विज्ञाप्य कर्तुमेव समिच्छति ॥
ततः स नृपतिः सर्वान् मन्त्रिणो देशजान् जनान्।

---

१ B महोत्सवैः सम्भजस्व समादरात्। २ B इयं मञ्जुश्रियं चापि
३ A सदादरात्। ४ D महेश्वरि देवीं। ५ A पालययुः।
६ A D सचरेयं। ७ D निशंम्य।

सर्वान्महाजनांश्चापि[1] समामन्त्र्यैवमादिशत् ॥
भो भो मन्त्रिजना सर्वे सर्वे पौरा महाजनाः ।
अचार्य्येन[2] यथा दृष्टं तथा चरितुमर्हति ॥
अहमपि तथा धृत्वा सत्वानां भद्रकारणे ।
त्रिरत्न(स)शरणं गत्वा व्रतं चरितुमुत्सहे ॥
इत्यादिष्टं नरेन्द्रेण श्रुत्वा ते मन्त्रिणो जनाः ।
पौराः महाजनाः सर्वे तथेति प्रतिमुच्यते ॥
ततः स नृपतिः सर्वैः स्वपुरोहितमन्त्रिभिः ।
अमात्यसचिवपौरैः सार्थवाहमहाजनैः ॥
सद्धर्म्मवाञ्छिभिः सद्भिः सर्वसत्वैः समन्वितैः ।
सर्वेष्वेतेषु तीर्थेषु स्नात्वा यथाविधिं[3] मुदा ॥
शुचिशील समाधाय प्राचरन्ति तत्सद्व्रतम् ॥
ततस्ते विमलात्मानं स्त्रिरत्नशरणं गताः ।
धर्म्मधातु समाराध्य समभ्यर्च्य भजेत्मुदा ॥
तथा वायुपुरे वायुः देवताया[4] यथाविधिम्।
वह्निपूरे वह्निदेवस्य नागपूरे फणीश्वरा(न्) ॥
वसुपुरे वसुधारां[5] सर्वार्थसिद्धिसम्प्रदाम् ।
शान्तिपुरे महावीरं सम्वरं सगणं क्रमात् ॥
यथाविधि समभ्यर्च्य सुप्रसन्नेन चेतसा ।

१ D ०जनास्चापि । २ A आचार्य्येन । ३ D ०विधि
४ D वायुदेवतायाः यथाविधिः । ५ B वसुन्धरां, D वसुधरां ।

ध्यानैर्जपैस्तथा स्तोत्रैः नानाभावं कृतेन च ॥
तथाष्टौ वैतरागाश्च श्रीदेवी च खगानना।
यथाविधि समाराध्य समभ्यर्च्य भजेत्मुदा ॥
तदैतत्पुण्यभावेन सर्वपापक्षयं[1] भवेत्।
ततः सर्वमहोत्पातं क्रमेण प्रशमं ययौ ॥
तदा सर्वेऽपि ते लोकाःनी(नि)रोगाः पुष्टिता मुदा।
महानन्दसुखं प्राप्य चरन्ति धर्म्मलालसाः ॥
तां च दृष्ट्वा स राजेन्द्रः मनसैव विचिन्तयेत्[2]।
अहो सद्धर्म्म वत्सं धन्यमित्युक्तानन्दितश्चरत् ॥
तदा सुवृष्टिरेवात्र न भवन्ति कथञ्चन[3]।
तं दृष्ट्वा राजराजेन्द्रः दुर्भिक्षपरिपीडितम् ॥
करुणाविष्टमनसा नृपेन्द्रेण पुनः मुदा।
शान्तश्रियं तमाचार्य्यं नत्वा एवमुवाच सः ॥
गुरो कृपयात्र संसारे भवन्ति निरुपद्रवम्।
सर्वत्रापि महोत्पातम् प्रशांम्यते द्रुतं किल ॥
सुवृष्टिरेव नाद्यापि प्रवर्त्तते कथञ्चन।
सुवृष्टिकरणोपायं भवताज्ञां ददातु मे ॥
इति संप्रार्थिते राज्ञा श्रुत्वाचार्य्यः स सन्मतिः।
राजेन्द्र तं महासत्त्वं सम्पश्यनेवमादिशत् ॥
देव दुर्भिक्षशान्त्यर्थं मय्यस्ति सुवृष्टिणां(णा) विधिम्।

१ A ०पापं क्षयं। २ A विचिन्तयत्। ३ A कथं न

यत्सर्वं भवता उक्तं तत्सर्वं च जानाम्यहम् ॥
इत्थं ज्ञातं मया राजन् मद्वच अपि श्रूयतां ।
नागसाध(न)नं तस्माच्च कलिष्यहं त्वदर्थतः ॥
भवान् विघ्नविनाशाय भवद्गुत्तरसाधकः[१] ।
[२][सर्वकार्य्ये हि सिद्धाय[३] उत्तरसाधकं भव ॥]
यत्प्रकारं मयोक्तञ्च गुणकाम शीघ्रं कुरु ।
अतीतानागते काले प्रत्युत्पन्ने तथापि च ॥
उत्तरसाधकं विना सर्वकार्य्यसिद्धि न हि ।
उत्तरसाधकं श्रेष्ठं यस्मै च[४] कार्य्यसिद्धये ॥
इति भूपालो सन् राजन् उत्तरसाधकं भव ।
अतीतानागतैर्वुद्धैः प्रत्युत्पन्नैस्तथागतैः ॥
नागसाधनविधिं च उक्तं श्रोत्रं परम्परात् ।
मेघसूत्रादिषु चापि महायानेषु च अपि ॥
अनेकेष्वपि च शास्त्रेषु नानातन्त्रमतेष्वपि ।
यद्यत्प्रकारमुक्तं च करिष्यामि तद्वदपि ॥
मा भैषि गुणकाम त्वं त्वदर्थे च मया कृतं ।
भवता पूर्वप्रकारेण विज्ञापितं पूर्वं मयि ॥
जानामि मनसा सर्वे(र्वं) मा भैषि त्वं पुनःपुनः ।
मयापि विविधं नूनं ग्रन्थग्रन्थान्तरमपि ॥

---

१ A भवदुत्तर० । D भवभूत्तर० । २ B omits this line.
३ D सिद्धा च । ४ B सर्व्वस्मै ।

सम्यग्दृष्ट्वा विचार्य्य त्वदर्थसिद्धयेऽपि च ।
तव अर्थाय एकस्य क(रि)ष्यामि नहि किल ।
सर्वेषाञ्च प्रजानाञ्च क(रि)ष्येऽर्थाय शीघ्रकम् ।
भवानपि विधिं सर्वं शीघ्रञ्च सज्जीक्रीयतां ॥
सामग्रीविधिसंपूर्णं पञ्चामृतादिकमपि ।
इत्थं उक्त्वा स आचार्य्यः ग्रन्थग्रन्थान्तरमपि ॥
दृष्ट्वा मुदा विचार्य्य च संपूर्णञ्च प्रक्रीयताम् ।
ग्रन्थग्रन्थान्तरे दृष्ट्वा ज्ञात्वा शीघ्रं शान्तिकरः ॥
यदुक्तं चातीतैर्नाथैः गुणकामादय उक्तवान् ।
भो गुणकामदेव त्वं मयोक्तेन[1] विधिमपि ॥
सामग्रीमपि संपूर्णं(र्ण) शीघ्रं सज्जीचक्रीयताम् ।
विशेषेण दुग्धं पूर्णं[2] शालिं च तण्डुलानपि ॥
नागकुम्भ नागच्छत्र नागवेणु शतपर्विकम् ।
तृणकुण्डलमासन श्वेततैलं पालारसम् ॥
सिह्लासं धूपकं वापि सौवर्णचूर्णकमपि ।
दूर्वाकर्पासमाला च दूर्वाकुण्डादिपुष्पकाः ॥
नागपूजाविधिमित्थं शीघ्रं सज्जीकुरु[3] नृप ।
अथ गुणकामदेवस्तदाज्ञा शिरसा वहन् ॥
स्वगृहे च प्रत्यागत्वा सर्वा[4]न्पौरानाक्रानय ।

१ D मयोक्तं न । २ D दुग्धपूर्णं । ३ B कृत
४ D सर्व्वा ।

सर्वैश्च पौरजैस्सार्द्धं पर्षत्कृला स्वमण्डिले ॥
अमात्यानां प्रजानाञ्च मध्योवाच गुरो वचः ।
भोऽमात्या मे प्रजाश्चा(चा)पि मद्वचः शीघ्रं श्रूयतां ॥
भवतामपि अर्थाय करोम्युपायकं[1] मया ।
युष्माकमपि अर्थाय मह्यमर्थं न हि अपि ॥
शान्तिकरप्र(शा)सादाञ्च उपायं चिन्तयाम्यहं[2] ।
सामग्रीमपि पूर्णञ्च नागानां साधनाय च ॥
मद्वाचायुष्माभिः सर्वैः सामग्रीं[3] शीघ्रं क्रीयतां ।
यथा पूर्वं प्रउक्तेन शान्तिकरेण शान्तिनां ॥
तथा सर्वेभ्यः प्रजाभ्यः सामग्री च स उक्तवान् ।
एवं उक्ते नरेन्द्रेण गुणकामदेवप्रजाः ॥
अग्रजा अन्त्यजाश्चापि गुणकाममूचुरपि ।
गुणकामदेव राजन्नामार्थसादृशं भवान् ॥
[4]अस्मञ्च चापि शीघ्रं त्वं देव कृपां दयां कुरु ।
गुणकाम असि राजन् अस्माभिर्भवत्युक्त किम् ॥
अन्नात्प्रधानं द्रव्यञ्च द्रव्याच्च अन्नकं[5] भवेत् ।
इत्थं स्वर्गमर्त्यलोके पातालवा(वा)सिन अपि ॥
तयोर्मध्य च किं श्रेष्ठं भवतापि विचार्य्यतां ।

१ A उपायेकं । २ A किन्तयाम्यहं । ३ D सामग्री शीघ्रं ।
४ B अस्मभ्यं चापि, D अस्मभ्य चाप्य शीघ्र त्वं देव कृपा दया कुरु ।
५ D अनेकं ।

नीतिसर्वं विजानासि अस्माकं दुःखकमपि ॥
भवतश्चापि च अग्रे युष्माभिरुक्तं किं कृतम् ।
अत्रजा अन्यआयाता मानूष्या पशवोऽत्र च[1] ॥
अत्यर्थं दुःखसंप्राप्ता त्वया राज्ये कृते अपि ।
इति ज्ञात्वा गुणकाम अस्माकमपि दुष्करम् ॥
वृष्टिदोषं च शान्ताय त्वया उक्त क्रियावद्धे ।
यत्प्रकारं भवतोक्तं अस्माभिस्तत्र क्रीयतां ॥
गुणकामदेव राजन्ते वाञ्छा शीघ्र सिद्ध्यतु ।
यत्प्रकारं भवतोक्तं सामग्रीविधिविस्तरं ॥
तत्प्रकारं करिष्यामि[2] भव(त)तः कार्यसिद्धये ।
एवमुक्त्वा सर्वं शीघ्रं अमात्यादय पौरजाः ॥
गुणकाम आज्ञा[3] चापि सामग्री पूर्णक्रीयतां ।
पुष्पधूपादिकान्पूज्यान्नानादीपादिपूज्यकान् ॥
इत्थं संपूर्णं पूजांगं च प्रजाश्च(श्च) सञ्जी(क्रि)क्रीयतां ।
पञ्चामृतादिभियुक्ता नागपूज्यान्सुविधिकान् ॥
तच्छामग्रीमपि शीघ्रं शीघ्रं सञ्जीचक्रि(क्री)यतां ।
एवं कृत्वा अपि शीघ्रं गुणकामप्रजा अपि ॥
शीघ्र सामग्री संगृह्य गुणका(मं)म प्रगच्छति ।
यत्र गुणकामदेव प्रासादे अपि तिष्ठति ॥
गत्वाप्यमात्याः प्रजाश्च गुणकाम ऊचुरपि ।

१ A D पशवोतय । २ A करिष्यामि मे । ३ D आज्ञां ।

भो गुणकामदेव त्वं अस्माकं मध्यर्थाय च ॥
अनावृष्टे सुवृष्टौ च कार्य्यं[1] शीघ्रं कुरु प्रभो ।
य[2] च श्रुतं भवता च शान्तिकर(रं) देवेऽपि च ॥
तच्चैवं सुवृष्टिकार्य्यं शीघ्रं शीघ्रं कुरु प्रभो ।
एवमुक्ते प्रजा सर्वे गुणकामदेव अपि ॥
नानापूज्यादिभिस्सार्द्धं स्वगृहात् प्रययावपि ।
अनेकैर्ब्राह्मणैश्चापि क्षत्रियैर्वैश्यः शूद्रकैः ॥
सर्वैः प्रजाभिस्सार्द्धं शान्तिकरं प्रगच्छति ।
यत्र शान्तिकराचार्य्यः स्थितं गोशृंगपर्वते ॥
शान्तिपुरे स तिष्ठति गुणकाम तत्रागतः ।
ब्राह्मणैः क्षत्रियैस्सार्द्धं वैश्यैश्च शूद्रकैरपि ॥
अनेकैः पूज्यहस्तैश्च गुणकाम(त)स्तत्रागतः ।
गुणकामस्तदा[3] तत्र शान्तिपूर्य्यां कपाटकम् ॥
घट्टकं घट्टकं कृत्वा तदूद्धीताच्च समाग(ता)तः ।
यस्मात्समाग(तं)त नाथ तस्मै तत्र समागतम्[4] ॥
पञ्चोपचारपूज्यैश्च प्रणिपत्य पादपङ्कजैः ।
कथं द्वारे पूजितं च शान्तिकर[5] सिद्धगुरुम् ॥
इत्यर्थ कथितं लोकैः तस्या(र्थ)र्थं कथयाम्यहम् ।
शृणु मैत्रेय तस्यार्थं प्रविवेशं तस्मिनपि ॥

१ D कार्य्यं ।   २ D ये च ।   ३ D गुणकाम तदा
४ A पूजितम् ।   ५ B शान्तिकरं ।

शान्तिकरस्य भार्य्यापि नास्ति तस्मिन् प्रवेशितुम् ।
वज्राचार्य्यश्च भिक्षुश्च तत्र प्रवे(शी)शितुं नहि ॥
ब्राह्मणाः क्षत्रिया वैश्याः कथं कोपि प्रवेशितुम् ।
[1]धनेनापि क्षणेनापि वलेनापि तत्र वेशितुम् ॥
सः पुमान्साधको विद्वान् षण्मासमरणं ध्रुवम् ।
सम्बरं महामूर्त्तिञ्च शान्तिकरन्तथा अपि[2] ॥
हृथाद्बलात्प्रविवेश्य शीघ्रं च मरणं ध्रुवम् ।
नाशा(च)च मुखकात्मार्गाद्योन्याश्चापि पुनःपुनः ॥
रुधिरं च समायातात् मरणं निश्चयं ध्रुवम् ।
तत्प्रजाः पुत्रपौत्राश्च शान्तिपूरस्य दोषकात्[3] ॥
भीतिभिः परचक्राभिः नानोपद्रव[4] क्कतम् ।
इति ज्ञात्वा च मानुष्याः शान्तिपूरे सुगोपके ॥
मनसा वा(चा)च कर्म्मेण किञ्चिद्दोष न क्रीयतां ।
भो शान्तिकराचार्य्य तवाज्ञा शिरसा वहन् ॥
भवतोक्तं च सामग्रीं ग्रहामि गृह्यतां भवा(वां)न् ।
यन्मे उक्तं त्वया पूर्वं नागसाधनस्य विधिम् ॥
भवान् शीघ्रं कुरु नाथ प्रजाभ्यो मे दयां कुरु ।
एवं विज्ञापिते राजा गुणकाम पुत्रवत्सरः ॥
शान्तिकर सन्नाथञ्च प्रणिपत्य च देहरे ।

---

१ A धन्येनापि क्षेणेनापि । २ D सम्बरञ्च महामूर्त्तिं च शान्तिकर तथा अपि । ३ D दोषजात् । ४ D ०द्रवः ।

भो शान्तिकराचार्य्य पूर्वोक्तं भवता विधिम् ॥
तत्सर्वं प्रग्र(ग्ट)ह्लामि ग्टह्लतां विधिविस्तरम् ।
शीघ्रं कुरु दयां नाथ नागानां साधनाय च ॥
मम अर्थं न हि नाथ मे प्रजानामर्थाय च ।
एवमुक्ते शान्तिकरः गुणकामदेवमपि ॥
प्रत्युवाच सुशीघ्रेण करुणाविष्टमान(स)सः ।
हे गुणकामदेव त्वं मयोक्तं पूर्वकेऽपि च ॥
अनावृष्टे सुवृष्ट्याय[१] उत्तरसाधकं कुरु ।
अहञ्च क्लेशेऽभ्यन्तरे एकलकार्य्यसिद्धये ॥
वाह्योत्तरसाधकत्वं सत्वार्थसिद्धये कुरु ।
इति कथित्वा तदा चक्रे शान्तिकरेण तद्विधिम् ॥
गुणकामस्य वचनात् सत्वानामनुकम्पया ।
सुगुप्ते च शान्तिपुरे एकं गत्वा शान्तिकरम् ॥
मण्डलं नवनागानां कारितां विधिपूजितम् ।
अष्टदलं सुविस्तारं विश्वपद्मोपरि अपि ॥
मध्यएकं वारुणञ्च[२] नागराजं प्रथापितम् ।
श्वेतवर्णं द्विभूजं च सप्तफणी[३]विभूषितम् ॥
मंगलासनमेकाश्ये[४] मणुत्पलञ्च संदधन् ।
पूर्वेऽनन्त नीलवर्णं याम्य[५]मृणालपद्मकम् ॥

१ D अनावृष्टसुवृष्याय । २ D एकवारुणञ्च । ३ सप्तफणि० ।
४ B एकाग्य० । ५ B पूर्व्वेऽनन्तं नीलवर्णं याम्ये ।

कुङ्कुमं तत्ते परे हरीत्तोतरे[१] वासु(की)किः।
शङ्खपालमग्ने पीतं श्वेतं कुलिक वायुव्य[२] ॥
ईशाने कनकवर्णं महापद्मनागकम्।
इत्येवमष्टनागाश्च शान्तिपुर्य्यां समागता ॥
नैऋत्ये तु नीलवर्णं कर्क्कोटक न आगतः।
नाभेर्द्ध्व[३] भुजङ्गमूर्त्ति मूर्द्ध मानुष्यरूपकम् ॥
पञ्चफणीविभूषाङ्ग नागराजञ्च पद्मकम्।
वामेन देव्यालिङ्गनमभयमग्रपाणिनाम्[४] ॥
नवफणीविभूषाङ्ग फणीराजन्तु तचकम्।
वामेन देव्यालिं(गे)गनमभयं व्यग्रपाणिनाम्[५] ॥
[६][मुनिफणीविभूषाङ्ग फणीराजन्तु वासुकिं(कीं)।
वामेन देव्यालिङ्गितं अभयं व्यग्रपाणिनाम् ॥]
मुनिफणाविभूषाङ्गं सर्पराजन्तु शंखकम्।
वामेन देव्यालिङ्गितं न भयं व्यग्रपाणिनाम् ॥
मुणिफ(णि)णीभूषिताङ्गं नागराजं कर्क्कोटकम्[७]।
वामेन देव्यालिङ्गितमभयं व्यग्रपाणिनाम् ॥
अग्निदिक्[८] फणीभूषाङ्ग फणीरा(जं)ज सुकूलिकम्।
वामेन देव्यालिङ्गितमभयं व्यग्रपाणिनाम् ॥

---

१ B तच्चकं, D तच्चपरे हरीतोत्तरे। २ B वायव्ये। ३ D नागभेर्द्धं।
४ D ०लिङ्गेन मभयं व्यग्रपाणिनां। ५ D अभयमग्रपाणिनां।
६ B omits these two lines. D मणिफणिविभूषाङ्गं।
७ D कर्क्कोटं नागराजकं। ८ D अग्निदीक्।

पूर्ववद् फणी(णि)भूषिताङ्ग महापद्म नागेशकम् ।
वामेन देव्यालिङ्गितमभयं व्यग्रपाणिनाम् ॥
अत्यर्थसुन्दररूपा नागकन्यागणा मुदा ।
समायाता शान्तिपुरे शान्तिकृन्मन्त्रभावतः ॥
तत्क्षणादेव सर्वे च नागाश्च वरुणादयः ।
मन्त्रप्रभावात्ते सर्वे शान्तिपूर्य्यां समागताः ॥
इत्यमेकेन नवानां मण्डलं कारितं गुरु ।
कर्कोटक न आयाता शीघ्रं दृष्टिकृतं नहि ॥
शान्तिकर सिद्धाचार्य्य वीराचार्य्य स सद्गुरुः ।
कायवाक्चित्त एकेन मन्त्रकृतान्न आगतः ॥
एककर्कोट(कं)क नागं राजोरूपो विलक्षणः(णं) ।
लज्जया[१] नागतस्तत्र नागराजस्य पर्षदि ॥
विरूपोऽपि कुरूपश्च नागराज कर्कोट(त)कः ।
लम्बितं कमिव शोभं देहस्य लक्षणमपि ॥
अनागतं तमालोक्य[२] शान्तिकरं उवाच तम् ।
सिद्धाचार्य्य[३] शान्तिकर गुणकामराजमपि ॥
शान्तिपूर्य्यां मूलकोष्ठाद्वाह्यकोष्ठे समागतः ।
यत्र गुणकामदेवस्तत्रोवाच स सद्गुरुः ॥
गुणकामदेव राजन् सप्त दिग्नाग आगता ॥
ईशानस्य कर्कोटकस्य नवममागत(तं) नहि ।

---

१ A लर्जया । २ D मानलोक्य । ३ D सिद्धाचार्य्ये ।

कर्क्कोटकसमायाते अत्र नेपालवासि(शि)नम् ॥
त्रयंपूर्वकोटिनागा भविष्यन्ति तत्रागताः ।
राजेन्द्र आगतः सर्वे नागा कर्क्कोटक(कं) नहि ॥
अतस्त्वाधाराख्यह्रदं[1] गत्वा द्रुतमिहानयः ।
यत्र आनाधाराख्ये[2] ह्रदं गन्धावत्या याम्यदिशि ॥
तत्र गत्वा त्वयापि[3] शीघ्रानीय ममाज्ञया ।
स्वतन्त्वं[4] यदि नायाति बलादानियतां ततः ॥
इत्युक्तं श्रुत्य भूपाल(लः) शान्तिदेवमुवाच सः ।
आगाढ़े शलिले देव कथं गन्तुञ्च शक्यते ॥
ततः शान्तिकर देव स एनं पुनरुक्तवान् ।
कथं नाथ शान्तिकर आधाराख्यह्रदेऽपि च ॥
जलस्यान्तरे गाढ़ेऽहं गन्तुञ्च शक्यते कथम् ।
कैवर्त्तोऽहं न हि नाथ अगाढ़े स(श)लिलेऽपि च ॥
कथं गन्तुं समर्थोऽपि मम बुद्ध्या न हि गुरो ।
हे गुरो नाथनाथ त्वं भवतश्च[5] प्रसा(शा)दतः ॥
अत्रान्तपुरे सदा च वास(श)यामि स्त्रीभिः सह ।
वीणावंशामृदंगादि सुरजाताद्यवाद्यकान् ॥
अन्तःपुरे सदा स्थित्वा स्त्रीभिः सह सुवादितम् ।
भो शान्तिकरो ना(थं)थ भवतः प्रशादात्कथम् ॥

---

१ D अतस्त्वां धनाख्यह्रदं ।  २ B आधाराख्यं, D आधाराख्ये ।
३ A तोयोद्यपि, B त्वयाद्येऽपि ।  ४ D स्वतन्त्व ।  ५ A भगवन्तश्च, D भगतश्च ।

मम बलपराक्रमात्तत्र गन्तुं न शक्यते ।
विशेषेण तत्र ह्रदे वङ्कसर्प्प प्रतिष्ठति ॥
तेषामपि विषेणोऽहं न दहामि[1] च सद्गुरो ॥
अपि च ।
अयमाढाराख्यह्रदः कालीशेषः पयमयः ।
तस्माच्च(च) कारणादेव स मकरशूचपूरितम् ॥
जलजन्तुग्राहामकैरत्यर्थं तत्र पूरितम् ।
तद्विवेश कथं नाथ समर्थो न शान्तिकरः ॥
अहमपि च हे नाथ मकै च तत्र वाश्वि(शि)भिः ।
अनेकैः प्रकारैर्मम जीवितं न हन्यते किम् ॥
भो शान्तिकरं देव तद्ध्रदे[2] गमनाय च ।
मन्त्र वा औषधं नाथ मयि किञ्चिन्न विद्यते ॥
कथं गन्तुं कथं गन्तुं तत्र शक्यामि सद्गुरो ।
मन्त्रविधिं औषधञ्च मह्यं देहि जगद्गुरो ॥
भवत मन्त्रभावा च औषधेन विशेषतः ।
तद्ध्रदे गमनाय प्रशादं देहि मे गुरो ॥
भवतस्य प्रशादेन यत्कार्य्यं चिन्तितं भवान् ।
तच्छीघ्यञ्च कलिष्यामि शीघ्रं यत्न कुरु प्रभो ॥
एवमुक्ते अपि वीरं गुणकामदेव नृपः ।
ततः शान्तिकर देव राजानं पुनरुक्तवान् ॥

---

१ D विशेषेणो न दहामि । २ D ह्रदे ।

भो गुणकामदेव त्वं नानास्ति च तव गृहे[1]।
एकहरितकमश्वं महाप्रमाणकमपि ॥
एष अश्व समारुह्य शीघ्रं यास्यसि भूभुजः।
यत्र आढाराख्यह्रदं गन्तव्यं तत्र शीघ्रकम् ॥
तत्र गतः स्थित्वा राजन् दुर्वाकुण्डमस्मिन् क्षिपन्[2]।
तस्य दुर्वाकुण्डस्यापि शीघ्रं गच्छसि पृष्ठतः ॥
हरिदश्व समारुह्य ह्रदे दुर्वाकुण्डे क्षिपन्।
यत्र भ्रमदश्वो याति तेन मार्गेण गम्यताम् ॥
मत्प्रभावेन भवता मम मन्त्रेण चाज्ञया[3]।
गन्तव्यञ्च तदन्तिकं सम्यक् च विधिकर्म्मणा ॥
एवं विज्ञाप(नां)णा यासौ त्वया मद्वचना पुनः[4]।
कर्क्कोटकनागराजं उक्तवान्भवता इति ॥
यत्र कर्क्कोटकनागः तिष्ठति ह्रद अन्तके।
अभ्यन्तरे प्रशादे च(वा) नागराजभूमावपि ॥
यथा मर्त्ये च लोके च राजा तिष्ठति स्त्रीभिः सदा[5] ॥
प्रासादे चाप्यन्तपुरे राजा इव स तिष्ठति।
तत्र गत्वा ह्रदे चान्ते कर्क्कोटक यत्र स्थितम् ॥
भवतां गुणकामेन उक्त शीघ्रं मदाज्ञया[6]।

१ A गृह्य। २ D क्षीपे। ३ D मन्त्रेण च ज्ञायया।
४ B विज्ञापनां योऽसौ त्वया मदनात् पुनः। ५ D सह।
६ D उक्तं शीघ्रं ममाज्ञया।

मे गुरु शान्तिकरोऽपि तुभ्यमाज्ञां मे देश्यति ॥
भवान् कर्क्कोटकनाग गुर्वाज्ञया शीघ्रागच्छ[1] ।
गोशृङ्गपर्वते शान्तिपुरे नागाः समागताः ॥
त्वमेको नागतस्तत्र कारणं किं नि(सं)शंम्यताम् ।
वरुणो नागराजेशः नागकन्यापरिवृतम् ॥
अनेकैः नागराजैश्च सार्द्धं तत्र समागतः ।
अनन्तपद्मकश्चैव तक्षकवासुकिस्तथा ॥
शङ्खपालकुलिकश्च महापद्ममपिस्तथा ।
मे गुरो शान्तिकरोऽस्य मन्त्रेण साधनादपि ॥
यत्र यत्र कोटिनागा शान्तिपुरे समागताः ।
सप्तसंवत्सरञ्चापि वृष्टिदोषमत्युद्भूतम् ॥
तद्दोषञ्च प्रशान्ताय[2] शान्तिकरस्य दूतोऽहम् ।
अगाढे शलिले चापि अहमामन्त्रणागतः ॥
शान्तिपुरो प्रसादाच्च मम पराक्रमं नहि ।
कर्क्कोटक ज्ञास्यसि त्वं शान्तिकरप्रभावकम् ॥
एवं ज्ञात्वापि शीघ्रं त्वं आगम्यतां शान्तिपुरे ।
एकवारं द्विवारं वा त्रिवारं वा पुनः पुनः ॥
भवता तदुक्तेन किञ्चिन्नोक्तं भविष्यति ।
शान्तिदेवस्य मे आज्ञां सत्वरं गमनं कुरु ॥
एवमुक्ते च नायाति हठादानीयतां तदा ।

१ D शीघ्रं गच्छ । २ D प्रशान्तय

इत्यादिवर भूपाल प्राह ततस्तत्गुणी ॥
शान्तिकरदेवाचार्य्यस्तस्मै आज्ञा समाददौ ।
गुणकामो[1] राजेन्द्रोऽपि तदाज्ञा शिरसा वहन् ॥
साध्वीति वचनं तस्य समाराध्य द्रुतं ययौ ।
पादाब्जेति प्रणिपत्य शान्तिपुराच्छमागतः ॥
गुरुदत्तं दूर्वाकु(ण्डं)न्दं संगृह्य शीघ्रं गच्छति ।
यमश्वहरित सोऽपि समागृह्य[2] मुदा अपि ॥
समारूह्य[3] सुशीघ्रेण शान्तिपुराद्विशेषतः ।
यत्र आ(ढ़ा)धाराख्यह्रदं गन्धावत्या याम्यदिशि ॥
स राजापि समागत्वा दुर्वाकु(ण्डा)न्दान्तस्मिन् क्षिपेत् ।
यद्वत्पूर्वं प्रउक्तञ्च[4] शान्तिकरेण (शा)सास्त्रिणाम् ॥
तस्मात्सर्वप्रकारेण आज्ञायापि च सः कृतम् ॥
कायवाक्चित्तएकेन वाचयामि पुनः पुनः ।
शान्तिकर आज्ञा चापि शि(स)रसा मनसा दधन् ॥
यदुक्तं शान्तिकरेण तत्प्रकारेण शीघ्रकम् ।
यत्र भ्रमनध गच्छेद्दूर्वाकुन्दान्सुपुष्पकान् ॥
पूर्वमुक्तं प्रकारेण शान्तिकरस्य आज्ञया ।
तस्मादश्वं समारुह्य स राजात्र विवेशति ॥
तस्मिं ह्रदे दूर्वाकुन्दान्पृष्ठ(त)तः पृष्ठतः गतः ।

---

१ D ०कामौ। २ B D समागृह्य। ३ B D समारुह्य। ४ D प्रदत्तञ्च।

यत्र कर्कोटकवेश्म स राजात्र विवेशति ॥
यत्र कर्कोटकनागः ह्रदस्याभ्यन्तरे स्थितः ।
नागपूरे प्रशादे सः[1] गुरुभावात् प्रगच्छति ॥
स्वबुद्ध्या स्वसमर्थेण गणकामगतं न हि ।
इत्थं गत्वा यत्र नागं शीघ्रं स उक्तवानपि ॥
कर्कोटक नागराजन्[2] शान्तिकरस्य दूतोऽहम् ।
मे गुरो वचसा शीघ्रं आगम्यतां शान्तिपुरे ॥
अनावृष्टेः सुवृष्ट्यर्थं[3] सर्वे नागाः समागताः ।
शान्तिपुरे गुरो भावात् त्वमेकं आगतं न हि ॥
शान्तिकरस्य दूतोऽहं निश्चयं त्वया ज्ञास्यसि ।
मे गुरो वचनादेव शीघ्रं शीघ्रं आगम्यताम् ॥
मे गुरोः शान्तिकरस्य वचनमपि निश्चयम् ।
शान्तिपुरे साधनाय समाक्रानय आगतः ॥
वरुणो[4] नागराजेशः अनन्तः पद्म(त)स्तक्षकः ।
वासुकिः[5] शङ्खपालश्च महापद्मः कुलिकमपि ॥
एते अष्टनागराजा आद्य नागलोकजाः ।
त्रयस्त्रयः कोटिनागाः शान्तिपुरे समागताः ॥
कर्कोटक भवानेक न आगतं शान्तिपुरे ।
आगम्यतां शीघ्रेण मे गुरो आज्ञयापि च ॥

---

१ D नागपूरप्रसादे स ।   २ D नागराज ।
३ D अनावृष्टे सुवृष्ट्यार्थं ।   ४ D वरुण ।   ५ D वासुकि ।

अत्र नेपालका लोकाः बहुदुःखेन पीड़िता ।
अत्यर्थेनावृष्टिनापि तच्छान्ताय प्रागम्यताम् ॥
एकवारं द्विवारं वा त्रिवारञ्च पुनः पुनः ।
शान्तिकर[1] वच उक्तं किञ्चिच्च माननितं न सः ॥
शान्तिकरस्य यद्वचं तस्मै सर्वं निवेदितम् ।
कायवाक्चित्तएकेन गुरुकस्य आज्ञयापि च ॥
एकं शान्तिकर आज्ञां किञ्चि(च)च्च मानितं नहि ।
गुणकामाय गौरवं सादरं कुत्र विद्यते ॥
आसनादि पूज्यं मान्यं किञ्चिद्दत्तं न हि ।
रूपरूप[2]युक्तेन अत्यर्थमभिमानि(णि)कम् ॥
अभिमानाहङ्कारममकारेण पूरितम् ।
स्मितकरूपयुक्त[3]स्तस्य वाचं न मानितम् ॥
अहमत्रापि नेपाले कालीह्रदशेषपय[4] ।
आढाराख्ये(ख्य) नाम्नि ह्रदे तिष्ठामि पूर्वकमपि ॥
यस्मिन्मञ्जुदेवः शास्ता कालीह्रदच्छेद[5]कृतम् ।
तस्मात्तद्यापि मे चार्यं दत्तमाधाराख्यकृतात् ।
मया विना शान्तिपुरे शान्तिकर जगद्गुरुः[6] ॥
नागसाधनकार्य्यञ्च कथं सिद्धं करिष्यति ।
अष्टानां नागराजानामेकमहं श्रेष्ठन्न हि ॥
क्षितीश[7]नागकोटिनां अहमेकं हि नायकः ।

---

१ D शान्तिकरम् । २ D विरूपरूप० । ३ D ०कुरूपयुक्त ।
४ B D ०शेषपये । ५ D छेदने । ६ D ०गुरोः । ७ D तृतीयश० ।

इत्यभिमानयुक्तेन ईर्ष्याचित्तेन संयुतः ॥
एषः कर्क्कोटकनागः अत्यर्थं मौनिकं भवेत् ।
शान्तिकराख्य आचार्य्यः[१] मन्त्रवशादागच्छसि ।
मानुष्यराजस्य वरादानियन्तं द्रुतं कुतः[२] ॥
अहमपि नागराजेनापि[३] मानुष्यराजकः ।
राज्यराजा वने सिंहाः स्वशिष्वि च[४] पराक्रमम् ॥
अन्यशिष्वि नहि जातुस्थानेन सा(शा)दृशमिव ।
शान्तिकरः सिद्धाचार्य्यः भूतकालस्यापि न हि ॥
अहं कर्क्कोटकनागः[५] दीर्घराजा(जो) भवामि हि ।
अयं शान्तिकराचार्य्यः वज्रसत्त्वं भविष्यति ॥
वज्राचार्य्यपदं लब्धादज्र(ज)सत्त्वमपि न हि ।
इत्थं सञ्चिन्त्य भूयोऽपि कर्कोटकनागोऽपि च ॥
अत्यर्थञ्चाभिमानेन अमन्यमौनकं भवेत् ।
सः प्रचण्डगौड़राजास्तत्रायाता पदं लभात् ॥
शान्तिपुरेऽपि तिष्ठाच्च वज्राचार्य्यपदं लभात् ।
अभिमानमित्येवञ्च प्राप्तान् सोऽपि शान्तिकरः ॥
मे एकनागराजाय आमन्त्रणं कृतं न हि ।
आमन्त्रणं न कृताच्च न गच्छामि अवश्य(स्य)कम् ॥
विना मन्त्रेण दूतेन न गच्छाम्य[६]वश्यकं न हि ।

---

१ D शान्तिकराख्य चार्य्या । २ A आनियंतं कुतः ।
३ D नागराजोऽहं सोपि । ४ A च स ।
५ D कर्कोटको नागः । ६ D गच्छामि ।

अथ तस्य नागकन्या सत्पती पुरुषव्रती ॥
तस्य पुंस अभिमानं दृष्ट्वा शीघ्रमुवाच तम् ।
कर्कोटकनागभक्त[1] अभिमानं किमर्थकम् ॥
शान्तिकरस्य दूतस्य वचनं किं न मानितम् ।
प्रथमं गौड़राजा सः प्रचण्डदेवख्यापि(तं)तः ॥
पश्चाच्छ्रीशम्भुवः स्थाने लब्धं वज्रसत्त्वपदम् ॥
ततः पूज्यकः शम्भोश्च पञ्चपुरादीन् थापितम्[2] ।
त्वं विभो नागराजे(श)शः कथञ्चनापि ज्ञायताम् ॥
सर्वेषु मर्त्यलोकेषु गौड़लोकं प्रचण्डकम् ।
नाम्नायं प्रचण्डदेव राजाचार्य्य सिद्धगुरुः ॥
शान्तिकर नामाचार्य्यः प्रतिरूपधरमपि ॥
श्रीवज्रसत्त्वनाथस्य अंशाद्वा देहकादपि ॥
त्वमपि नागराजोऽपि उरगरूप वा नहि ।
लम्बितकमिव रूपं त्वया मौनेन किङ्कृतम् ॥
गुणकाम अयं राजा मानुष्यराजसत्तजः ।
तस्य दूतस्य भावाच्च आढ़ाराख्ये गत अपि ॥
अगाढ़े शलिलपूर्णे अनेकैर्मकैः पूरिते ।
हरिदश्वं समारुह्य तव गृहे समागतः ॥
कर्कोटकनागराजंस्तव देहेऽस्ति विषकम् ।
इत्यं दर्पञ्च प्राप्तोऽपि अयं दह्यसि शीघ्रकम् ॥

---

१ D °भर्त्ता ।   २ D पूरादी थापितं ।

सा(शा)मर्थेण दर्पेणापि पराक्रमबलेन च ।
एवं प्राप्तोऽस्मि राजन् [1]त्वं अयं न दह्यति कथम् ॥
एवमुक्ते कर्क्कोटको नागराज महानपि ।
मनसि भिन्नकूरेण अत्यर्थं मौनकं कृतम् ॥
अथ गुणकामदेव तस्याशयं प्रजानितम् ।
शान्तिकर गुरौ भावात् स्वबुद्धा नापि साम्प्रतम् ॥
अयं कर्क्कोटकनागः क्रूरात्मा उग्ररूपकः ।
मे गुरोः कार्य्यवशान्नित्यं[2] अवश्यमागतं न हि ॥
शान्तिकरस्य आज्ञया अहमत्र समागतः ।
[3][शान्तिना यद्वचमुक्तं करोमि शीघ्रकमपि ॥
गुणकाम देवराज इत्थं सञ्चिन्त्य तत्क्षणात् ।
शान्तिकर उक्तवाचं मनसाशु स्मरणं कृतम् ॥
मनसा वाचा कर्म्मणा एकत्वेन गुरुं स्मरन् ।
मनसापि विशुद्धेनाशु[4] स्मरणं शान्तिकरम् ॥
भोऽपि शान्तिकर नाथ तवाज्ञां शिरसा वहन् ।
एषोऽभिमानिको नागः प्राप्नियेहं तवाज्ञया ॥
त्रिविषपूरितं नागं क्रूरात्म[5]चण्डरूपकम् ।
अस्यापि मुण्डकेशञ्च गृह्णामि हस्तेन कथम् ॥
इति ज्ञात्वा मया सद्य शीघ्रं केशं ग्रहं कथम् ।

---

१ A राजत्वं ।  २ B कार्य्ये स नित्यं ।
३ C omits the portion bracketted; see page 471.
४ D विसुद्धेनास्त्रु ।  ५ D क्रूरात्मं ।

गुरो सर्वज्ञनाथ त्वं मह्यं देहि बलमपि ॥
कायवाक्चित्त एकेन शान्तिकरं स्मरणमपि ।
सव्यहस्तेन शीघ्रेण तत् केशानि प्रगृह्यति ॥
प्रथमं केश संगृह्य पश्चादश्वमारुह्य च ।
अत्यर्थं शीघ्रं शीघ्रेण समानीतस्तस्माद्ध्रदात् ॥
अत्यर्थं[1] शीघ्रवेगेन अश्वेन सञ्चरनपि ।
यत्र श्रीशम्भुनाथश्च तत्र सम्मुखमागतम् ॥
ततो ह्रथात्समानीत गुणकामदेवेन सः[2] ।
आनीते येन मार्गेण वग्निकाचर[3] मुच्यते ॥
आह्रदाद्यत्र गोपुच्छपर्वतं शम्भू तिष्ठति ।
तस्यापि पर्वतस्याधो उपत्यकायां[4] प्राप्नोति ॥
यत्र विश्रामितं राजा गोपुच्छपर्वते अ(ध)धः ।
उपत्यकायां भूमौ च[5] स्थितादश्वात्समागतः ॥
आविश्रामितात्मार्गश्च आढाराख्ये ह्रदान्तरम् ।
अत्रजैर्मानुष्यैः सर्ववग्निकाचरख्यापितः ।
ततः प्रभृतिरद्यापि अत्रजा मनुजादयः ॥
तत्र स्थितौ च पाषाणौ कर्क्कोटकौ नागौ स्मृतः ॥
गुणकामोऽपि पश्चाच्च गोपुच्छ[6]पर्वते विशत् ।
यत्र शान्तिपूरे गुरुं कर्क्कोटकेन च सह ॥

---

१ D अत्यर्थं । २ D ह्रथा समानीत...देवसद्गुरुः ।
३ A वग्निका च D वग्निकाचल । ४ D पर्व्वतस्याधे उपत्यकाया ।
५ D उपत्यकायौ भूमे च । ६ D गोपुच्छे ।

कर्क्कोटको नागराजा गुणकामस्य पृष्ठतः ।
यत्रागतः स राजोऽपि तत्पृष्ठतः समागतः ॥
यत्र कर्क्कोटको नागः गोपुच्छ[1]पर्वते विशत् ।
तस्य नागस्य भावेन ग्रीष्मं वृष्टिपूर्णकृतम् ॥
तस्यागमनमात्रेण वृष्टिपूर्णं[2] महीकृतम् ।
विना पूजाया भावेऽपि अत्र नेपालमण्डले ॥
कर्क्कोटकनागकन्या भर्त्तृदुःखमसह्यकात् ।
यद्दुःखितं प्ररुदितं तस्माद्दृष्टिपूर्णं[3] कृतम् ॥
भर्त्ताविहीना या नारी जीवन्तोऽपि मृतोपमा ।
दरिद्रोऽपि भर्त्ता यस्या सा आस्ते धनदोपमा ॥
यस्य माता पिता नास्ति सुखं तस्य न विद्यते ।
यथाहीनो यथामूर्खः परत्रेह च सत्तमः ॥
मातापितृविहीनस्याप्यज्ञस्याप्यविवेकिनः ।
अपुत्रस्य वृथा जन्म ऋणग्रस्तस्य चैव हि ॥
चन्द्रहीना यथा रात्रिः[4] पद्महीनं यथा सरः ।
पितृहीनो यथा पुत्रस्तथा पतिविजोजितः ॥
धर्म्महीनो यथा जन्तुः कर्म्महीनो यथा गृही ।
पशुहीनं यथा वेश्म तथा भर्त्तृवियो(जो)जितः ॥
अस्वाध्यायो तथा मूर्खविप्रो ह्यनातिथ्या तथा गृही ।
दानशून्यं यथा द्रव्यं तथा भर्त्तृवियोगितः ॥

१ D गोपुच्छे । २ D ०पूर्णा । ३ D ०पूर्णा । ४ D रात्री ।

सत्यहीनं यथा वाक्यं सद्भिर्हीना यथा सभा ।]
तपो यथा दयाहीनं तथा भर्त्तृवियोगितः ॥
गुणहीना यथा नारी जलहीना यथा नदी ।
अशा(ति)न्तिदा यथा विद्या तथा भर्तृवियोगिकः ॥
इति विचिन्त्य नागेशी तत्र नेपालमण्डले ।
भर्त्तुः स्मरणं कृत्वा वृष्टिपूर्णं कृतं द्रुतम्[१] ॥
इत्थं गुणमययुक्तं कर्क्कोटकनागमपि ।
अष्टानां नागराजानां मध्ये विशेषः श्रेष्ठकः[२] ॥
इति शान्तिकर ज्ञात्वा गुणकामं दूतं कृतात् ।
कर्कोटकं एनं[३] नागं समाह्वयत(त)स्तत्क्षणात् ॥
अथ गुणकामदेवः शान्तिपूरे समागतः ।
वह्निकोष्ठेऽपि स्थित्वा सः कपाटघट्टनं कृतम् ॥
तस्य शब्दात् स आचार्य्यः कपाटोद्घाटनं कृता(त्) ।
वहिः पश्यति शीघ्रेण कपा(त)टघट्टनादपि ॥
ततः पश्चाच्च गुणकामः शान्तिकरं(र) जगद्गुरुम् ।
सर्ववृत्तान्तमुक्तेन नम्रिकृत्वा उवाच सः ॥
भोऽपि शान्तिकर गुरो एष नागः कर्क्कोटकः[४] ।
भवता पूर्वमुक्तेन प्रकारेण समासतः ॥
यत्कार्य्यं करणीयश्च तत्सर्वं ज्ञास्यसि भवान् ।

---

१ D तथा । २ D विशेषश्रेष्ठक । ३ D कर्कोटक एव ।
४ D नागकर्कोटकः ।

अयं कर्कोटकनागः[१] समागच्छसि साम्प्रतम् ।
एवमुक्ता गुणकाम नागराजं कर्कोटकम् ।
शान्तिकराय गुरवे सम्यग्ददौ सुशीघ्रकम् ॥
अथ शान्तिकराचार्य्यः गुणकामात्प्रगच्छति ।
कर्कोटकं नागराजं समानीय अन्तर्गतम् ॥
कपाटञ्च प्रावृत्य च शान्तिकरजगद्गुरुः ।
शान्तिपूरे अभ्यन्तरे नागेण सह गच्छति ॥
गुणकामदेवराजा शान्तिकरपत्नीरपि ।
गुरुमाता अपि लोका वह्निकोष्ठे प्रतिस्थिताः[२] ॥
ब्राह्मणाः चत्रिया वैश्याः शूद्रा(चा)श्चाच नेपालजाः ।
शम्भूस्थाने नेपाले वा स्थिताः शिष्या वाह्यस्थिताः ॥
शान्तिकर आचार्य्योऽपि तत्र गोपुच्छपर्वते ।
सदा स्थित्वा विनापूजात् शान्तिपूरे वेशं न हि ॥
त्रयस्त्रय कोटिनागाः अभ्यन्तरे वेशं न हि[३] ।
वरुणादिनवनागाः शान्तिकरेण वेशिताः ॥
ततः पश्चात् सर्व्वे नागाः वाह्ये च कोष्ठके अपि ॥
शान्तिगुरोः प्रभावेन वाह्येऽपि संस्थिताभूवन् ।
अथ शान्तिकराचार्य्यः शान्तिपूरस्याभ्यन्तरे ॥
विशेषेण नागकोष्ठे नागाञ्च साधनं कृतम् ।
अष्टदलाकारपद्मं लिखित्वा पिष्टवासकैः ॥

---

१ D कर्कोटको नागः । २ D वेदिकोष्ठे प्रतिष्ठिका । ३ D त्रय-त्रय...वेशनं नहि ।

ततश्चापि नवनागान्[१] संस्थापितं जगद्गुरुः ।
वरुणं नागराजेशं मध्ये श्वेतं प्रथापितम् ॥
पूर्वेऽनन्तं नीलवर्णं मृणालं याम्य[२]पद्मकम् ।
परे कुङ्कुमं तक्षकं उत्तरे वासुकिं हरित् ॥
शङ्खपा(र)लमग्नेः पीतमिन्द्रनीलं कर्कोटकम् ।
नैऋत्ये विदिग्संस्थाप्य वायौ कुलिकं श्वेतकम् ॥
ऐशाने च महापद्मं कनकवर्णसन्निभम् ।
एतान्नवनागराजान् स्थापितान्मण्डलकृतान् ॥
शान्तिकरः सिद्धाचार्य्यः शान्तिपूरे विशेषतः ।
दूर्वाकुण्डैः सुपुष्पैश्च श्रीखण्डैश्चन्दनैरपि ॥
सिह्लामैर्धूपनैर्वापि गोदुग्धैश्च विशेषतः ।
पञ्चामृतादिभिः पूगैः स्वर्णचूर्णैः पालारसैः ॥
इत्यादिनागपूज्यैस्तु नागराजान्[३] प्रपूजितम् ।
शालितण्डुलं दुग्धञ्च पञ्चामृतैस्तृतैल्यकम् ॥
तेभ्यस्सर्वेभ्यो नागेभ्यो भोजनञ्च [४]ददाति च ।
लाजाभिरक्षतैर्दुग्धैर्दुर्वाकुण्डैस्सुवर्णकैः ॥
पूर्ण[५] कृत्वा शङ्खेनापि तेभ्यश्चार्घं ददाति स ।
इत्थमेकत्वः सकला[६]न्नागान्संहृत्य यत्नतः ॥
शान्तिदेवेन यदुक्तं मैत्रेयाकर्णताच्छृणु ।

---

१ D नागा ।  २ D याम्ये ।  ३ D नागराजा ।
४ A ददाति स ।  ५ D पूर्णा ।  ६ D एकत्वसकला ।

भो यूयं नवनागाश्च नागेश वरुण अपि ॥
अनन्त पद्मक चैव तक्षक वासु(शु)के तथा ।
महापद्म शङ्खपा(ल)र कर्कोटक कुलिक अपि ॥
मद्देकवचनं वापि एकचित्तेन श्रूयताम् ।
अद्यप्रभृति युष्माभिस्तत्र वृष्टिं विधीयताम् ॥
काले कालेऽत्र कुरुथ सत्यमित्यमदीदिशत् ।
अत्रजानामन्यजानां सर्वेषाञ्च हिताय च ॥
शस्यपूर्णाय युष्माभिः अत्र शीघ्रं वृष्टिं कुरु ।
निशम्यते तस्य वचस्तत्क्षणादि(वि)ष्टिमानसा ॥
ववर्षुर्जलमुद्दामधारामालोकचिन्तितम् ।
सर्वत्र मण्डले चात्र नेपाले च विशेषतः ॥
धारासम्पातमात्रेण वृष्टिपूर्णं कृतं मही ।
वरुणादिनवनागाः अनन्तः पद्मतक्षकः ॥
वाशुकिः शङ्खपारश्च[1] कर्कोटः कुलिक अपि ।
महापद्मादय नागराजा दिग्विदिग्संस्थिताः ॥
शान्तिकराज्ञया तत्र शीघ्रं वृष्टिपूर्णं कृतम् ।
अन्यापि नागलोकाश्च त्रित्रयः कोटिनागकाः ॥
शान्तिपुरे आगतास्ते वृष्टिपूर्णं शीघ्रं कृतम् ।
नेपाले मण्डले चात्र सर्वत्रापि भुवि अपि ॥
अहोरात्र एकेनापि पृथ्वी जलमयं भवेत् ।

---

१ D वासुकिशङ्खपालश्च ।

अथ शान्तिकराचार्य्यः कपाटोद्घातनादपि ॥
बहिःकोष्ठे स्थितं राजं तेभ्यः पूजायोवाच सः ।
भो गुणकामदेव त्वं शान्तिपुरे बहिःस्थितान् ॥
नयत्रयः कोटिनागान् शीघ्रञ्च प्रपूजय त्वया ॥
पञ्चोपचारविधिभिः पञ्चामृतादिभिरपि ।
विशेषैः पायसैर्दुग्धैः सर्वान्नागान् प्रपूजितम् ॥
इति तस्य वचः श्रुत्वा गुणकामाख्यभूभुजः ।
शान्तिकरस्य आज्ञया सर्वान्नागान् प्रपूजितम् ॥
शान्तिकरेण यदुक्तं तत्प्रकारैर्विधैरपि ।
सर्वान्नागानत्रायातान् पूजयामास सत्वरम् ॥
अथ पुनः शान्तिकरः कपाटं प्रावृतं कृतात् ।
अभ्यन्तरे शान्तिपुरे गत्वा नागानुवाच सः ॥
शान्तिकराचार्य्य यत्र वरुणं नागानथापि तम् ।
शीघ्रं गत्वा च वृष्ठाय भविष्यकालके अपि ॥
ब्रह्मक्षत्रियवैश्यादीनां शूद्राणामत्र वा(शि)सिनाम् ।
पश्वादितिर्य्यक्जातीनां हिताय च सुखाय च ॥
विशेषैरत्र नेपाले वृष्टिदोषविनाशये ।
भविष्यकाले अपि च शीघ्रं वृष्युद्भूताय च[1] ॥
भो नवनागराजा वै[2] मद्वाचं शीघ्रं श्रूयताम् ।
अहमस्ति कालेऽप्यत्र बलादानीयतां भवान् ॥

---

१ D वृष्ट्यो भूताय च । २ D ०नागा वै ।

न मानितं मे मन्त्रञ्च ममाज्ञां कुत्र मानितम् ।
भविष्यकाले अन्यापि सिद्धलोकाः क मानितम् ॥
अहं शान्तिकराचार्य्यः राजाचार्य्य गौड़ज अपि[१] ।
तथापि मम वाचं हि यूयमपि न मानितम् ॥
कर्कोटकोऽपि नागेश किञ्चिच्च मानितं नहि ।
गुणकामदेवराजा बलादानीयतामपि ॥
एवं भूतं भविष्यञ्च वर्त्तमानमपि तथा ।
प्रजानामि शम्भूवंश मद्वचः श्रूयतामिति ॥
वरुणादिनवनागाः युष्माकं दुःख मा कुरु ।
किञ्चित् मद्वचः सारञ्च श्रूयतां निश्चयमपि ॥
एकचित्तेन मनसा कर्म्मणा वचसा अपि ।
यूयमपि नवनागाः शीघ्रञ्च श्रूयतां वचः ॥
सत्वानाञ्च हितार्थाय सदा वृष्टिकृताय च ।
विशेषमत्र नेपाले सुभिक्षाय मुदा सदा ॥
युष्माकञ्च शरीरस्य स्तोकञ्च रुधिरमपि ।
समागृह्य सुशीघ्रेण लङ्केण सह मीलितम् ॥
नीलं पीतं हरिद्रकं श्वेतञ्चापि विशेषतः ।
युष्माकं रुधि(र)रमिश्रं लङ्कञ्चापि क्षतादपि ॥
[२][युष्माकमपि वर्णेन दिग्विदिचु स्थानेन च ।

---

१ A D omit राजाचार्य्यं, D reads गौड़जं देशजमपि ।
२ C omits the portion bracketted.

अत्र कृतमण्डलवच्चित्रयामि च पटकम्[1] ॥
युष्माकमपि देहाच्च संगृह्य रुधिरमपि ।
दुःखमपि क्रीयते तें सत्वानां हितकाम्यया ॥]
मानुषाणां पशूनाञ्च पक्षिणाञ्च तथा अपि ।
क्रिमिकीटादिजन्तूनां हिताय च सुखाय हि ॥
अत्रजानामन्यजानामत्रापि वासिनामपि ।
सत्वानाञ्च हितार्थाय शीघ्रं कार्य्यं कृतं मया ॥
एवमुक्तेऽपि ते सर्वे वरुणादिनागाष्टकाः ।
एकवागेकस्वरेण प्रत्युवाच शान्तिकरम् ॥
भो शान्तिकराचार्य्य सिद्धाचार्य्यगुरो अपि ।
भवतः यत्कार्य्यमस्ति[2] तत्प्रकारञ्च क्रीयताम् ॥
मानूष्यपशुतिर्य्याणां हिताय च सुखाय तु ।
भवत मनसि जातं तत्कार्य्यञ्च प्रक्रीयताम् ॥
एवमुक्ते स आचार्य्यः शान्तिक(र)रः सिद्धगुरुः ।
मन ऋद्धि सङ्कुर्वन् एकं प(ट)टं चित्रं कृतम् ॥
अष्टदलविश्वपद्ममध्ये नागेश वारुणम् ।
श्वेतवर्णं द्विभुजञ्च सप्तफणिविभूषितम् ॥
मङ्गलासनमेकाश्यं इन्द्रनीलमणि दधन् ।
वामहस्ते उत्पलञ्च दधन् संस्थितनायकः ॥
पूर्वेऽनन्तं याम्ये पद्मं[3] पश्चिमे तक्षकमपि ।

१ D पट्टकम् । २ D भवत यत्कार्य्यमस्तीति । ३ D याम्यपद्मं ।

उत्तरे वा(शु)सुकिमग्ने शङ्खपालं कर्कोटकम् ॥
नैऋत्ये वायौ[१] कुलिकमीशाने महापद्मकम् ।
पटे नवनागराजा शान्तिकरेण लेखितम् ॥
नाभेऽर्द्धमानुषं[२] रूपं पञ्चफणिविभूषितम् ।
अध उरगरूपञ्च चितमणि संदधन् ॥
स्वस्ववर्णमेकाश्यञ्च स्वस्थाने दिग्विदिग् स्थिताः ।
मण्डलं कृत पूजाय तत्प्रकारेण चित्रकम् ॥
रुधिरं शरीरे गृह्यात्तेषां किञ्चिद्व्रणं न हि ।
शान्तिगुरोः प्रभावाच्च व्रणदुःखं कुत्र कथम् ॥
लङ्के रुधिरमिश्रैः पटञ्च लिखितादपि ।
दशकर्म्मादिकं कर्म्म प्रति(ष्ठा)स्था च चकार सः ॥
ततस्ते ६ापितास्ते(ते)न पटं नागपूरे शुभे ।
चित्रयित्वा पटे नित्यं पुनरित्यं स कालवित् ॥
नवनागलेखपटं निश्चयं स्थापितं गुरुः ।
नागपूरे प्रसिद्धेनं शान्तिपूरेऽप्यस्मिन्न हि ॥
ततः सर्वे नागलोकाः प्रणिपत्य स्वयम्भूवम् ।
शान्तिकरस्याज्ञां प्राप्तात् स्वस्वगृहं प्रगच्छति ॥
अनावृष्टे प्रसार्य्यतः वृष्टिस्यां[३] निश्चयं द्रुतम् ।
ततःप्रभृति मैत्रेय काले वृष्टि सुजायते ॥
अत्रजा अन्यजा लोकाः प्राप्ता नेपालवासिनः ।

---

१ D नैऋत्यवायु । २ D नाभेधर्मानुषं । ३ D प्रसार्य्ये तद्वृष्टिस्यां

सुभिक्षं मुदिता लोका नानोत्सवसमाहिताः ॥
[illegible]पैर्नैवेद्यैस्तीर्थतोयकैः ॥
पञ्चामृतादिभिर्दुग्धैः पटनागेभ्यः पूजितम् ।
परस्परैर्जलसिक्तं याचामहं कृतादपि ॥
श्रीस्वयम्भूपूजनाच्च नागपूरे प्रपूजितम् ।
यत्र शान्तिकराचार्य्यं नागपूरे प्रथापितम् ॥
तत्पट नागराजेभ्यः अत्यर्थं पूजनं कृतम् ।
नागवेणु प्रति(ष्ठा)स्थाप्य दूर्वामालांश्छत्रमपि ॥
नागकुम्भं गोलोमीञ्चस्तृणकुण्डलमपि ।
पालारसैः स्वर्णचूर्णैः शालितण्डुलैर्दुग्धकैः ॥
नागपूजाविधिभिश्च नागपुरे प्रपूजितम् ।
अद्यप्रभृति युष्माभिरत्र नेपालवासि(शि)भिः ॥
अनावृष्टिभावयुक्ते तस्मिं पूरे प्रपूजितम् ।
वर्त्तमाने भविष्ये च शाधकः कर्म्मकृदपि ॥
अस्मिन्पूरे नागलोके विशेषेण प्रपूजितम् ।
अस्मिन्नागपूरे पूज्यात् साधकविधिकर्म्मभिः[1] ।
तस्मात् पुण्यप्रभावाच्च वृष्टिपूर्णं भविष्यति ॥
इति ज्ञात्वा सदा यूयं अत्रजा मानुजादयः ।
अनावृष्टिभावकाले शीघ्रमत्र पूजा कृतम् ।
इत्थं कृत्वा शेषनागाः शान्तिकरं नमस्कृतात् ॥

---

१ A साधककर्म्मभिः ।

स्वेषु स्वेषु गृहे वासे सर्वे प्रत्यागताभवत्।
अथ कालान्तरे काले गुणकामदेव नृपः॥
अत्यर्थं मुद्[1]माप्ताच्च सुभिक्षं प्रापितादपि।
पुत्रस्तदीयो भूपालः नरेन्द्रो नाम जातवान्॥
स च धर्म्मात्मकः सत्ववत्स(रो)लोगु णसंयुतः।
सर्वलक्षणसम्पूर्ण सर्वालक्षणवर्ज्जितः॥
अत्यर्थं बौद्धकर्म्मकश्चन्द्रमेव क्षीरनिधौ।
असूतं नरेन्द्रपुत्रं[2] सून्द(लं)रं लक्षणान्वितम्॥
ततः स जनकः श्रुत्वा[3] सम्प्रजातं सूतं मुदा।
सहसा समुपासृत्य ददर्श तं सुसुन्दरम्[4]॥
दर्शनीयं सुभद्राङ्गं प्रासादिकं मनोहरम्।
दृष्ट्वापि[5] सुचिरं दृष्ट्वा मुदा तस्थावतृप्तितः॥
ततो जात्रां महत्[6]कृत्वा तस्य पित्रा प्रसा(शा)दतः॥
नरेन्द्र इति नाम हि प्रख्यापित जनेन च।
ततः स बालकः पुत्रः धात्रीभ्यः प्रतिपालने॥
मानयित्वानुसम्भाव्य पित्रा समर्प्पितोऽभवत्।
ततः स नरेन्द्रबालस्ताभिर्धात्रीभिरादरात्॥
पाल्यमानप्रवृद्धोऽभूत् ह्रदस्थमिव पङ्कजम्।
यदा स दारकः पञ्चवर्षितोऽभूत् स वीरकः॥

---

१ D अत्यर्थंमुदं। २ A omits पुत्रं। ३ D सजनक श्रुत्वा। ४ A सुन्दलम्। ५ D दृष्ट्यापि। ६ D जात्रा महत्।

तदा विद्योपलब्ध्यर्थं लिपिशालमुपाविशत् ॥
ततः स सद्गुरुं नत्वा क्रमाल्लिपिमुदाग्रहीत् ।
गुरुभक्तिप्र(सा)सादेन लिपिपारं ययौ लघुः ॥
ततः स गुरुभिः सम्पच्छिक्ष्यमानः सुबुद्धिमान् ।
अधीत्य सर्वशास्त्राणि विद्यापारं ययौ लघुः ॥
गुणकामादधिकेन नरेन्द्रनामभूभु(ज)जः ।
तस्मै स्वयम्भुवे नित्यं सदा मुदा पूजा कृतम् ॥
ततः कालान्तरे राजा वृद्धोऽभूज्जीर्णितेन्द्रियः ।
निष्क्लेशविरतभोग्यं ध्यात्वैवं समचिन्तयेत् ॥
वृद्धं भवति जीर्णाङ्गं तिष्ठाम्यहं कियच्चिरम् ।
अवश्यं दैवयोगेन यास्यामि मरणं ध्रुवम् ॥
तदद्याहं नरेन्द्राय प्रजालोकानुपालनं(ने) ।
साभिषेकमिदं राज्यं दातुमर्हति साम्प्रतम् ॥
इति ध्यात्वा स भूपालः नरेन्द्रदेवमात्मजम् ।
अभिषिच्य[1] नृपं कृत्वा सर्वराज्यं समादद्दौ ॥
नरेन्द्रत्वं समाधाय नीतिधर्म्मं(र्म्मं) समाचरत् ।
चिरत्नभजनं कृत्वा सञ्चरस्व सदा शुभे ॥
तदत्र सकलान् लोका(न्) नीतिधर्म्मानुपालयन् ।
चिरत्नभजनं कृत्वा सञ्चरस्व सदा शुभे ।
इत्यनुशास्य तं पुत्रं स्थापयति दशकू(कु)ले ॥

---

१ A D अभिषिंच्य ।

अतः पश्चाद्गुणकामः पुत्रं राजन् कृतादपि ।
स्वेच्छया शीघ्रं शम्भुवि शरणञ्च गतमपि ॥
शरणञ्च गतात्पश्चात् भिक्षुभावपदं लभात् ।
शान्तिगुरोः प्र(प्रा)सादाच्च भिक्षुचर्य्यं कृतमपि ॥
भिक्षुचर्य्यं कृतात्पश्चादत्यर्थं नेमसं(स्क)कृतात् ।
शान्तिकरप्रभावेन वैराग्यं लभते पदम् ॥
यथा शान्तिगुरुणापि नित्यं तस्मै प्रपूजितम् ।
गुणकामदेवभिक्षुः सदा तस्मै प्रपूजितम् ॥
पञ्चोपचारविधिभिर्धारणीस्तोत्रपाठकैः ।
प्रदक्षिणक्रमेणापि पञ्चाष्टाङ्गप्रणामकैः ॥
अहर्निशं प्रणिपत्य प्रतिरात्रौ प्रतिदिने ।
श्रीस्वयम्भूं नाथनाथं स भिक्षुः[1] पूजां सदा कृतम् ॥
गुणकामदेवभिक्षुस्तत्र स्थितेन सर्वदा ।
तस्मै पूजां(जा) सदा कृत्वा तत्र स्थाने सदा स्थितम् ॥
तस्मात्सदा स्वयम्भूवः शेवाकृताद्विशेषतः ।
शान्तिकराय गुरवे गुरुमात्रे से(शे)वां कृतम् ॥
महर्द्धिमवलोक्यास्य शान्तिदेवस्य भिक्षु सः ।
शिष्यतामगमत्तस्य[2] गतस्त्रिशरणं ततः[3] ॥
अथ नरेन्द्रभूपालः पितृराज्यञ्च प्रापितात्[4] ।

१ D सभिक्षु । २ A शिष्यतोऽगमत्तस्य D शिष्यतोगमस्तस्य ।
३ D गता । ४ D प्रापिता ।

अन्तःपुरे स्त्रीभिस्सार्द्धं पितृवद्राज्ये संस्थितम् ॥
हृष्टैः सम्पूज्य सकलैराचार्य्यं[1] नम्य सादरम् ।
तदन्तिकात् स्वभवनं गत्वा राज्यमसासयन् ॥
एवं कालान्तरेणापि गुणकामभिक्षुर्वेशकृत् ॥
तत् स्थितात्तयोः[2] प्रसादात् सुखावतिपदं गतम् ।
मानुष्यशरीरं त्यक्त्वा दिव्यदेहञ्च प्रापितात् ॥
राजहंसमिव गच्छेत् खपथेन सुखावतिम् ।
यथा तत्र स्थित(स्त)न्तद्वद् यत्र अपरिमितायुषम् ॥
सुखावतौ स्थितं तस्य मुखाद्धर्म्मं श्रुतादपि ।
यद्वच्छासितं[3] पितुना पौर्वकालेऽत्र मण्डले ॥
तथा तेन नरेन्द्रेण नेपाले पालितं प्रजाः ।
चतुर्वर्गैः स्वप्रजाभिः न ज्ञायते च[4] दुःखकम् ॥
किञ्चिच्च नूतनं वापि न ज्ञापितं प्रजाकृतात्[5] ।
एवं मैत्रेय नेपाले देवस्थाने सुसिद्धभौ[6] ॥
महत्प्रभावाच्च[7] ततः से(शे)व्यते मोक्षकामकैः ।
इन्द्रादिस्त्रयस्त्रिंशैश्च यामेशश्च या(य)मैरपि ॥
तुषितेशस्तुषितैरपि कामाचरैस्तथा अपि[8] ।
रूपाचरैश्च सर्वैश्च देवेशैः स्वगणैस्सह ॥

१ D आचार्य्यं । २ D स्थिता तयोः । ३ A शासित ।
४ A omits च । ५ D ०कृता । ६ D सुसिद्धये ।
७ D महत्प्रभावा च । ८ D कामावचरैः तथा and omits अपि ।

आरूप्यावचरैश्चापि वाञ्छि(ञ्छि)तं तत्र सर्वदा ।
मान्दारैर्महामान्दारैः पुष्पैश्च न रञ्जितैः ॥
अमृतादिदिव्यभोज्यैश्च तस्मै च पूजितं सदा ।
धृतराष्ट्र गन्धर्वैश्च[१] कुम्भाण्डैश्च विरूढकः ॥
विरूपाक्ष नागलोकैः वैश्रवण यक्षैः सह ॥
रुद्रदेवगणैस्सार्द्धं अप्सराभिः परिवृ(ता)ताः ।
श्रीस्वयम्भूं सदा पूज्य तदाच वाञ्छितं सदा ॥
प्रतिदिने प्रतिरात्रौ अहर्निशं सदा मुदा ।
वर्षजात्रामिव तस्मै तत्र स्थिता(ता): सदा कृतम् ॥
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्च अन्यजातिभिः ।
अत्रजैरन्यजैः सर्वैः सदा तस्मै प्रपूजितम् ॥
पूर्वजैर्दक्षिणजैश्च पश्चिमैरुत्तरैरपि ।
[२]विदिग्जैश्च सर्वे लोकैश्च तत्रायाताश्च पूजितम् ॥
ततः प्रभृतिरत्रैव श्रीस्वयम्भूजातादपि[३] ।
अहर्निशं प्रतिदिने जात्रामिव प्रपूजितम् ॥
त्रित्रिदेवकोटिभिश्च[४] स्वर्गलोकैस्सदा अपि ।
मनुजादिमर्त्यलोकैर्दैत्येन्द्रादिपातालजैः ॥
इत्थं स्वर्गमर्त्यलोकैः पातालजैः लोकैरपि ।
सदा तत्र स्थिताः सर्वे[५] स्वयम्भूवे प्रपूजितम् ॥

---

१ D धृतराष्ट्रश्च गन्धर्व्वैः । २ D विदिग्जैः सर्व्वलोकैश्च तत्रायाश्च सुपूजितं । ३ D स्वयम्भूजातादयः । ४ D ०कोटिश्च । ५ D स्थिता सर्व्वे ।

पञ्चोपचारविधिभिर्नानापूज्यैश्च[1] मर्त्यजैः ।
स्वर्गमर्त्यपातालजैस्तदा तस्मै प्रपूजितम् ॥
ततः प्रभृतिरत्रैव मैत्रेय शृणु दृश्यताम् ।
श्रीस्वयम्भोः सदा नित्यं जात्रामुत्साहं कृतम् ॥
पुनरपि शृणु मैत्रेय अयं शान्तिकर गुरुः ।
सिद्धाचार्योऽथ मनसा पूर्वसमाधिं स्मरनपि ॥
आस्फाणकं समाधिञ्च सर्वताथागतैरपि ।
अतीतैर्नागतैर्वर्त्तैः कृतं यद्बोधिमण्डपे ॥
मया सर्वज्ञनाथेन बोधिमण्डे स्थितादपि ।
यदास्फाणकं समाधिमेकचित्तेन यत्कृतम् ॥
तत्समाधिं स आचार्यः कृताय मनसि दधन् ।
कायवाक्चित्तएकेन मनसि निश्चयं कृतम् ॥
स च शान्तिकरो देवः सिद्धाचार्यमहर्द्धिकः ।
एवं कृत्य समावृत्य समाधिं विदधे पराम् ॥
स्वपूरस्यायतोऽधस्तात् भार्त्तो योजनमानतः ।
धर्म्मात्मकस्य कल्याणं श्रीसुखं विवरञ्च तत् ॥
यत्र शान्तिपूरे पूर्वे[2] मूलद्वाराद्भ्यन्तरे ।
द्वाराधे च समीपेऽपि एकगर्त्तर्द्धिना कृतम् ॥
योजनमानं भूमेधः काञ्चनमयभूमिके ।
समन्ततः सुशोभे च तुषिते वसुशोभिते[3] ॥

१ D ०पुष्पैश्च । २ D ०पूरपूर्व्वे । ३ D च सुशोभिते

चिन्तामणिकल्पवृक्षं चिन्तामणिघटमपि[१] ।
चिन्तामणिमणिश्चापि यत्र भूमौ स्थिते अपि ॥
यत्र चिन्तामणिवृक्षं घटञ्च मणिमादिकम् ।
एवं वापि प्रतिस्थेन तत्र दुःखं न जात्वपि ॥
अतीतानागतैस्सर्वैः प्रत्युत्पन्नैस्तथागतैः ।
अनेगैर्योगिभिः सिद्धस्तद्विना ध्यानकृन्न हि ॥
यथैकचित्तेन सा[२] कर्म्मणा निश्चयं कृतात् ।
अनेगध्यानकृद्वापि तद्वद्रत्नेऽपि प्रार्थितम् ॥
अन्नवस्त्रशय्यादि पूज्यभोज्यादिकमपि ।
तस्मिं रत्ने प्रार्थना(च)च्च पूर्णं कृता ददाति च ॥
शैवधर्म्मे यथा कामधेनु र्मुनिभिः पूजितम्[३] ।
तद्वत्तेन आचार्य्येण पूजितं मानितं मुदा ॥
पृष्ठे चिन्तामणिवृक्षं घटं सव्ये[४] दिशि अपि ।
मणिं वामदिशि स्थाप्य पूर्वाननं स्थितो गुरुः ॥
सिंहासने प्रतिस्थित्वा[५] वज्रासनेन मुद्रया ।
अप्रमितावस्थित्वा ऋजुकायेन संस्थितम्[६] ॥
यथाहं गयाशीर्षे पर्वते संस्थितमपि ।
तथा शान्तिकराचार्य्यः संस्थितं तत्र गर्त्तके[७] ॥
शान्तिक(र)रः सिद्धाचार्य्यः यत्र तिष्ठति सद्गुरुः ।

---

१ A चिन्तामणिभद्रघटमपि । २ D °चित्तेन च सा ।
३ A कामधेनुमूर्च्छितम् । ४ D सर्व्वे । ५ D प्रतिष्ठित्वा ।
६ D संस्थिता । ७ D गर्त्तते ।

धर्मात्मकं कल्याणञ्च श्रीसुखं विवरञ्च[1] तत् ॥
नाम्ना इत्थं गुरुं गर्त्तं भूमिं(मि) सर्वत्र भद्रकम् ।
समन्ततः सुशोभेन सुखावतिमिव[2] स्थितः ॥
भूमेऽध एकगर्त्तञ्च पातालभावकं न हि ।
स्वर्गलोके कनिष्ठे च सुखावतीव[3] शोभितम् ॥
यत्र एकरत्नेनापि भूषितं मुनिभूमिषु ।
यच्चिन्तितं सर्ववस्तुं[4] तद्रत्नेन ददाति च ॥
विशेषेण अत्र भूमौ शान्तिकरपुण्यादपि ।
त्रिरत्नभूषितेनापि तस्मादृशं भूमिं[5] कुतः ॥
धर्मात्मका हि भूमि सा धर्मात्मकेन वासि(शि)तात् ।
कल्याणमपि भूमि सा कल्याणमित्रेण वासि(शि)तात् ॥
श्रीसुखमपि[6] भूमि सा शान्तिकरस्य पुण्यतः ।
महर्द्धिकञ्च भूमि सा तस्य पुण्यर्द्धिना अपि ॥
यद्वत्सुखावतौ स्थाने अपरिमितायुषः स्थितम् ।
तद्वत्तत्र भूमौ चापि शान्तिकरः प्रतिस्थितम् ॥
तद्भूः स्वर्गोपमा कल्पवृक्षचित्रसुमण्डिता ।
मनोरमास्ति तत्रस्थसमाधिकृतनिश्चयः ॥
तस्माद्ये या मनुष्यास्तु तत्र शान्तिपू(पु)रे अपि ।

---

१ D श्रीसुखविवरञ्च । २ D सुखाचितमिव ।
३ D सुखावति च । ४ D ०वस्तु । ५ D तच्छादृशभूमिं ।
६ D श्रीसुखामपि ।

मन्त्रजापञ्च कृत्वाशु सिद्धिं मोक्षञ्च प्राप्यते ॥
त्रिप्राहस्ते महालोके तस्मादूर्ध्वं[1] भूमिं न हि ।
स्थानं शुभञ्च शान्तिपुरं शान्तिकरेण संस्कृतम्[2] ॥
अक्षमालादिजापैश्च अनेगदेवमन्त्रकम् ।
तत्रेश्वरस्य सर्वेषां मन्त्रं सिद्धं[3] भविष्यति ॥
अस्माद्यापि दीर्घे च भविष्ये[4]कालके अपि ।
पूर्वद्वारे भि(त्तिं)त्तिं कृत्वा दक्षिणद्वारं(र) प्राकृतम् ॥
इति ज्ञात्वा स्वयं शिष्याः मोक्षञ्च साधनाय च ।
तस्मिं शान्तिपुरे नित्यं मन्त्रजापं कृतमपि ॥
सर्वेषामपि पी(था)ठानां जापलक्षकृतादपि ।
एकफलञ्च सम्प्राप्तात्त[5]स्मात्कोटिफलं लभेत् ॥
विशेषैरन्यस्थाने च स्वल्पफलं प्रलभ्यते ।
तस्मिन् कृतजापस्यापि ततोऽसङ्ख्यं लभेत् फलम् ॥
इत्थं ज्ञात्वा अत्रजाश्च अन्यजा मनुजादयः ।
अत्र च वा(शि)सिनः सर्वे तस्मिं जापं कृतमपि ॥
तस्मिन्सुकृतजापस्य फलसङ्ख्या न विद्यते ।
[6]सर्वभूमिरुहानाञ्च पत्रसङ्ख्यापि विद्यते ॥
सर्वपृथ्वीरुहानाञ्च फलसङ्ख्यापि विद्यते ।
सर्वेषां सत्वजातीनां लोमसङ्ख्यापि विद्यते ॥

---

१ D तच्छादूर्ध्व° । २ D संस्थितं । ३ D मन्त्रसिद्धिं ।
४ D भविष्यः । ५ D संप्राप्तास्तस्मात् । ६ D omits this line.

वङ्ग अहर्निशि वर्षं[१] वृष्टिसङ्ख्यापि विद्यते।
सर्वनदीसमुद्राणां जलसङ्ख्यापि विद्यते॥
नदीसमुद्रभूमिनां वालुसङ्ख्यापि विद्यते।
तस्मिञ्च[२] कृतजापानां फलसङ्ख्या न विद्यते॥
अनेन शान्तिपुराख्यातं शान्तिकरेण च कृतात्[३]।
तस्मिं जापकृतेनापि शान्त्यादिफल लभ्यते॥
इति ज्ञात्वा यूयं चात्र नेपालवाशिनो जनाः[४]।
प्रतिदिने प्रतिरात्रौ तस्मिं पूजाकृतमपि॥
पुष्पैर्धूपैश्च गन्धैश्च नैवेद्यैर्लड्डुः पेयकैः।
सदा मुदा प्रपूज्यात्र ते मोक्षमधिगच्छति॥
सः समाधेः समुत्थाय चिरकालेन वज्रभृत्।
देशयिष्यति नेपाले धर्मं[५] मोक्षं प्रकाशकम्॥
वज्राचार्यस्वरूपेण शाक्यवंशस्वरूपिणा।
भिक्षुरूपेण सर्वेण उपाशका उपाशिका॥
एवं रू(प)पं समावृत्य शान्तिकरो जगद्गुरुः[६]।
अत्र सद्धर्महीनेऽपि प्रतिरूपेण देशितम्॥
विशेषेणात्र नेपाले स्वयम्भुवः प्रसा(शा)दतः।
सद्धर्महीने काले तत्प्रतिरूपेण देशितम्॥
इति ज्ञात्वापि यूयं शिष्या अत्रजास्त्वान्यजापि च।

---

१ D वर्षे। २ D तस्मि च। ३ D कृता। ४ D नेपाले वाशिन जना। ५ D धर्म्म मोक्षम्। ६ D जगद्गुरो।

सद्गुरुमत्रजं[1] वापि कल्याणसद्गुरुमिव॥
[2][यूयं शिष्यापि तत्सर्वें अत्रजा मनुजादयः।
शान्तिकरप्रतिरूपमत्रजं परमं गुरुम्॥
ततः भविष्ये काले च अत्र नेपालमण्डले।
सद्धर्मदेशक गुरुः] शान्तिकर गुरुरिव॥
यदुक्तं धर्मं बोद्धैश्च अत्रजैरन्यजैरपि।
अत्र सर्वं[3] शान्तिकरप्रभावाच्च प्रजातकम्॥
इदं शृणु च मैत्रेय पश्चात्कालान्तरे ततः।
इयं या भिक्षुणी [4]चूण्डा सुशीला शीलधारणी॥
प्रवज्या विदधे धर्मधातु वागीश्वरेण सा[5]।
मंजुश्रीशिखरस्यासे गत्वा प्रक्षाल्य चोत्पलात्॥
फलमूलाशनादिश्च फलाहारिणी भिक्षुणी।
तस्मै स्वयम्भुवे नित्यं फलमूलेन पूजितम्॥
ओं चरे चून्दे[6] स्वाहेति मन्त्रेण जापं कुर्वन्ति सर्वदा।
समाकिरच्चानुदिनं ततो भक्तमभूद्यतः॥
प्रतिदिने प्रतिमासे प्रतिवर्षेऽद्य कालके।
[7]अत्रमत्रायामि काले भिक्षुण्यं पूजितम्॥
पुष्पैर्धूपैश्च गन्धैश्च आमिषं परिवर्ज्जि(तं)तः।

---

१ D मन्त्रजं चापि। २ C omits the portion bracketted. ३ D सर्व्वं। ४ D चुण्डा...धारिणी। ५ A प्रवज्या......वागीश्वरे रमा। ६ D ॐ चरे चूरे चून्दे। ७ B अहमामन्त्रयामि, D अत्र

पुरुषस्नेहं परित्यक्त्वा तस्मै पूजामपि कृतम् ॥
ओपि मैत्रेय शीघ्रं त्वं शृणु भिक्षुणीनेमकम् ।
दशाकुशलकं त्यक्त्वा दशकुशलकं[1] कृतम् ॥
पुरुषस्नेहं मैथुनञ्च कार्य्यञ्च सन्त्यजेदपि ।
कृत्वात्र स्थाने भिक्षुणी दश भिक्षो(म)र्महत्फलम् ॥
भिक्षूणश्च मैथुनं च कार्य्यं यापि सकृत्कृतम् ।
सा च भिक्षुणी पापेन वेष्टिता रौरवं व्रजेत् ॥
रौरवं नरकं घोरं अत्यर्थमग्निदाहकम् ।
बहुकल्पं तु भुक्त्वा च घोरं दुःखं च प्रापितम् ॥
पापं(चा) वापि पुण्यं(चा) वापि तस्मै स्थाने कृतादपि
कोटिकाफलं संप्राप्ता[2] संप्रापितं च निश्चयं ॥
पापचित्तं पुण्यचित्तं कर्म्मकार्य्यं कृतं भु(भू)वि ।
दशानां पुरुषाणां च फलमधिकं लभेत् ॥
इति ज्ञात्वा त्वया चून्दे शीघ्रं नेम कुरु कुरु ।
पापचित्तं परित्यज्य सांप्रतं पुण्यचित्तकम् ॥
त्रिसाहस्रे महालोके तच्छादृशं क्षेत्रे न हि ।
इति ज्ञात्वा तत्र स्थाने पापचर्य्यां परित्यजेत् ॥
सर्वेषामपि भूमीनां पापकृतसेकं(क) फलम् ।
तत्रापि कृतपापानां कोटिफलं प्रलभ्यते ॥
पापस्यापि पुण्यस्यापि तत्र कृत्कर्म्मण अपि ।

१ A दशाकशलकं । २ D फलसंप्राप्ता

सर्वेषां भूक्ततानाञ्च कोटिधा फलं लभ्यते ॥
निश्चयं फलं(ल) संप्राप्तं अतीतैः प्रत्युत्पन्नकैः ।
तथागतै(व)र्वच उक्तं तत्र हत्कर्म्मणः फलम् ॥
इति ज्ञात्वा भिक्षुणि(णी) त्वं यत्नेनानेमं त्यजादपि ।
भिक्षुणी नेमं(म) संगृह्य तस्मै पूजां सदा कुरु ॥
अस्योपस्थानचर्य्याथ लक्षणैः युता सा व्रती ।
चून्दा नाम भिक्षुण्यत्र तच्छ्रेवकपरा अपि ॥
पञ्चोपचारविधिभिर्नित्यं पूजां प्रतिदिने ।
सम्यक् कृत्वाष्टाङ्गेणापि पञ्चप्रणामकमपि ।
बहुधा प्रदक्षिणाञ्चापि नानाधारणी संपठन् ॥
अनेगस्तोत्रगाथाञ्च स्तुतिं कृत्वा मुहुर्मुहुः ।
कायवाक्चित्त एकेन मंजुश्रीपर्वते स्थितात् ॥
प्रतिरात्रौ प्रतिदिने तस्मै सदा प्रपूजितम् ॥
प्रातःकाले मध्याह्ने च सायंकाले तथा अपि ।
रात्रिकाले चतुसंधे सा तस्मै पूजितं महत् ॥
[1]अस्य पुण्यप्रभावेन इतो द्वादशवत्सरे ।
पञ्चाभिज्ञविराशी सा भविष्यति न संशयः ॥
दिव्यचक्षुर्दिव्यश्रोतं[2] दिव्यघ्राणं तथा अपि ।
परचित्तज्ञानं वापि पूर्वनिवासाञ्च[3] अपि ॥
एवं पञ्चाभिज्ञपदं तथागतैश्च वर्णितम् ।

---

१ A अत्यपुण्य० । २ D ०श्रोत्रं । ३ D ०निवासाञ्च ।

पञ्चाभिज्ञञ्च संप्राप्ता निः(नि)संशयं भविष्यति ॥
सर्वज्ञवचनं श्रुत्वा सा चून्दा[1]नाम भिक्षुणी ।
शाक्यसिंहप्र(प्रा)सादाच्च पञ्चाभिज्ञफलं लभेत् ॥
पञ्चाभिज्ञफलं लब्धात् शाक्यसिंहप्र(प्रा)सादतः ।
चून्दा[2]नाम भिक्षुणी सा अत्यर्थं शोभनं भवेत् ॥
इत्युक्त्वा गुरुः शास्ता शाक्यसिंहस्तथागतः ।
मैत्रेयादिभ्यः शिष्येभ्यः स्वयम्भु(व)वः पुराणकम् ॥
एवमुक्ते अपि सद्यः[3] मैत्रेय शिष्यनायकः ।
एवं श्रुत्वा पुनरपि शाक्यसिंहमुवाच सः ॥
भगवन् शान्तिकन्नाम तस्याभवत्कथं प्रभो ।
तद्धेतुं[4] श्रोतुमिच्छामि समुपादेष्टुमर्हति ॥
इति संप्रार्थिते तेन मैत्रेयेन (स)सः सर्ववित् ।
भगवान्तमहासत्वं संपश्यन्[5] एवमादिशत् ॥
शृणु मैत्रेय वक्ष्यामि शान्तिकरस्य सद्गुणम् ।
योऽसौ राजा महासत्वः सद्धर्मगुणलालसः ॥
त्यक्त्वा कामं सुखं राज्यं तीर्थयात्रां मुदाचरत् ।
स सर्वेष्वपि तीर्थेषु स्नात्वा दानं कृतेन[6] च ॥
चिरत्नानां समाराध्य संचरत्पोषधं व्रतम् ।
ततोऽसौ सुमति विज्ञो बोधिसत्व जगद्धिते ॥

---

१ D चूदा । २ D चूड़ा । ३ D सद्य । ४ D तद्हेतु ।
५ D भगवन्तं...संपश्यं । ६ D दानकृतेन च ।

वज्रचर्य्याव्रतं धृत्वा प्रचचार समाहितः ।
ततस्तच्छिलयाच्छाद्य[१] धर्म्मधातुं स्वयम्भुवं ॥
इष्टिकाभिर्महत् स्तूपं विधाय गोपयेदिदम् ।
ततः पञ्चपूरे तेन स्थापितं पञ्चदेवता ॥
मंजुश्रियमिदं चैत्रमनेन च महत्कृतम् ।
एवं कृत्वाच सर्वाणि देवानि स्थाप्य महामतिः ॥
बोधिसत्वो महाभिज्ञः[२] प्रचचार जगद्धिते ।
ततस्तेन महोत्पातं समीकृत्य समन्ततः ॥
भद्रश्रीमंगलोत्साहं महभद्रं[३] भवन्ति हि ।
ततश्चासौ[४] महाभिज्ञो वृष्टिदोष प्रवर्त्तते ॥
नवनागान्समावाह्य सुवृष्टिं संप्रवर्त्तते ।
एवं सः त्रिगुणाभिज्ञो महोत्पातं शान्तिकृतम् ॥
शुभं कृत्वा सदा तेन शान्तिकर इति स्मृतः ।
ईदृग्मन्त्री महाभिज्ञो व(जा)ज्राचार्य्य महामतिः ।
ऋद्धिसिद्धिसुसंपन्नो न भूतो न भविष्य च ।
एवमुक्ते शाक्यसिंह मैत्रेय शिष्यनायकः ॥
एवं श्रुत्वा पुनरपि शाक्यसिंहमुवाच सः ।
भगवन्गुरो शाक्यसिंह भूतं वर्त्तञ्च वादितम् ॥
भविष्यकालके तत्र कथं किं किं भविष्यति ।
सर्वज्ञत्वं जनानाथ भविष्यं सर्वं जानितम्[५] ॥

१ A तत तच्छिलयाच्छाद्य, D ततः सच्छिलयाशाद्य । २ D बोधिसत्व-महाभिज्ञः । ३ D महद्भद्रं । ४ D ततोचासौ । ५ D सर्व्वं जानितं ।

किं किं वापि देवता च तत्र नेपालमण्डले ।
प्रादुर्भूता भविष्यन्ति तत्सर्वं ब्रूहि सत्प्रभो ॥
अथ शाक्यमुनिः शास्ता सर्वज्ञ नायको गुरुः[१] ।
भवि(ष्य)ष्ये वर्त्तके वृत्तिं[२] मैत्रेयाय उवाच सः ॥
मैत्रेय शृणु साधु च सुष्ठु च मनसि कुरु ।
भविष्येऽहं सत्वार्थाय सत्वानां हितकाम्यया ॥
ब्रह्मक्षत्रिय[३] वैश्यानां शूद्राणां अन्यजा(ति)तीनाम् ।
अन्यदेशाचायातानां हिताय च सुखाय च ॥
भविष्यकालके चात्र नेपालमण्डले ।

अपि च ।

पूर्वदिक्चारुशिखरे लोकेश्वरं समुद्भूतम् ।
पश्चिमाननमूर्त्तिना चम्पवृक्षस्कन्धोपरि ॥
जाम्बूनदस्वर्णरूपमत्यर्थं शोभितं वपुः ।
हरि हरि हरि वाहनोद्भूतं च लोकेश्वरम् ॥
कीलेश्वरस्य ईशाने भविष्यति समुद्भूतम् ।
अत्रजैः ब्राह्मणैः सर्वैः क्षत्रियैश्च विशेषतः ॥
नाम्ना नारायणं कृत्वा सदा पूजां करिष्यति ।
ततः पश्चाद्वाग्मतीतीरे मृगस्थलस्य[४] दर्य्यामपि ॥
वाग्मत्याः समतीरे च लोकेश्वरं समुद्भूतम् ।
त्रैलोक्यवशंकरं च नाम[५] लोकेश्वरमपि ॥

---

१ D० नायकगुरुः । २ D वृत्ति । ३ D ०क्षेत्रिय० ।
४ B मृगस्थले D मृगस्थरस्य । ५ D नाग० ।

हरिहरहिरण्यगर्भगणेशगणैरपि ।
नानायोगिनीवृन्दैश्च मातृकाभिः परिवृतः ॥
अनेगैः स्वर्गजैः सार्द्धं समुद्भूतं लोकेश्वरम् ।
दक्षिणाननमूर्त्तिना अघोरवस्तुस्वस्थितम् ॥
त्रैलोक्यवशंकरंच लोकेश्वरं समुद्भूतम् ।
अत्रजैर्वाह्मणैर्भट्टैः क्षत्रियैः शूद्रकैरपि ॥
करिष्यति सदा पूजां पशुपतिं(ति) प्रईरितम् ।
ततोऽपि दीर्घकालेऽत्र महासमन्त[१]राजकूले ॥
यक्षमल्लस्तत्र राज्ये समुद्भूताद्राज्यं कृतम् ।
तेन राज्यकृते अत्र श्रीमल्लोकनाथमपि ॥
साधकगणेभिः सार्द्धं स्थापितं तस्य राज्यके ।
पश्चिमाननमूर्त्तिना यमलेश्वरस्थाने अपि ॥
एकदेवालये सिद्धे तत्रैव मण्डले अपि ।
ब्रह्मभिः क्षत्रियैर्वैश्यैः शूद्रैश्च अत्रजैरपि ॥
यक्षमल्लस्थापिताच्च यमलेश्वरं प्रईरितम् ।
ततः पश्चाद्दीर्घकाले गन्धावत्यास्तपर्य्यपि ॥
गन्धेश्वराद्याम्ये च लोकेश्वरं प्रथापितम् ।
खसर्पनामरक्तञ्च वन्धुकवस्तु[२]रूपकम् ॥
उत्तराननमूर्त्तिना स्थापितञ्च भविष्यति ।
ततः पश्चाद्दीर्घकालेऽत्र भविष्य[३]कालके अपि ॥
महासमन्तकूले चापि एकराजा भविष्यति ।

१ A D महामन्त० ।   २ D सरुपकं ।   ३ B भविष्ये ।

नाम्नापि नरेन्द्रदेवः पुत्रवत्पालितः प्रजाः ॥
तस्मै स्वयम्भुवे नित्यं त्वया सेवां कृतमपि ।
पूर्ववंशानुशासेन सदा श्रीशम्भवे[1] अपि ॥
प्रतिरात्रौ प्रतिदिने तस्मै सदा प्रपूजितम् ।
पञ्चोपचारविधिभिः महोत्साहैरपि तथा ॥
दिने रात्रौ मासे वर्षे सदा तस्मै प्रपूजितम् ।
केचित्पञ्चप्रणामेन केचिच्च अष्टाङ्गके ॥
केचित्प्रदक्षिणां कृत्वा प्रणिपत्य प्रतिदिने ।
यथा च पूर्वगैर्वंशैस्तस्मै प्रपूजितं सदा ॥
तथानेन नरेन्द्रेण पूजितं स भविष्यति ।
तस्य कालेऽपि नेपाले द्वादशवार्षिकमपि ॥
अत्यर्थेनापि युक्तेन अनावृष्टिं[2] भविष्यति ।
अनावृष्टिरतियुक्तात्[3] प्रजाश्च दुःखपीड़िताः ॥
प्रजानामत्यर्थं तस्यासह्यं भविष्यति ।
अथ तेन नरेन्द्रेण प्रजादुःखमसह्यकात् ॥
एकचित्तेन मनसा चिन्तापरं भविष्यति ।
नरेन्द्रेणापि राज्ञा च दैवज्ञेषु नैमित्तिकाम् ॥
आचार्य्याणां ब्राह्मणानां मध्ये श्रुत्वात् प्रज्ञास्यति ।
मनसा चित्तशुद्धेन श्रीशम्भोश्च प्रसादतः ।
शान्तिकरशिष्यश्चैव बन्धुदत्तं प्रज्ञास्यति ॥

---

१ D शम्भुवे । २ D अनावृष्टि । ३ D ०युक्तान् ।

ततः पश्चान्नरेन्द्रेण बन्धुदत्तं विज्ञापितात् ।
बन्धुदत्तेन यदुक्तं तत्प्रकारं करिष्यति ॥
बन्धुदत्तः सिद्धाचार्य्यं नरेन्द्रविनतिं कृतात् ।
मनसा एकचित्तेन विचार्य्यञ्च करिष्यति ॥
विचार्य्यञ्च कृतात् पश्चान्नरेन्द्रेण विज्ञापितात् ।
नरेन्द्रेण सामग्री पूर्णं दत्वा लोकेश्वरमाराधितम् ॥
प्रथमं मणिचूडे च पर्व्वते च विशेषतः ।
सर्व्वबुद्धडाकिनीञ्च[1] शान्तिशिष्यः प्रथापितम् ॥
ततो भद्रनदीतौ(रे)ले पर्व्वते च विशेषतः ।
वज्रवर्णनीं देवीञ्च[2] प्रथापितं भविष्यति ॥
ततोऽपि तद्देशे च वज्रवैरोच(नी)नीं तथा ।
खगान(ना)नां मध्ये कृत्वा त्रिलोनवत् स्थापिष्यति[3] ॥
ततो गन्धावतीतीरे पर्व्वतयाम्याघेषु च ।
विघ्नान्त(क)कं दशक्रोधं प्रथापितं भविष्यति ॥
किं किं यमान्तकञ्चैव पद्मान्तकमपि तथा ।
इत्यादि क्रोधराजाञ्च प्रथापितं भविष्यति ॥
शान्तिकरशिष्यवंशो नागार्ज्जुन[4]वंशमपि ।
गुरुवंशमूलं कृत्वा बन्धुदत्तर[5]साधकः ॥
बन्धुदत्तः स आचार्य्यं इत्थं कृत्वा मुदा अपि ।

१ D ०डाकिनी च । २ D वज्रवर्णिनी देवी च । ३ D स्थापिष्यन्ति । ४ D वंशे नागार्ज्जुन० । ५ A बन्धत्तर० ।

अत्रजानां मनुष्याणां हिताय च सुखाय च ॥
तिर्य्यगादिपशूनाञ्च अन्यत्रवासिनामपि ।
तृणभूमिरुहानाञ्च हिताय च सुखाय च ॥
नागार्ज्जुनोथ वंशो च बन्धुदत्त साधकं[1] कृतात् ।
कापोतलपर्व्वताञ्च समानीतं लोकेश्वरम् ॥
लोकेश्वरं समानीतादत्र नेपालमण्डले ।
रथजात्रां[2] प्रतिदेशे कृत्वा एवं भविष्यति ॥
प्रतिवर्ष राढ़ामासे रथयात्रां करिष्यति ।
विशेषेणात्र नेपाले महद्यात्रां भविष्यति ॥
ततः प्रभृति भविष्ये स्वयम्भुवः प्रभावतः ।
आर्य्यावलोकितेश्वर प्रशन्नाच्छो[3]भिक्ष्यं भवेत् ॥
इति ज्ञात्वा मानवाश्च ब्रह्मक्षत्रियवैश्यजाः ।
शूद्रादयोऽन्यलोकाश्च सदा बौद्धं सपूजितम् ॥
सदा बौद्धं[4] सपूज्यात्र स्वयम्भोश्च प्रभावतः ।
लोकनाथप्रभावाच्च सुभिक्ष्यं च[5] भविष्यति ॥
पुनरपि शृणु मैत्रेय असौ नेपालवृत्तिकम् ।
भूते दीर्घे वर्त्तमाने बौद्धधर्म्मश्च केवलम् ॥
अनेकैर्जनसङ्कीर्णं भिक्षुभिक्षुण्युपाश(स)कैः ।
बोधिसत्वै महासत्वैः वाशितं तत्र सर्व्वदा ॥

१ D ०शोधकम् । २ D ०जात्रा । ३ D प्रशादाच्छौभिक्ष्यं ।
४ D बौद्ध । ५ D सुभिक्षञ्च ।

यस्मिं स्वयम्भूरुत्पन्नादिशेषैरत्र मण्डले ।
अद्यास्मिनपि[१] काले च केवलं बुद्धधर्मकृत् ॥
इति ज्ञात्वा अत्रजा वा अन्यदायातजा अपि[२] ।
विशेषेणात्र नेपाले शम्भूपूजां करोति च ॥
यदा भविष्ये काले च[३] अत्र नेपालमण्डले ।
शैवधर्मं प्रवर्त्तते[४] दुर्भिक्षञ्च भविष्यति ॥
यथा यथा शैवधर्मं प्रवर्त्ततेऽत्रमण्डले ।
तथा तथा च अत्यर्थं दुःखपीड़ा भविष्यति ॥
बौद्धलोका गणा येऽपि शैवधर्मं करिष्यति ।
ते सर्व्वे कृतपापा(च)श्च नारकञ्च गमिष्यंति ॥
शैवलोका जना येऽपि बौद्धधर्मं प्रवर्त्तते ।
तस्य पुण्यप्रशादाञ्च सुखावतीं गमिष्यति ॥
ये च या वा मानुष्यात्र बौद्धनिन्दा करिष्यति ।
ते सर्व्वे कृतपापाश्च पापभोग्यं करिष्यति ॥
मनुष्या ये च या वात्र बौद्धपूजां करिष्यति ।
तस्य पुण्यप्रशादाञ्च स्वर्गभोग्यं प्रापिष्यति ॥
तत्पुराणं श्रुत्वा पूज्य स्वर्गलोकं गमिष्यति ।
तत्पुराणं श्रुत्वा निन्दन्[५] नारकञ्च गमिष्यति ॥
यूयमपि शिष्याः सर्व्वे केवलं शम्भू पूजय ।

---

१ D अद्यास्मिमपि । २ D अन्यजा यातजात्यपि ।
३ D भविष्यकाले च । ४ D शैवधर्म्मप्रवर्त्तन्ते । ५ D निन्द्य ।

शम्भूपुराणकं वार्त्तां गौरवेण शृणु[१] सदा ॥
इति श्रुत्वा ज्ञात्वा[२] यूयं सर्व्वे शिष्या गणापि च ।
सर्व्वकालं स्वयम्भोश्च पूजां कुरु धर्म्मश्रुतः ॥
अहमपि च मैत्रेय बोधिमूले सुसंस्थितः ।
सम्बोधिज्ञानप्राप्ताच्च अत्रायामि च सम्भूवि[३] ॥
वीर्य्यवतां समर्थोऽहं सप्तबुद्धानाञ्च अपि ।
अतीतानागतानाञ्च सर्व्वज्ञानां विशेषतः ॥
इति वोचज्जगच्छ्रेष्ठः शाक्यसिंहो जगद्गुरुः ।
श्रुत्वेति काश्यपप(रा)त्वा भिक्षवो बोधिमार्गगा ॥
मैत्रेयप्रमुखा देवा नागलोका(काः) सुरादयः ।
सा च सर्व्वावति(ती)पर्षदनुमोदन्त इत्यपि ॥
यथागतः शाक्यसिंह अत्र नेपालमण्डले ।
तथागतस्त्वयःचिंशे[४] शिष्यगणैः परिवृतः ॥
यत्र माता प्रतिष्ठति[५] तत्र नाक[६] गत अपि ।
स्वल्पमात्र सद्धर्म्मञ्च देशयति तथागतः ॥
ततः प्रभृति कालेऽत्र अन्यजा अत्रजा अपि ।
पञ्चोपचारविधिभिः सदा तस्मै प्रपूजितम् ।
प्रतिदिने प्रतिमासे प्रतिवर्षे मुदा सदा ॥
तत्पुराणं प्रतिश्रुत्वा श्रीस्वयम्भोश्च पूजितम् ।

---

१ D वार्त्तां गौरवे शृणु ।   २ A omits ज्ञात्वा ।   ३ D प्राप्ता च अत्रायामि च शंभवि ।   ४ D त्रयचिंशे ।   ५ D प्रतिष्ठन्ति ।   ६ D नाके ।

पृथ्वौ सुमङ्गलवरे शुभपूर्णयुक्ते
स्वर्गेऽपि उष्णीषपदे सुरलोकश्रेष्ठे ।
शम्भोःपुराणमहिमां प्रश्रुता जना यत्
सन्तिष्ठते बुद्धगुणे सुगुणेन भूषे ॥

इति श्रीस्वयम्भूचैत्यभट्टारकोद्देशे महाप्रभाववर्णनो नामाष्टमोऽध्यायः परिसमाप्तः ॥०॥

समाप्तश्चेदं पौराणं मङ्गलाकालोऽध्यायकम् ॥०॥
श्रीस्वयम्भुवः पुराणं मञ्जुश्रियाकृतमिति ॥
ये धर्म्मा हेतुप्रभवा हेतुस्तेषां तथागत ह्यवदत् ।
तेषां यो निरोध एवंवादी महाश्रमणः ॥

सम्बत् ९१९। पौषकृष्ण ११ श्वपुक्ष्धूंकाञ्जर॥ शुभमस्तु सर्व्वदा। स्वपुत्रीजगत्लक्ष्मीनामधेयायी स्वर्गगतार्थं दुर्गतिमोचनसद्गतिप्राप्तिकामनार्थं इदं सुपुस्तकं स्वयम्भूपुराणं मुदा लेखयामि। तस्य पुण्यस्यानुभावात् भद्रं भवन्तु सर्व्वजगतां भूयमन्तु सदा शुभं। लिखित वजधृत् चक्रमहाविहारधिष्ठित जगद्गुरुसागरः ॥

# स्वयम्भूपुराणम्

## अकारादिवर्णक्रमेण बौद्धपारिभाषिकशब्दानां संज्ञाशब्दानाञ्च सूची ।

### अ ।

## इ ।



## ई ।



## उ ।

## ख ।



## ग ।

## घ।



## च।

## ज ।

## द ।

## न ।

## प।

## फ ।

## ब ।

## भ।

## म ।

## ल ।



## व ।

## श ।

## ष ।



## स ।

## ष।



## स।

## ह ।